विदार्य भित्त्वा एतया ब्रह्मरन्ध्रवाच्यया द्वारा छिद्रेण प्रापद्यत । देहमध्ये प्रवि
इत्यर्थः । 'अन्तः प्रविष्टं कर्तारमेतं', 'भर्ता सन् ध्रियमाणो बिभर्ति', 'एवं
देवो बहुधा संनिविष्टः', 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरु
त्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' इत्यादिमन्त्र
ब्राह्मणवादानप्यत्र सूचयन्ति इत्याद्या श्रुतय इति ॥ २३ ॥

परमात्मैव क्षेत्रज्ञ इति श्रुत्युक्तेऽर्थे स्मृतीरप्युदाहरति—

स्मृतयोऽपि 'आत्मैव देवताः सर्वाः', 'नवद्वारे पुरे देही',
क्षेत्रज्ञं चापि मां विद्धि', 'समः सर्वेषु भूतेषु', 'उपद्रष्टानुमन्ता
च', 'उत्तमः पुरुषस्त्वन्यः', 'अशरीरं शरीरेषु' इत्याद्याः ।
तस्मात् जात्यन्वयसंस्कारवर्जितस्त्वमिति सिद्धम् ॥ २४ ॥

स्मृतयोऽपीति । शरीरे वर्तमानस्यापि शरीरधर्माऽसंस्पर्शित्वे श्रुतिं
प्रमाणयति—अशरीरं शरीरेष्विति । 'स पर्यगाच्छुक्रमकायमव्रणमस्ना
विरं शुद्धमपापविद्धम्' इत्यादिश्रुतय आदिशब्दार्थः । यस्मादेवं श्रुतिस्मृति
न्यायैरात्मा देहादेर्भिन्नः असङ्गः तदसंस्पृष्टश्च तस्मादिति । प्रकृतमुपसं
रति—तस्मादिति ॥ २४ ॥

एवं परमात्माभेदोपदेशेन जीवस्य जात्यन्वयसंस्कारराहित्यमुक्तमवधा
तत्र स्वानुभवविरोधं शङ्कते—

स यदि ब्रूयात्—अन्य एवाहमज्ञः सुखी दुःखी बद्धः संसा
री—अन्योऽसौ मद्विलक्षणः असंसारी देवः तमहं बल्युपहा
नमस्कारादिभिः वर्णाश्रमकर्मभिश्चाराध्य संसारसागरादुत्तिती
र्षुरस्मि कथमहं स एवेति ॥ २५ ॥

स यदीति । अज्ञत्वादेः स्वात्मन्यनुभवसिद्धत्वात् तद्विलक्षणेश्वरात्म
श्रुत्यादिभिरुक्तमपि न संभावयामि किंतु भिन्नमेव तमहं मन्ये उत्कृष्टमीश्व
निकृष्टसंसार्यात्मना पश्यतः प्रत्यवायापत्तेः । अतस्तं देवं स्वकर्मणा भक्त्या
च आराध्य तत्प्रसादान्मुक्तसंसारो भविष्यामीति मे मतिरिति शिष्याभिप्रा
इत्यर्थः ॥ २५ ॥

मैवं वादीः भेददर्शन एव प्रत्यवायश्रवणात् इति गुरुः परिहरति—

आचार्यो ब्रूयात्—नैवं सोम्य, प्रतिपत्तुमर्हसि प्रतिषि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वाद्भेदप्रतिपत्तेः । कथं प्रतिषिद्धा भेदप्रतिपत्तिरित्यत आह—'अन्योऽसावन्योऽहमस्मीति न स वेद', 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद', 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्येवमाद्या ॥ २६ ॥

नैवं सोम्येति । संग्रहवाक्यं आक्षेपसमाधानाभ्यां विवृणोति—कथमित्यादिना । प्रत्यक्षसिद्धस्य भेदस्य कथं तद्विरुद्धप्रमाणान्तरेण प्रतिषेध इत्याक्षेपार्थः । असंसारीश्वरस्य अप्रत्यक्षत्वात्तद्भेदस्य स्वात्मनि प्रत्यक्षत्वाभावात् सुखित्वाद्यनुभवस्य भ्रान्त्याप्युपपत्तेः तद्बलात् भेदाध्यवसायायोगात् । अन्यथा सिद्धार्थश्रुतिनिषिद्धो भेदो न मानमर्हतीति समाधानाभिप्रायः । तथाहि अन्योऽसौ परमेश्वरो मद्विलक्षणः अन्योऽहं तद्विलक्षणः संसार्येवेति योऽन्यां देवतामुपास्ते तात्पर्येण पश्यति न स वेद तत्त्वमिति भेददर्शनस्य अविद्यामूलत्वमुक्त्वा 'यथा पशुरेवं स देवानाम्' इति देवपशुत्वप्राप्तिं तस्य दर्शयन्ति । नहि पराधीनात्मत्वतोऽन्यद्दैन्यं कष्टं वा वर्तत इति । तथा योऽन्यत्र अन्यदेवेदमित्यात्मनः पृथगेव ब्रह्म ब्राह्मणजातिं वेद तं तदेव ब्रह्म ब्राह्मणत्वजातिः परादात् पराकुर्यात् तत्त्वविमुखं कुर्यात् । आत्मरूपं मामनात्मतया पश्यतीति द्वेष्ट्येव नतु हितमावहतीत्यर्थः । एवं 'क्षत्रं तं परादात्' इत्यादि 'सर्वं तं परादात्' इत्यन्तमुदाहरणं द्रष्टव्यम् । इहात्मनि यो नानेव पश्यति । इवशब्दो नानात्वदर्शनस्य आभासत्वद्योतनार्थः । स मृत्योर्मृत्युं संसारात्संसारं अनर्थपरम्परामेवाप्नोतीत्यर्थः । इत्येवमाद्या इति । 'नेह नानास्ति किंचन', 'उदरमन्तरं कुरुते । अथ तस्य भयं भवति' इत्याद्याः श्रुतयो गृह्यन्ते ॥ २६ ॥

उदाहृताः श्रुतयो न भेददर्शनमात्रं निषेधन्ति किंतु भेददर्शिनः प्रत्यवायमपि अनर्थप्राप्तिरूपमावेदयन्तीत्याह—

एता एव श्रुतयो भेदप्रतिपत्तेः संसारगमनं दर्शयन्ति ।२७।

एता एवेति ॥ २७ ॥

भेददृष्टिं निन्दित्वा अभेददृष्टिं फलवत्तया प्रशंसन् तस्या एव उपादेयतां दर्शयति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभेदप्रतिपत्तेश्च मोक्षं दर्शयन्ति सहस्रशः 'स आत्मा तत्त्व मसि' इति परमात्मभावं विधाय 'आचार्यवान्पुरुषो वेद' इत्यु क्त्वा 'तस्य तावदेव चिरम्' इति मोक्षं दर्शयन्त्यभेदविज्ञानादेव सत्याभिसंधस्यातस्करस्येव दाहाद्यभाववत् संसाराभावं दर्श यन्ति दृष्टान्तेन—भेददर्शनादसत्याभिसंधस्य संसारगमनं दर्श यन्ति तस्करस्येव दाहादिदृष्टान्तेन ॥ २८ ॥

अभेदप्रतिपत्तेश्चेति। तत्र श्रुत्येकदेशमुदाहृत्य व्याचष्टे—स आत्मे त्यादिना। तत्रैव अन्वयव्यतिरेकोपपत्तिपरश्रुत्यर्थमुदाहरन् उक्तमर्थं द्र यति—अभेदविज्ञानादेवेति। 'पुरुषं सौम्योत हस्तगृहीतमानयन्ति' इ खण्डे इममर्थं दर्शयतीत्यर्थः ॥ २८ ॥

सुषुप्तौ परमात्मन्यभेदसंपत्तावपि तथा ज्ञानाभावापराधादेव पुन व्याघ्रादिभावेनोत्थितानां संसाराविच्छेदं दर्शयति श्रुतिः परमात्माभेदेना ज्ञानमेव मोक्षहेतुः इति सूचयतीत्यभिप्रेत्याह—

'त इह व्याघ्रो वा' इत्यादिना च अभेददर्शनात् 'स स्वरा भवति' इत्युक्त्वा तद्विपरीतेन भेददर्शनेन संसारगमनं दर्श यन्ति—'अथ येऽन्यथाऽतो विदुरन्ये राजानस्तेऽक्षय्यलो भवन्ति' इति प्रतिशाखम्। तस्मात् मृषैवैवमवादीः ब्राह्मण त्रोऽदोन्वयः संसारी परमात्मविलक्षण इति ॥ २९ ॥

त इह व्याघ्रो वेत्यादिना चेति। अत्रैव उदाहरणान्तरमाह-अभे दर्शनात् स स्वराडित्यादिना। 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरु ऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति' 'यदा ह्येवैष ए स्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' इत्याद्याः श्रुतयोऽप्युदाहर्त इत्याह—इति प्रतिशाखमिति। यस्मादेवं भेददर्शननिन्दया अभेदद नस्तुत्या च जीवस्य ब्रह्माभेदोऽवधारितः अतो ब्राह्मणत्वाद्यभिमानस्य आत्म मिथ्यादृष्टित्वं सिद्धं इति। प्रकृतमुपसंहरति—तस्मादिति ॥ २९ ॥

यदुक्तं तमहं बल्युपहारनमस्कारादिभिर्वर्णाश्रमकर्मभिराराध्येति सा दृष्टिः भेददर्शनापवादादेव न सम्यग्दृष्टिरित्याह—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात् प्रतिषिद्धत्वाद्भेददर्शनस्य भेदविषयत्वाच्च कर्मोपादानस्य कर्मसाधनत्वाच्च यज्ञोपवीतादेः कर्मसाधनोपादानस्य परमात्माऽभेदप्रतिपत्त्या प्रतिषेधः कृतो वेदितव्यः । कर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमात्माभेदप्रतिपत्तिविरुद्धत्वात् । संसारिणो हि कर्माणि विधीयन्ते तत्साधनानि च यज्ञोपवीतादीनि न परमात्मनोऽभेददर्शिनः । भेददर्शनमात्रेण च ततोऽन्यत्वम् ॥ ३० ॥

तस्मात्प्रतिषिद्धत्वादिति । भेदविषयत्वाच्च कर्मोपादानस्येति । क्रियाकारकफलभेदाश्रयमन्तरेण कर्मणः स्वरूपासिद्धिरित्यर्थः । 'यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा' इति श्रुतेः यज्ञोपवीतधारणादेः कर्मसाधनत्वावगमात् साध्यकर्माभावे तत्साधनपरिग्रहो निरर्थक इत्यभिप्रेत्याह—कर्मसाधनत्वाच्च यज्ञोपवीतादेरिति । कर्मसाधनयोरुपादानं कर्मसाधनोपादानं तस्येति विग्रहः । कथं अभेदप्रतिपत्तिमात्रेण कर्मतत्साधनप्रतिषेधसिद्धिः । कर्मणोऽपि अभेदप्रतिपत्तिसंभवात् इत्याशङ्क्याह—कर्मणामिति । ब्रह्माहं कर्ता चाहमिति विरुद्धप्रतिपत्त्योरेकस्मिन्पुरुषे समुच्चयायोगादित्यर्थः । तर्हि अधिकार्यभावात् निरालम्बनं कर्मकाण्डमप्रमाणं स्यादिति नेत्याह—संसारिणो हीति । संसारिणो जात्याद्यभिमानवत इत्यर्थः । न परमात्मनोऽभेददर्शिन इत्यर्थः । संसारिणोऽपि परमात्मानन्यत्वात्कथं तस्य कर्मविधिः इत्यत आह—भेददर्शनमात्रेण च ततोऽन्यत्वमिति । न वस्तुवृत्त्या भेदापेक्षा कर्मविधेः इति भावः ॥ ३० ॥

यदुक्तं ब्रह्मात्मैक्यप्रतिपत्त्या कर्मणां तत्साधनानां च श्रुत्या प्रतिषेधः कृत इति तद्व्यतिरेकमुखेन साधयति—

यदि कर्माणि कर्तव्यानि न निवर्तयिषितानि कर्मसाधनासंबन्धिनः कर्मनिमित्तजात्याश्रमाद्यसंबन्धिनश्च परमात्मनश्च आत्मनैवाभेदप्रतिपत्तिं नावक्ष्यत् 'स आत्मा तत्त्वमसि' इत्येवमादिभिर्निश्चितरूपैर्वाक्यैः, भेदप्रतिपत्तिनिन्दां च नाभ्यधा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यत् 'एष नित्यो महिमा ब्राह्मणस्य', 'अनन्वागतं पुण्येनान न्वागतं पापेन, अत्र स्तेनोऽस्तेनः' इत्यादिना ॥ ३१ ॥

यदि कर्माणीत्यादिना । परमात्मनश्च इति चकारादात्मनो ब्रह्म वाभेदप्रतिपत्तिमिति योज्यम् । एवमादिरिति । अहं ब्रह्मास्मीत्यादिवाक गृह्यते । निश्चितरूपैर्वाक्यैरिति । संवादिविसंवादिप्रमाणान्तरासिद्धवि षयत्वे सति अनन्यशेषतया च स्वार्थैकपरत्वेन निर्णीतस्वभावैरित्यर्थः भेदप्रतिपत्तिनिन्दामिति । 'मृत्योः स मृत्युम्' इत्यादिभिर्वाक्यैरि शेषः । ब्राह्मणस्य ब्रह्मविदः । स हि मुख्यो ब्राह्मणः 'स ब्राह्मणः' इति श्रु रित्यर्थः ॥ ३१ ॥

उदाहृतवाक्यानां क्रमेण तात्पर्यमाह—

कर्मासंबन्धिस्वरूपत्वं कर्मनिमित्तवर्णाद्यसंबन्धरूपतां नाभ्यधास्यत् कर्माणि च कर्मसाधनानि च यज्ञोपवीतादी यद्यपरितित्याजयिषितानि तस्मात् ससाधनं कर्म परित्यक्त मुमुक्षुणा परमात्माऽभेददर्शनविरोधात् आत्मा च पर एवे प्रतिपत्तव्यो यथाश्रुत्युक्तलक्षणः ॥ ३२ ॥

कर्मासंबन्धीत्यादिना । यदि कर्मादीनि न परितित्याजयिषित तर्हि एवमुक्तं सर्वं नाभ्यधास्यदिति संबन्धः । अभिधत्ते तु श्रुतिः तमर्थम्, अतो ब्रह्मात्मज्ञानमिच्छता कर्मादीनि परित्याज्यानीत्याह तस्मादिति ॥ ३२ ॥

तदेवं आगमावष्टम्भेन निरूपितं ब्रह्मात्मैक्यं युक्त्यापि व्यवस्थापयितुं उत्त ग्रन्थः । तत्राक्षेप्ता शिष्यो जीवपरमात्मानौ वस्तुतोभिन्नौ विरुद्धधर्मसंसर्गि त्वात् शीतोष्णवत् इत्यनुमानेन प्रत्यवतिष्ठत इत्याह—

स यदि ब्रूयात् भगवन्, दह्यमाने छिद्यमाने वा देहे प्रत्यक्ष वेदना–अशनायादिनिमित्तं च प्रत्यक्षं दुःखं मम। परश्चायमात्मा 'अयमात्माऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपि पासः सर्वगन्धरसवर्जितः' इति श्रूयते सर्वश्रुतिषु स्मृतिषु च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथं तद्विलक्षणः अनेकसंसारधर्मसंयुक्तः परमात्मानमात्मत्वेन च मां संसारिणं परमात्मत्वेन अग्निमिव शीतत्वेन प्रतिपद्येयम् । संसारी च सन् सर्वाभ्युदयनिःश्रेयससाधने अधिकृतः अभ्युदयनिःश्रेयससाधनानि कर्माणि तत्साधनानि च यज्ञोपवीतादीनि कथं परित्यजेयमिति ॥ ३३ ॥

स यदीत्यादिना । एवं विरुद्धधर्मवत्त्वहेतुमुपपाद्य अनुमानमाह—कथं तद्विलक्षण इति । एवंसति भेदस्य तात्त्विकत्वेन कर्मतत्साधनपरित्यागात्मकस्य संन्यासस्य नास्त्यवसर इत्याह—संसारी चेति ॥ ३३ ॥

तत्रानुमाने तावद्धेत्वसिद्धिं दर्शयितुं उपक्रमते—

तं प्रति ब्रूयात्—यदवोचो दह्यमाने छिद्यमाने वा देहे प्रत्यक्षा वेदनोपलभ्यते ममेति तदसत् । कस्मात् । दह्यमाने छिद्यमान इव वृक्षे उपलब्धुरुपलभ्यमाने कर्मणि शरीरे दाहच्छेदवेदनाया उपलभ्यमानत्वात् दाहादिसमानाश्रयैव वेदना । यत्र हि दाहः छेदो वा क्रियते तत्रैव व्यपदिशति दाहादिवेदनां लोकः न वेदनां दाहाद्युपलब्धरीति । कथं । क्व ते वेदनेति पृष्टः शिरसि मे वेदना उरसि उदरे इति वा यत्र दाहादिस्तत्रैव व्यपदिशति न तूपलब्धरीति । यद्युपलब्धरि वेदना स्यात् वेदनानिमित्तं वा दाहच्छेदादि वेदनाश्रयत्वेनो(नव्य)पदिशेद्दाहाद्याश्रयवत् ॥ ३४ ॥

तं प्रति ब्रूयादित्यादिना । जीवपरमात्मानाविति किं उपाधिभेदविशिष्टं वस्तु यथाप्रतिपत्ति निर्दिश्यते किंवा चैतन्यमात्राकारम् । आद्ये बाधव्यभिचारौ । आकाशभेदवदौपाधिकस्य भेदस्य अवास्तवत्वात्, भेदमात्रसाधने सिद्धसाधनत्वाच्च इत्यभिप्रेत्य द्वितीयेऽसिद्धिमुक्त्वा तामुपपादयति—तदसत्कस्मादित्यादिना । वृक्ष इव दह्यमाने छिद्यमाने शरीरे दाहच्छेदनवेदनाया उपलभ्यमानत्वात् दाहादिसमानाश्रयैव दाहच्छेदादिवेदनेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योजना। शरीरस्यैव तदुपलब्धृत्वशङ्कां वारयितुं तद्विशिनष्टि—कर्मणीति। कर्मत्वं साधयति—उपलब्धुरुपलभ्यमान इति। उक्तमर्थं लोकप्रसिद्ध्या द्रढयति—यत्र हीति। तत्रैवानुभवमपि प्रश्नपूर्वकमभिनयति—कथमि त्यादिना। पुनस्तदेव व्यतिरेकमुखेनोपपादयति—यद्युपलब्धरीति। उपदिशेदित्यस्मात्पूर्वं उपलब्धारम् इत्यध्याहारः। यद्युपलब्धरि वेदना स्यात् तदा दाहाद्याश्रयदेहदेशवत् वेदनानिमित्तं दाहच्छेदादिजवेदनाश्रयत्वेनोपल ब्धारमुपदिशेल्लोकः। नैवमुपदिशन्नुपलभ्यते। अतो दाहच्छेदादिसमानाश्रयै वेदनेति योजना॥ ३४॥

तत्रैव युक्त्यन्तरमाह—

स्वयं च नोपलभ्येत चक्षुर्गतरूपवत्। तस्मात् दाहच्छेदा दिसमानाश्रयत्वेन उपलभ्यमानत्वाद्दाहादिवत् कर्मभूतैव वे दना। भावरूपत्वाच्च साश्रया तण्डुलपाकवत्। वेदनासमाना श्रय एव तत्संस्कारः। स्मृतिसमानकाल एवोपलभ्यमानत्वा वेदनाविषयः। तन्निमित्तविषयश्च द्वेषोऽपि संस्कारसमानाश्र एव। तथा चोक्तम् 'रूपसंस्कारतुल्याऽधी रागद्वेषौ भयं च यत्। गृह्यते धीश्रयं तस्माज्ज्ञाता शुद्धोऽभयः सदा'॥ ३५॥

स्वयं चेति। यथा चक्षुर्गतं रूपं न चक्षुषा गृह्यते तथाऽऽत्मगता वेदना आत्मना न गृह्येत कर्मकर्तृत्वविरोधादित्यर्थः। आत्मनो वेदनाश्रयत्वनिरा करणमुपसंहरति—तस्मादिति। ननु वेदना नाम दुःखं न तच्चेतने दे संभवति, सुखदुःखादिधर्माणां चेतनाश्रयत्वनियमात्। यदि पुनः चेतनोऽ प्यात्मा न वेदनाश्रयः तदा शरीरमप्यचेतनं न तदाश्रयः इत्यनाश्रयैव वेदनाऽस्तु, बौद्धैरपि तथाऽभ्युपगमात् इत्यत आह—भावरूपत्वाच्चेति। भावरूपत्वं कार्यत्वम्। वेदना साश्रया कार्यत्वात् तण्डुलपाकादिवत् इत्यर्थः। हेतोरप्रयोजकतामाशङ्क्य विपक्षे बाधकमाह—वेदनासमानाश्रय इति। वेदनाया निराश्रयत्वे तन्नाशे संस्काराभावात्कालान्तरे स्मरणं न स्यादित्यर्थः। यद्वा हेत्वसिद्धिं परिहरति—वेदनासमानाश्रय एव तत्संस्कार इति। वेदनाया अकार्यत्वे तत्संस्कारस्मृत्योरभावात्कालान्तरे पादे मे वेदनाऽभूत् इत्यादिव्यवहारो न स्यादित्यभिप्रायः। अथवा—साश्रया यदि वेदना तर्हि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्माश्रयैव स्यात् आत्मन्येव तत्संस्कारस्मृत्यादेरुपलम्भात् इत्याशङ्क्याह— **वेदनासमानाश्रय एव तत्संस्कार इति ।** यत्स्था वेदनोपलभ्यते तत्स्थ एव तज्जन्यसंस्कारादिः, वेदना तत्संस्कारस्मृतीनां एकाश्रयत्वनियमात्, वेदनायाश्च उपलब्धिकर्मनिष्ठत्वोपपादनात् नोपलब्धर्यात्मनि तत्संस्कारादीत्यर्थः । तदेवानुमानेन साधयति—**स्मृतिसमानकाल एवेति ।** स्मृतेर्यः कालो जाग्रत्स्वप्नावस्थारूपः तत्रैव उपलभ्यमानत्वात् सुषुप्त्यादावनुपलभ्यमानत्वात् वेदनाविषयो वेदनासमानविषयः । समानाश्रय एव तत्संकार इत्यक्षरार्थः । तथाचायं प्रयोगः—वेदनादिरनात्माश्रयः अनात्मप्रत्ययकाल एव उपलब्धिगोचरत्वाद्देहकार्श्यादिवदिति । इतोप्यनात्माश्रय एव वेदनादिरित्याह—**तन्निमित्तविषयश्चेति ।** तत्तस्या वेदनाया यन्निमित्तं दाहच्छेदादि तद्विषयो द्वेषोऽपि संस्कारतुल्याश्रयः अनात्माश्रय इत्यर्थः । अयमिह प्रघट्टिकाभिप्रायः—देहे छिद्यमाने दह्यमाने च अहं छिन्नो दग्ध इति च देहाभिन्नमात्मानं मन्यमानः संतप्यते जनः, तन्निमित्तकवेदना तत्संस्कारस्मृतिद्वेषांश्च देहाभिन्न एवात्मन्युपलभ्यते न देहाभिमानहीनावस्थायां देहश्चोपलभ्यमानत्वादुपलब्धिकर्मैव नोपलब्ध्याश्रय इति संघातस्यैव वेदनादि नासंहतस्य साक्षिण आत्मन इति नित्यशुद्ध एव आत्मेति । एवं निरूपितेऽर्थे वृद्धसंमतिमाह—**तथाचोक्तं रूपेति ।** रूपं नीलपीतादिविषयः तस्य संस्कारः सूक्ष्मावस्था तदनुभवसंस्कारो वा स्मृतिहेतुः स रूपसंस्कारः तेन सह तुल्यः समान आधिः उपाधिः आश्रयो ययोः रागद्वेषयोः तौ रूपसंस्कारतुल्याऽऽधीः यच्च भयं त्रासस्तदपि रूपसंस्कारतुल्याधीत्यर्थः । किमाश्रयत्वमेषामित्यत आह—**गृह्यते धीश्रयमिति ।** गृह्यते तद्द्वयमेतदिति शेषः । संकल्पविचिकित्सादेरप्युपलक्षणमेतत् । यद्यस्मात् रूपादिसंस्कारः तज्जन्यरागादिसर्वं धीसंश्रितमेवोपलभ्यते न तत्साक्षिसंश्रितं तत्तस्मात् ज्ञाता आत्मा सदा शुद्धो रागद्वेषरहितः अभयश्च संसाररहित इत्यर्थः ॥ ३५ ॥

युक्त्या संमत्या चोपपादितं वेदनादीनामपि अनात्मधर्मत्वं पुनः प्रश्नपूर्वकं श्रुत्या प्रतिपादयंस्तदाश्रयविशेषं निर्धारयति—

किमाश्रयाः पुना रूपादिसंस्कारादय इति । उच्यते । यत्र कामादयः । क्व पुनस्ते कामादयः 'कामः संकल्पो विचिकित्सा' इत्यादिश्रुतेः बुद्धावेव । तत्रैव रूपादिसंस्कारादयोऽपि 'कस्मिन्नु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपाणि प्रतिष्ठितानीति हृदये' इति श्रुतेः—'कामा येऽस्य हृ श्रिताः', 'तीर्णो हि यदा सर्वान् शोकान् हृदयस्य', 'असङ्गो ह्ययम्', 'तद्वा अस्यैतदतिच्छन्दाः' इत्यादिश्रुतिभ्यः, 'अविका र्योऽयमुच्यते', 'अनादित्वान्निर्गुणत्वात्' इत्यादि। इच्छाद्वेषा च क्षेत्रस्यैव विषयस्य धर्मो नात्मन इति स्मृतिभ्यश्च कर्मस्थैव शुद्धिः नात्मस्था इति ॥ ३६ ॥

किमाश्रया इत्यादिना। इत्यादिश्रुतेः 'एतत्सर्वं मन एव' इत्यवधा णात् मनोबुद्ध्योश्चान्तःकरणात्मनैकत्वाद्बुद्धावेव कामादयो न आत्मनि इ वधारितमित्यर्थः। कामादेर्बुद्ध्याश्रयत्वेऽपि कथं रूपादिसंस्कारसमानाश्र त्वसिद्धिः इत्याशङ्क्य रूपादेरपि बुद्ध्याश्रयत्वे श्रुतिमाह—तत्रैवेत्यादिन कामादेः अन्तःकरणनिष्ठत्वे वाक्यान्तरं पठति—कामा येऽस्येति। 'ती हि तदा सर्वान्हृदयस्य' इत्युक्तेः सनिदानानामेव तेषां हृदाश्रयत्वं गम्य तस्मात् शोकनिमित्तरूपादिसंस्काराणामपि बुद्ध्याश्रयत्वं युक्तमेव, अन्य सर्वविशेषणानुपपत्तेरित्यर्थः। इदानीमात्मनो वेदनाकामद्वेषाद्यसंस्पृष्ट श्रुतिस्मृती पठति—असङ्गो हीत्यादिना। अतिच्छन्दा इति छान्दसं स्व विशेषणत्वात्। अतिच्छन्दं छन्दः कामः अतिगतकामं असंस्पृष्टकामादि एतदात्मस्वरूपमित्यर्थः। निर्गुणत्वात् इत्यादिस्मृतिभ्यश्चेति संबन्धः। इदा सिंहावलोकनेन कामादेरनात्मधर्मत्वे श्रुत्युक्ते स्मृतिमाह—इच्छाद्वे दीति। 'इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः। एतत्क्षेत्रं समासे सविकारमुदाहृतम् ॥' इत्यादिस्मृतिभ्यश्च इच्छादिः क्षेत्रस्यैव धर्मो न आत्म इति योजना। क्षेत्रस्यानात्मत्वं द्योतयितुं विषयस्य इति विशेषणम्। श्रुति स्मृतिसिद्धमर्थमुपसंहरति—कर्मस्थैवाशुद्धिर्नात्मस्थेति। इति सिद्ध मिति शेषः ॥ ३६ ॥

परमप्रकृतमुपसंहरति—

अतो रूपादिसंस्काराद्यशुद्धिसंबन्धाभावात् न परस्मादा त्मनो विलक्षणत्वमिति प्रत्यक्षादिविरोधाभावात् युक्तं प एवात्माऽहमिति प्रतिपत्तुम्—'तदात्मानमेवावेदहं ब्रह्मास्मि'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'एकधैवानुद्रष्टव्यम्', 'अहमेवाऽधस्तात्', 'आत्मैवाऽधस्तात्', 'सर्वमात्मानं पश्येत्', 'यत्र त्वस्य सर्वमात्मैव', 'इदं सर्वं यदयमात्मा', 'स एषोऽकलः' 'अनन्तरमबाह्यम्', 'सबाह्याभ्यन्तरो ह्यजः', 'ब्रह्मैवेदम्', 'एतया द्वारा प्रापद्यत', 'प्रज्ञानस्य नामधेयानि', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'तस्माद्वा', 'तत्सृष्ट्वा तदेवानुप्राविशत्', 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी', 'अशरीरं शरीरेषु', 'न जायते म्रियते', 'स्वप्नान्तं जागरितान्तम्', 'सम आत्मेति विद्यात्', 'यस्तु सर्वाणि भूतानि', 'तदेजति तन्नैजति', 'वेनस्तत्पश्यन्', 'तदेवाग्निः', 'अहं मनुरभवं सूर्यश्च', 'अन्तः प्रविष्टः शास्ता जनानाम्', 'सदेव सोम्य', 'तत्सत्यं स आत्मा तत्त्वमसि' इत्यादिश्रुतिभ्यः ॥ ३७ ॥

अतो रूपादीति । रूपादिसंस्काराद्यशुद्धिसंबन्धाभावादेव प्रत्यक्षादिविरोधाभावाच्च परस्मादात्मनो विलक्षणस्त्वं इति हेतोः पर एवात्माऽहमिति प्रतिपत्तुं युक्तमिति योजना । आत्माभेदेनैव ब्रह्म प्रतिपत्तव्यमित्युक्तेऽर्थे श्रुतिवाक्यान्युदाहरति—तदात्मानमेवावेदित्यादिना । आत्मानं प्रत्यञ्चमेवाहं ब्रह्मास्मीति अवेत् अवगतवान् तद्ब्रह्मेत्यर्थः । एकधैव एकस्वरूपेणैव नतु विषयत्वेन भेदेन वा अनुद्रष्टव्यं इत्याचार्योपदेशानन्तरं अनुसन्धेयम् । 'एतदप्रमयं ध्रुवम्' इति वाक्यशेषः । 'स एवाऽधस्ता'दित्यादिना भूमानं परमात्मानं सर्वाधिष्ठानमुपक्रम्य तस्य ताटस्थ्यशङ्कानिवृत्तये अहंकारात्मत्वमुपदिश्य पुनः अहमुपरागकृतपरिच्छेदादिनिवृत्तये तत्साक्षिप्रत्यगेकरसतां तस्य निर्दिशति छान्दोग्यश्रुतिरित्याह—अहमेवाधस्तादिति । शमादिसाधनसंपन्नः सन् सर्वमात्मानं पश्येत् इति निर्दिष्टेऽर्थे हेतुमिव वचनान्तरमाह—यत्र त्वस्य सर्वमात्मैवेति । 'अभूत् तत्केन कं पश्येत्' इत्यादिवाक्यशेषः । इदं सर्वं यद्भोक्तृभोग्यादिलक्षणं विश्वं तत्सर्वमयमात्मा न अतोऽन्यद्वस्तुतोऽस्तीत्यर्थः । स एष इति । 'स एषोऽकलोऽमृतः' इति प्रश्नोपनिषद्गतं वाक्यम् । स एष प्रत्यगात्मा कलाशब्दवाच्यप्राणाद्युपाधिभिर्वियुक्तः अमृतः अमृतं ब्रह्मैवेति तस्यार्थः । 'तदेतद्ब्रह्म अपूर्वमनपरमनन्तर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मबाह्यमयमात्मा ब्रह्म' इति बृहदारण्यकवाक्यमुदाहरति—अनन्तरमबा मिति । मुण्डकवाक्यं च तत्समानार्थमाह—सबाह्येति । अमूर्तः पु एव सबाह्याभ्यन्तरः सर्वस्य सह बाह्याभ्यन्तररूपेण वर्तते नान्यः । अ न जायते इत्यजः जन्मादिविक्रियारहित इत्यर्थः । 'ब्रह्मैवेदममृतं पुरस्ता इत्यादि च अत्रोदाहर्तव्यमित्याह—ब्रह्मैवेदमिति । इदं सर्वं ब्रह्मैवेत्यर्थ एवं ब्रह्माद्वयात्मप्रतिपादकानि वाक्यान्युदाहृत्य ब्रह्मण एव जीवात्मना प्र प्रवेशनादिवाक्यानि च जीवस्य ब्रह्माभेदप्रतिपत्त्यर्थमुदाहरति—एत द्वारेत्यादिना । 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' इ शिरःकपालयोः सन्धिगतच्छिद्रेण देहे प्रवेशं स्रष्टुरीश्वरस्य दर्शयत्यैतरे वाक्यमित्यर्थः । तत्र प्रविष्टस्य स्वरूपनिर्धारणपरं वाक्यं—'येन वा पश् येन वा शृणोति' इत्यादि 'प्रज्ञानस्य नामधेयानि भवन्ति' इत्यन्तं प्रज्ञ मात्रं तत्स्वरूपं प्रज्ञानं ब्रह्मेति । तस्य ब्रह्मात्मत्वं च तत्रोक्तमित्यभिप्रेत्याह प्रज्ञानस्य नामधेयानीति । स्रष्टुरेव सृष्टे कार्ये जीवरूपेण प्रवेश इत् देव तैत्तिरीयकवाक्येन द्रढयति—सत्यं ज्ञानमनन्तमित्यादिना । मात्मैव सर्वसाक्षी सर्वभूतान्तरात्मा इत्यत्र श्वेताश्वतरीयमन्त्रमुदाहरति एको देव इति । शरीरादिसंसृष्टतया प्रतीयमानस्यापि आत्मनः तद्धर्म सर्गाभावेन ब्रह्मात्मनो ज्ञेयत्वे काठकवाक्यद्वयमुदाहरति—अशरीरं श रेषु । न जायते म्रियते वा विपश्चिदिति च । अवस्थासाक्षिण आत्म वस्थाधर्माऽस्पर्शित्वेन ब्रह्मत्वप्रतिपत्तौ काठकवाक्यमाह—स्वप्नान्तं जा रितान्तमिति । नेम्यरनाभिरूपरथचक्रनिदर्शनेन दृश्यदर्शनतत्साधन सर्वजगदाश्रयरूपं प्राणशब्दितं ब्रह्मैव स मे मम आत्मेति प्रवृत्तं कौषीत योपनिषद्वाक्यमुदाहरति—स म आत्मेति विद्यात् । 'यस्तु सर्वा भूतान्यात्मन्येवानुपश्यति', 'तदेजति तन्नैजति' इति च मन्त्रद्वयं ईशाव स्यगतमुदाहृतं, तत्र आद्यो मन्त्रः स्पष्टार्थः-द्वितीयः परोपाधिनिबन्धनं च नादिप्रतिभानम्, स्वतस्तु निर्विकारः शुद्ध एवात्मा इति दर्शयितुमित्यर्थः 'वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान्यत्र विश्वं भवत्येकनीडम्' इति म तैत्तिरीया आमनन्ति तस्यार्थः—यत्र यस्मिन् सर्वात्मके सर्वोपादाने पू त्तरमन्त्रनिर्दिष्टे वस्तुनि विश्वं समस्तं एकनीडं भवति एकायनं वर्तते-त विश्वा भुवनानि सर्वाणि भुवनानि न ततः पृथक् किमप्यस्तीति पश्य श्रुत्याचार्यप्रसादादनुभवन् विद्वान् ज्ञानी वेनो भवति—विनतः कान्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

मिणो वनतेर्वा संभजनीयार्थस्य धातोः इदं रूपम् । वेनः कान्तिमान् संभजनीयो वा भवति ईश्वर एव भवतीति । पुनरपि विदुषः सर्वात्मत्वे मन्त्रद्वयं पठति—'तदेवाऽग्निस्तद्वायुः' इत्यादिरेकः 'अहं मनुरभवं सूर्यश्च' इति वामदेववाक्यरूपोऽपरश्चेति । 'अन्तः प्रविष्टः शास्ता जनानाम्', 'एकः सन्बहुधा विचचार' इति तैत्तिरीयश्रुतिः एकस्यैवान्तर्यामिणो बहुधा विचरणं संसारव्यवहारं वदन्ती जीवपरयोरभेदं सूचयतीत्यर्थः । तत्रैव सोपक्रमं छान्दोग्यवाक्यं पठति—सदेवेति ॥ ३७ ॥

श्रुत्युक्तेऽर्थे स्मृतीरप्याह—

स्मृतिभ्यश्च—'पूः प्राणिनः सर्वगुहाशयम्', 'आत्मैव देवताः', 'नवद्वारे पुरे', 'समं सर्वेषु भूतेषु', 'विद्याविनयसंपन्ने', 'अविभक्तं विभक्तेषु', 'वासुदेवः सर्वम्' इत्यादिभ्यः एक एवात्मा परं ब्रह्म सर्वसंसारधर्मविनिर्मुक्तस्त्वमिति सिद्धम् ॥ ३८ ॥

स्मृतिभ्यश्चेति । सर्वप्राणिनो गुहाशयस्य एकस्यैवात्मनः पूः पुराणि शरीराणि न प्रतिशरीरमात्मभेद इत्यर्थः । उदाहृतश्रुतिस्मृत्यर्थं संकल्प्य प्रकरणार्थमुपसंहरति—एक एवेति ॥ ३८ ॥

तदेवं श्रुतिस्मृतिन्यायसिद्धे ब्रह्मात्मैकत्वेऽभिहिते लौकिकवैदिकव्यवहारविरोधं शङ्कते—

स यदि ब्रूयात्—यदि भगवन्, 'अनन्तरोऽबाह्यः' 'सबाह्याभ्यन्तरो ह्यजः' 'कृत्स्नः प्रज्ञानघन एव' सैन्धवघनवदात्मा सर्वमूर्तिभेदवर्जितः आकाशवदेकरसः तर्हि किमिदं दृश्यते श्रूयते वा साध्यं साधनं वा साधकश्चेति श्रुतिस्मृतिलोकप्रसिद्धं वादिशतविप्रतिपत्तिविषय इति ॥ ३९ ॥

स यदीति । गृहक्षेत्रदेशकोशादिकं साध्यमैहलौकिकं दृश्यते, तत्साधनं च प्रतिग्रहसेवाविजययुद्धादि, तत्साधकश्च तदर्थिवर्गो ब्राह्मणादिः दृश्यते, तथा यागादि साधनं, स्वर्गादि साध्यं, तत्कामश्च साधकः इति पार-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लौकिकमपि त्रिकं श्रूयते—'स्वर्गकामो यजेत' इत्येवमादीत्यर्थः। इ दृश्यते श्रूयते वा इत्याकाङ्क्षायामाह—श्रुतिस्मृतिलोकप्रसिद्धमिति लोक इति व्यवहर्तृजन उच्यते। देहात्मप्रसिद्धिवल्लोकप्रसिद्धेः। अतस्त्व ङ्क्षायामाह—वादिशतेति। वादिशतविप्रतिपत्तीनां विषयो विषयत्वं यदि युक्तत्रितये तत्तथोक्तम् ॥ ३९ ॥

व्यवहारस्य अविद्यात्मकत्वात् न तेन पारमार्थिकं ब्रह्मात्मैक्यं विरुध्य इति समाधत्ते—

आचार्यो ब्रूयात्—अविद्याकृतमेतद्यदिदं दृश्यते श्रूय वा, परमार्थतस्त्वेक एवात्मा अविद्यादृष्टेः अनेकवत् आभ सते, तिमिरदृष्ट्या अनेकचन्द्रवत् 'यत्र वा अन्यदिव स्यात्' 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति', 'मृत्योः मृत्युमाप्नोति', 'अथ यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद् जानाति तदल्पम् अथ यदल्पं तन्मर्त्यमिति', वाचारम्भ विकारो नामधेयं मृत्तिकेत्येव सत्यम्', 'अन्योऽसावन्यो हम्' इति भेददर्शननिन्दोपपत्तेरविद्याकृतं द्वैतम् 'एकमेवा द्वितीयम्', 'यत्र त्वस्य', 'तत्र को मोहः कः शोकः' इत्या कत्वविधिश्रुतिभ्यश्चेति ॥ ४० ॥

आचार्यो ब्रूयात् इत्यादिना। स्पष्टोऽर्थः। उक्तेऽर्थे श्रुतीरुदाहरति यत्र वा इत्यादिना। इवशब्दोऽन्यदर्शनस्य आभासत्वं द्योतयति। स्वप्न स्वादृष्टान्तार्थो वैशब्दः। यत्र यदा अविद्यावस्थायां द्वैताभावेऽपि द्वैतमिव दृश्यदर्शनभेदवद्भवति तत्तदा इतरो द्रष्टा इतरं स्वव्यावृत्तं कर्मभूतं वि इतरेण चक्षुषा करणेनेत्यर्थात् पश्यतीवेत्यर्थः। यच्च भेददर्शनोपलब्धं तद परिच्छिन्नं, यच्च परिच्छिन्नं तन्मर्त्यं विनाशि, यच्च विनाशि न तत्सत्। 'नाभ सतो विद्यते भावः' इति वचनादित्यर्थः। द्वैतस्याविद्याकृतत्वे श्रुतीरुपन्यस्य ब्रह्मात्माद्वयस्य परमार्थत्वे श्रुतीरुपन्यसन्ते—एकमेवेत्यादिना ॥ ४० ॥

ननु साध्यसाधनभेदश्चेदविद्याविषयः तर्हि मिथ्यार्थगोचरत्वात् कर्मका मप्रमाणं स्यात् इति शिष्यः शङ्कते—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्येवं भगवन्, किमर्थं श्रुत्या साध्यसाधनादिभेद उच्यते उत्पत्तिः प्रलयश्चेति ॥ ४१ ॥

यद्येवमिति । न केवलं कर्मकाण्डाप्रामाण्यापत्तिः द्वैतमिथ्यात्वे अपितु ज्ञानकाण्डेऽपि सृष्ट्यादिवाक्यानां निर्विषयतया प्रामाण्यहानिप्रसङ्ग इत्यभिप्रेत्याह—उत्पत्तिः प्रलयश्चेति । श्रुत्या किमर्थं उच्यते इत्यनुषङ्गः ॥ ४१ ॥

तत्र वेदान्तवाक्यजनितब्रह्मात्मविज्ञानात्प्राक् कर्मकाण्डाप्रामाण्यापत्तिः शङ्क्यते तदूर्ध्वं वा इति विकल्प्य आद्यं प्रत्याह—

अत्रोच्यते—अविद्यावत उपात्तशरीरादिभेदस्य इष्टानिष्टयोगिनमात्मानं मन्यमानस्य साधनैरेवेष्टानिष्टप्राप्तिपरिहारोपायविवेकमजानतः इष्टप्राप्तिं चानिष्टपरिहारं चेच्छतः शनैस्तद्विषयमज्ञानं निवर्तयितुं शास्त्रं न साध्यसाधनादिभेदं विधत्ते । अनिष्टरूपः संसारो हि स इति तद्भेददृष्टिमेवाविद्यां संसारमुन्मूलयति उत्पत्तिप्रलयाद्येकत्वोपपत्तिप्रदर्शनेन ॥ ४२ ॥

अत्रोच्यते—अविद्यावत उपात्तेति । 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् कर्तृसाधनफलभेदस्वरूपस्य शास्त्रज्ञानशून्यानामपि प्रसिद्धेः तत्र वेदस्यातात्पर्यात् यथाप्रसिद्धं भेदमादाय पुंसः पुरुषार्थसाधनमविज्ञातं बोधयतः शास्त्रस्य नाप्रामाण्यशङ्केत्यभिप्रेत्य संगृहीतमर्थं विवृणोति—शरीरादिभेदस्येत्यादिना । साधनैरेव इष्टप्राप्तिं अनिष्टपरिहारं चेच्छतः इष्टानिष्टप्राप्तिपरिहारोपायविवेकमजानतः शनैस्तद्विषयमज्ञानं निवर्तयितुं शास्त्रमित्यन्वयः । साधनैरेव इष्टानिष्टप्राप्तिपरिहारेच्छायां निमित्तं विशेषणान्तरेण द्योतयन्नाह—शरीरेति । शरीरादिभेदस्य शरीरेन्द्रियादिसंघातविशेषस्य संबन्धिनी ये इष्टानिष्टे तद्युक्तमात्मानं मन्यमानस्येति योजना । अयं भावः—अनाद्यविद्यावृतनिजस्वभावस्य शरीरेन्द्रियमनोबुद्धिप्राणेषु अध्यस्तात्मभावस्य परिच्छिन्नमात्मानं मन्यमानस्य स्वातिरिक्तविषयसंबन्धाधीनमेव पुरुषार्थमिच्छतः तदुपायं पर्येषमाणस्य साक्षात्पुरुषार्थमात्मतत्त्वं बोद्धुमसमर्थत्वात् प्रथमं तदभिलषितस्वर्गादिसुखादिसाधनं मानान्तरादविज्ञातं बोधयच्छास्त्रं तं विधिनिषेधयोः व्यवस्थापयति । ततो विहितानुष्ठानात् निषिद्धपरिवर्जनाच्च



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहरहरेधमानात्मशुद्धेः अनुपचीयमानपाप्मनो निषिद्धफलमिव काम्य
मपि अनित्याशुचिदुःखरूपं संसार एवेति काम्यकर्मपरित्यागेन आवश्
मेव कर्म ईश्वराराधनरूपमनुतिष्ठतः अतितरां शुद्धान्तःकरणस्य सूक्ष्म
तत्त्वप्रतिपत्तियोग्यः अयमिदानीं जात इति आत्मतत्त्वज्ञानमज्ञातं पर
रुपार्थसाधनमुत्पादयन् अनया प्रणालिकया अज्ञातार्थावबोधनेन अ
पुंसो निवर्तयितुं शास्त्रं प्रवृत्तमिति एतदभिप्रेत्य शनैरित्युक्तमिति ।
किमित्येवं तात्पर्यं वर्ण्यते प्रतीयमानसाध्यसाधनभेदस्वरूपस्यापि श
क्तितात्पर्यगोचरता किं न स्यात् इत्याशङ्क्य उभयपरत्वे वाक्यभेदापत्ते
मित्याह—न साध्येति । कस्मादन्यतरपरत्वेऽपि वस्तुसत्त्वपरत्वं ने
इत्याशङ्क्य अपुरुषार्थे तात्पर्यायोगात् इत्यभिप्रेत्याह—अनिष्टरूपः संस
हि स इति । एवं कर्मकाण्डस्य अज्ञातार्थावबोधने तात्पर्यं न भेदस्य
त्त्वबोधने इत्यप्रामाण्यशङ्कां तस्यापाकृत्य सृष्ट्यादिवाक्यस्य साक्षादद्वैत
प्रतिपत्तिपरत्वात् न अप्रामाण्यशङ्केत्याह—तद्भेददृष्टिमिति । उत्पत्ति
यादेः इत्यादिपदात् स्थितिप्रवेशनियमनानि गृह्यन्ते । उत्पत्तिप्रलयादेः
त्वोपपत्तिदर्शनेन अद्वैतयुक्तिदर्शनद्वारेण संसारमूलमविद्यामेवोन्मूल
सृष्ट्यादिवाक्यमित्यध्याहारेण योजना । अविद्यायाः संसारमूलत्वं द्योतयि
विशिनष्टि—तद्भेददृष्टिमिति । तस्य साध्यसाधनसाधकरूपस्य भेदस्य
प्रतिभासो यस्याः सा तथोक्ता तामित्यर्थः ॥ ४२ ॥

अविद्योन्मूलने वा किं स्यादित्यत आह—

अविद्यायामुन्मूलितायां श्रुतिस्मृतिन्यायेभ्यः 'अनन्त
बाह्यम्', 'सबाह्याभ्यन्तरो ह्यजः', 'सैन्धवघनवत्', 'प्रज्ञान
घन एवैक आत्मा', 'आकाशवत्परिपूर्णः' इत्यत्रैव एका प्र
प्रतिष्ठा परमार्थदर्शिनो भवति न साध्यसाधनोत्पत्तिप्रल
दिभेदेन अशुद्धिगन्धोऽप्युपपद्यते ॥ ४३ ॥

अविद्यायामुन्मूलितायामित्यादिना । एवं प्रतिष्ठितप्रज्ञस्य परमा
र्शिनः साध्यसाधनविशेषबुध्यजनकत्वात् तदा कर्मकाण्डस्यैव स्वरूपतः अप्र
अप्रामाण्यमिष्टमेव इति विकल्पान्तरपरिहार उक्तो वेदितव्यः ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

एवं सतः यदुक्तं प्राक्—यद्येवं संसारी च सन्—इत्यादि तदप्यज्ञानविलसितं मुमुक्षायामुत्पन्नायां कर्मतत्साधनपरित्यागे हेत्वभावात् इत्यभिप्रेत्याह—

**तच्चैतत् परमार्थदर्शनं प्रतिपत्तुमिच्छता वर्णाश्रमाद्यभिमानकृतपाङ्क्तरूप-पुत्रवित्तलोकैषणादिभ्यो व्युत्थानं कर्तव्यम् । सम्यक्प्रत्ययविरोधात्तदभिमानस्य भेददर्शनप्रतिषेधार्थोपपत्तिश्चोपपद्यते । नह्येकस्मिन्नात्मन्यसंसारित्वबुद्धौ शास्त्रन्यायोत्पादितायां तद्विपरीता बुद्धिर्भवति । नह्यग्नौ शीतत्वबुद्धिः शरीरे वा अजरामरणबुद्धिः । तस्मादविद्याकार्यत्वात् सर्वकर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमार्थदर्शननिष्ठेन त्यागः कर्तव्यः ॥ ४४ ॥**

यच्चैतदिति । पाङ्क्तरूपेति । पञ्चप्रकारेत्यर्थः । यजमान-पत्नी-पुत्र-वित्तद्वयसाध्यकर्मफलभूततल्लोक-पितृलोक-देवलोकैषणाभ्यो व्युत्थानं वैपरीत्येनोत्थानं तत्र निस्पृहतया तत्साधनसर्वकर्म-तदुपकरणसंन्यासरूपं पारिव्राज्यं कर्तव्यमित्यर्थः । आपाततः परोक्षतो वा अधिगतब्रह्मात्मभावस्य तदा आपरोक्ष्योन्मुखस्य ब्राह्मण्यादिदेहाद्यध्यासनिबन्धनकर्माधिकारित्वाभिमानशैथिल्यात् तस्योद्देश्यविरोधाच्च त्याज्यमेवससाधनं कर्म इत्युक्तेऽर्थे हेतुमाह—सम्यगिति । अभेददर्शनमेव सम्यग्ज्ञानं तदिच्छता च तद्विरुद्धाभिमानः तदास्पदं सर्वं त्याज्यं इत्यर्थैव श्रुतार्थापत्तिमाह—भेददर्शनेति । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति', 'उदरमन्तरं कुरुते अथ तस्य भयं भवति' इत्यादिभेददर्शनप्रतिषेधरूपो योऽर्थः तस्योपपत्तिः उपपादनं सोपपद्यते इत्यक्षरार्थः । भेदस्य तद्ययुक्ताभिमानस्य च प्रामाणिकत्वं श्रुत्या तन्निषेधो न घटेत । नहि प्रमाणसिद्धस्य प्रमाणेन प्रतिषेधः संभवति । न च प्रतिषेधश्रुतेः विषयान्तरमुत्प्रेक्षते । अतः प्रतिषेधकवाक्यानां भेदापवादपरत्वाभावे तदाम्नानमनर्थकं स्यात् । तच्चानिष्टम् । अध्ययनविधिविरोधादिति भावः । ननु सम्यग्ज्ञानस्य कर्मसमुच्चितस्यैव मोक्षसाधनत्वात् न विहितकर्मत्यागो युक्त इत्यत आह—न हीति । विरोधादेव समुच्चयस्य अनुष्ठातुमशक्यत्वात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्विधानासंभवात् कर्मजन्यस्य च अनित्यत्वात् मोक्षत्वानुपपत्तेः न ज्ञान समुच्चयो मोक्षसाधनमिति भावः। यद्वा उक्तमेव विरोधं दृष्टान्तोक्त्या यति—नहीत्यादिना। निरूपितमर्थंसारमुपसंहरति-तस्मादिति ॥ ४

॥ इति शिष्यप्रतिबोधनविधिर्नामप्रथमप्रकरणं विवृतम् ॥ १

---

## कूटस्थाद्वयात्मबोधप्रकरणम् ॥ २ ॥

तदेवं शिष्यस्य देहद्वयाभिमानापोहेन ब्रह्मरूपत्वमुपदिश्य तस्यावश्य कर्मतत्साधनसंन्यासो न्यायत उपपादितः, ब्रह्मस्वभावविपरीतं च अ कृतमित्युपक्षिप्तं, तदिदानीं अब्रह्मस्वरूपत्वस्य अविद्यात्मकत्वं आत्मनः स्थतया स्वाभाविकं ब्रह्मरूपत्वं च उपपादयितुं प्रकरणान्तरमारभमाणः संन्यासस्य मुमुक्षोः कृत्यं श्रवणं विधितः सूचयन् शिष्यप्रश्नमवतारय

सुखमासीनं ब्राह्मणं ब्रह्मनिष्ठं कश्चिद्ब्रह्मचारी जन्ममर क्षणात् संसारात् निर्विण्णो मुमुक्षुः विधिवदुपसन्नः पप्रच्छ भगवन्, कथमहं संसारान्मोक्षिष्ये शरीरेन्द्रियविषयवे वान् जागरिते दुःखमनुभवामि तथा स्वप्नेऽनुभवामि च पुनः सुषुप्तिप्रतिपत्त्या विश्रम्य विश्रम्य, किमयमेव मम स्व किंवा अन्यस्वभावस्य सतो नैमित्तिक इति। यदि स्वभा मे मोक्षाशा स्वभावस्यावर्जनीयत्वात्। अथ नैमित्तिकः चपरिहारे स्यान्मोक्षोपपत्तिः ॥ ४५ ॥

सुखमिति। सुखमासीनमित्यनेन अविक्षिप्तचित्ततया प्रसन्न व्यावहारिकदृष्ट्या ब्राह्मणमित्युक्त्या अनापदि ब्राह्मणेतरवर्णात् नो माह्य इति सूचयति। परमार्थतो ब्रह्मनिष्ठमित्युक्त्या शिष्यप्रतिबो मर्थ्यं सूच्यते—कश्चिदिति। प्रागुक्तगुणगणाढ्यः सुपरीक्षितः उक्तः—तस्योपदेशग्रहणकाले एकाकित्वं सूचयितुं कश्चिदित्युक्तम्। विशेषणानि—ब्रह्मचारीत्यादीनि। ब्रह्मणि प्रत्यक्त्वे चरितुं शीलमस्यास्तीति ब्रह्मचारी ब्रह्मविचारतत्पर इत्यर्थः। अनेन नित्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

स्तुविवेको दर्शितः । विशेषणान्तरेण वैराग्यमुक्तम् । विवेकवैराग्ययुक्तस्य शान्त्यादिः अर्थप्राप्त इति मत्वा चरमं विशेषणमाह—मुमुक्षुरिति । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इत्यादिशास्त्रमनुसरन्नाह—विधिवदुपसन्न इति । प्रश्नप्रकारमेवाह—भगवन्नित्यादिना, नैमित्तिक इत्यन्तेन ग्रन्थेन । संसारमोक्षविषय एकः प्रश्नः, दुःखानुभवस्यात्मस्वभावत्वविषयोऽपरः किमयमित्यादिप्रश्न इति विवेकः । प्रथमप्रश्नस्य निमित्तमाह—शरीरेति । शरीरेन्द्रियविषयनिमित्तवेदनानुभवो हि संसारः । तद्वान्सन् अहं कथं संसारान्मोक्षिष्य इति । जागरित इति द्वितीयप्रश्नस्य बीजमुक्तम् । जाग्रत्स्वप्नयोः दुःखानुभवात् सुषुप्तौ च आत्मनि तत्तदननुभवात् संशयोत्थानमित्यर्थः । नैमित्तिक इति च पप्रच्छेत्यन्वयः । उभयत्र फलमाह—यदि स्वभाव इत्यादिना ॥ ४५ ॥

अस्वभावपक्षमवलम्ब्य गुरुरुत्तरं वदन् न भेतव्यं त्वयेति शिष्यं आश्वासयतीत्याह—

तं गुरुरुवाच—शृणु वत्स, न तवायं स्वभावः । ( किंतु ) नैमित्तिकः ॥ ४६ ॥

तं गुरुरिति । किंत्विति मध्ये अध्याहारः कर्तव्यः ॥ ४६ ॥

कृताश्वासः शिष्य उवाच—

इति उक्तः शिष्य उवाच—किं निमित्तं, किं वा तस्य निवर्तकम्, को वा मम स्वभावः, यस्मिन्निमित्ते निवर्तिते नैमित्तिकाभावः रोगनिमित्तनिवृत्ताविव रोगी स्वभावं प्रपद्येयेति ४७

किं निमित्तमिति । निमित्तनिवृत्तिमन्तरेण नैमित्तिकस्यात्यन्तिकनिवृत्त्यनुपपत्तेः तत्स्वरूपमविदित्वा तत्परिहारायोगात् तस्य प्रश्नः कृतः । निवर्तकप्रश्नस्तु स्वभावपरिज्ञानेन तदवलम्बनार्थः । सुखदुःखादिमत्त्वस्य अस्वभावत्वोक्तौ तर्हि किं स्वभाव आत्मेति, निःस्वभावं वस्तु नास्तीति मन्वानः पृच्छति—को वेति । यस्मिन्निमित्ते निवर्तिते नैमित्तिकाभावः तत्किं निमित्तं किं वा तस्य निवर्तकमित्यन्वयः । इवशब्दो यथाशब्दार्थः । रोगी रोगनिमित्तनिवृत्तौ यथा स्वभावं प्रतिपद्यते तथा दुःखनिमित्तनिवृत्तौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यं स्वभावमहं प्रतिपद्येय स को वा मम स्वभाव इति योजना, इति शि
उवाचेति संबन्धः ॥ ४७ ॥

पृष्टवस्तुस्वरूपकथनेन उत्तरं गुरुरुवाच—

**गुरुरुवाच—अविद्या निमित्तं, विद्या तस्य निवर्तिका, अ
द्यायां निवृत्तायां तन्निमित्ताभावात् मोक्ष्यसे जन्ममरण
णात्, स्वप्नजाग्रद्दुःखं च नानुभविष्यसीति ॥ ४८ ॥**

अविद्येत्यादिना। सा अविद्या निमित्तं निदानं यस्य स संसारः
मित्तः तस्य अभावात् इति विग्रहः। तदा स्वप्नजागरितदुःखं च आत्म
त्वेन नानुभविष्यसीत्यर्थः ॥ ४८ ॥

स्वरूपतोऽवगतपदार्थानां विशेषबुभुत्सया विनेयः पृच्छतीत्याह—

**शिष्य उवाच—का सा अविद्या, किंविषया वा, विद्या
का यया स्वभावं प्रतिपद्येयेति ॥ ४९ ॥**

शिष्य उवाचेति। वाशब्दश्चार्थे। किमाश्रया च सेत्य
स्वभावं प्रतिपद्येय। जाग्रदादावपि दुःखाद्यनुभवहीनमात्मतत्त्वं प्र
पद्येयेत्यर्थः ॥ ४९ ॥

तत्र स्वरूपावरणविपर्ययाध्यासलक्षणा स्वत्स्वरूपाश्रयविषया अवि
प्रथमप्रश्नस्योत्तरं गुरुरुवाचेत्याह—

**गुरुरुवाच—त्वं परमात्मानं सन्तं असंसारिणं संसा
हमस्मीति विपरीतं प्रतिपद्यसे, अकर्तारं सन्तं कर्ते
अभोक्तारं सन्तं भोक्तेति, विद्यमानं च अविद्यमानमि
इयमविद्या ॥ ५० ॥**

गुरुरिति। परमात्मानं परिपूर्णस्वरूपं, विपरीतं परिच्छिन्नस्वरूपं
मस्मीति त्वं प्रतिपद्यसे इति प्रतिद्वन्द्वं योज्यम्। यन्निमित्तमेवं संसा
रमतामेव प्रतिपद्यसे परिपूर्णत्वाद्यात्मत्वं विद्यमानमपि न प्रतिपद्यसे, सै
विद्या त्वदाश्रया त्वद्विषया चेति त्वदनुभवसिद्धा। त्वं तु चिदानन्दैक
कूटस्थ इत्यभिप्रायः। विद्यमानं चाविद्यमानमिति। नित्यं सन्तमवि
मित्यर्थः ॥ ५० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

शिष्यस्तु आत्मनो नित्यत्वं मुक्तत्वमङ्गीकृत्य असंसार्यात्मत्वमुक्तं आक्षिपति इत्याह—

शिष्य उवाच—यद्यप्यहं विद्यमानः तथापि न परमात्मा, कर्तृत्वभोक्तृत्वलक्षणः संसारो मम स्वभावः, प्रत्यक्षादिभिः प्रमाणैः अनुभूयमानत्वात् । न अविद्यानिमित्तः अविद्यायाः स्वात्मविषयत्वानुपपत्तेः । अविद्या नाम अन्यस्मिन् अन्यधर्माध्यारोपणा—यथा प्रसिद्धं रजतं प्रसिद्धायां शुक्तिकायां, यथा प्रसिद्धं पुरुषं स्थाणावध्यारोपयति प्रसिद्धं वा स्थाणुं पुरुषे । नाऽप्रसिद्धं प्रसिद्धे प्रसिद्धं चाऽप्रसिद्धे । नचात्मन्यनात्मानमध्यारोपयति आत्मनः अप्रसिद्धत्वात् । तथा आत्मानं अनात्मनि आत्मनोऽप्रसिद्धत्वादेव ॥ ५१ ॥

शिष्य उवाचेति । प्रत्यक्षं अहंकर्तेत्यादिप्रत्ययः कर्तृत्वादिः साश्रयः धर्मत्वात्, रूपादिवदिति साश्रयत्वे सिद्धे, न अचेतने सुखदुःखं पाषाणादौ तदद्दर्शनात्, परिशेषात् चेतनाश्रयत्वसिद्धिरनुमानम् 'गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता' । 'स एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इत्यादिरागमश्च आदिशब्दार्थः । विपक्षे बाधिकां युक्तिं संगृह्णाति—अविद्यायाः स्वात्मविषयत्वानुपपत्तेरिति । अविद्यास्वरूपोपन्यासपूर्वकं संगृहीतमर्थं विवृणोति—अविद्या नामेत्यादिना । मिथ्याज्ञानमेवाविद्योक्तेति मन्वानस्य अयमुपन्यासः । शुक्तिकायां अध्यारोपयतीति वक्ष्यमाणस्यानुषङ्गः । एवं उत्तरत्राप्यनुषङ्गो द्रष्टव्यः । कस्मिंश्चिद्विषयभूतेऽर्थे अन्यतः प्रसिद्धस्य विषयान्तरस्याध्यारोपो हि अविद्येति प्रसिद्धिः । तत्र आत्मा यदि प्रसिद्ध एव स्यात् तदा तस्य अध्यासविरोधिप्रकाशात्मकत्वात् न तस्मिन् अतद्धर्मप्रतिभासः स्यात् । यदि अप्रसिद्धः तदा विषयास्फुरणात् कुत्र अतद्धर्मप्रतिभासो भवेत्, तथाच कर्तृत्वादेः आत्मनि आविद्यकत्वानुपपत्तिः । अतः स्वाभाविक एवात्मनः कर्तृत्वादिलक्षणो धर्म इत्यभिप्रायः ॥ ५१ ॥

तत्र अधिष्ठानाध्यस्यमानयोः पृथक् प्रसिद्धिमन्तरेण अध्यासानुपपत्तेरिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ते मतं, किं वा प्रसिद्धिमात्रं विना इति विकल्प्य नान्त्यः प्रसिद्धिमात्रस कारात् इत्यभिप्रेत्य आद्यं निराकरोति—

तं गुरुरुवाच—न, व्यभिचारात् । नहि वत्स, प्रसिद्धं प्र एवाध्यारोपयतीति नियन्तुं शक्यम् । आत्मन्यध्यारोपणदर्शना गौरोऽहं कृष्णोऽहमिति देहधर्मस्य अहंप्रत्ययविषये आत्म अहंप्रत्ययविषयस्य च आत्मनः देहे अयमस्मीति ॥ ५२ ॥

गुरुरुवाच—न, व्यभिचारादिति । सुषुप्त्यादौ आत्मन्यवभा नेऽपि कर्तृत्वाद्याकारस्य अनवभासात् विशिष्टात्मविषयत्वमेव प्रत्यक्षा नागमानामिति अविद्यात्मत्वाबाधकत्वमिति द्रष्टव्यम् । वत्सेति संबो अद्यापि त्वं बाल एव न न्यायमार्गं व्युत्पन्न इति दर्शयति । अन्यत्र प्रसिद्धमेव अन्यत्र प्रसिद्धे अध्यारोपयतीति नहि नियन्तुं शक्यते व्यभि रात् इत्यन्वयः । कुत्र व्यभिचार इति तत्राह—आत्मनीति । संग्रहं णोति—गौरोऽहमिति । देहातिरिक्तात्मवादिभिः कृशोऽहमित्यादिदेह वभासः आत्मन्यहंप्रत्ययविषये । तस्य च देहे मनुष्योऽहं जानामीत्य सोऽपि अध्यासोऽङ्गीक्रियते । नहि देहात्मनोः पृथक्प्रसिद्धिरस्ति । अतः क्तनियमभङ्ग इत्यर्थः ॥ ५२ ॥

यथा स्थाणुपुरुषयोः प्रसिद्धयोः अन्योन्यस्मिन्नध्यासः तथा देहात्मनो इन्द्रियविषयत्वेन अहंप्रत्ययविषयत्वेन च प्रसिद्धयोरेव इतरस्मिन्नितरा विशेषाभावाच्च व्यभिचार इति शङ्कते—

शिष्य आह—प्रसिद्ध एव तर्ह्यात्मा अहंप्रत्ययविषयत देहश्च अयमिति । तत्रैवंसति प्रसिद्धयोरेव देहात्मनोरितरेत ध्यारोपणात् स्थाणुपुरुषयोः शुक्तिकारजतयोरिव । तत्र विशेषमाश्रित्य भगवतोक्तं प्रसिद्धयोरितरेतराध्यारोपेण नियन्तुं न शक्यते इति ॥ ५३ ॥

शिष्य आहेति । तथाच अहंकर्तृचिदात्मनोः पृथगवभासाभावादि तराध्यास इति दार्ष्टान्तिकासिद्धिरिति भावः ॥ ५३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

आचार्यस्तु देहात्मनोः प्रसिद्धत्वेऽपि त्वदभिमतनियमस्तत्र नास्तीत्यभिप्रेत्य व्यभिचारं द्रढयतीत्याह—

गुरुराह—शृणु । सत्यं प्रसिद्धौ देहात्मानौ नतु स्थाणुपुरुषाविव विविक्तप्रत्ययविषयतया सर्वलोकप्रसिद्धौ । कथं तर्हि नित्यमेव निरन्तराविविक्तप्रत्ययविषयतया । नहि अयं देहः, अयमात्मा, इति विविक्ताभ्यां प्रत्ययाभ्यां देहात्मानौ गृह्णाति यतः कश्चित् । अतएव हि मोमुह्यते लोकः आत्मानात्मविषये एवमात्मा नैवमात्मा इति । इमं विशेषमाश्रित्यावोचं नैवं नियन्तुं शक्यमिति ॥ ५४ ॥

गुरुरिति । सत्यं प्रसिद्धौ देहात्मानौ तत्र शृणु विशेषमिति योजना ।—नत्विति । अविविक्तप्रत्ययविषयतया प्रसिद्धिमेवाभिनयति—नह्ययमित्यादिना । तत्र लिङ्गमाह—अतएव हि मोमुह्यते लोक इति । मोहातिशयमेवाभिनयति—एवमात्मेति । देह आत्मा, इन्द्रियाण्यात्मा, कर्ता आत्मा, अकर्ता आत्मा, व्यापकः, परिच्छिन्नः, सगुणः, निर्गुणः, इति लोकवादिविप्रतिपत्तेः सर्वो लोको मोमुह्यमानो दृश्यते । विविक्ततयोपलम्भे तु इदं न स्यात्-इति अस्तिविशेष इत्युपसंहरति-इमं विशेषमिति । तस्मात् एकज्ञानोपरक्ततया उपलम्भ एव अध्यस्यमानाधिष्ठानयोः सिद्धिः अध्यासे अपेक्ष्यते न पृथक्सिद्धिः—इत्यतः अहं कर्ता भोक्तेत्यपि अहं मनुष्य इतिवत्-द्व्याकारप्रतिभासादध्यारोपत्वसिद्धिरिति भावः ॥ ५४ ॥

ननु आत्मानात्मनोः उभयोरपि यदि अध्यासगोचरता तदा अध्यस्तस्य मिथ्यात्वात् आत्मनः सत्त्वानुपपत्तिप्रसङ्ग इति शिष्यः शङ्कते—

ननु अविद्याऽध्यारोपितं यत्र यत् तदसत् तत्र दृष्टं यथा रजतं शुक्तिकायां, स्थाणौ पुरुषं, रज्ज्वां सर्पः, आकाशे तलमलिनत्वमित्यादि, तथा—देहात्मनोरपि नित्यमेव निरन्तराविविक्तप्रत्ययतया इतरेतराध्यारोपणा कृता स्यात् तदितरेतरयोः नित्यमेव असत्त्वे स्यात् । यथा शुक्तिकादिषु अविद्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्यारोपितानां रजतादीनां नित्यमेव अत्यन्तासत्त्वं तद्विपरीता
च विपरीतेषु तद्वत् देहात्मनोरविद्ययैव इतरेतराध्यारोपणा कृ
स्यात् तत्रैवंसति देहात्मनोरसत्त्वं प्रसज्येत। तच्चानिष्टं वैनाशि
पक्षत्वात्। अथ तद्विपर्ययेण देहः आत्मन्यविद्ययाऽध्यारोपि
देहस्यात्मनि सति असत्त्वं प्रसज्येत। तच्चानिष्टं प्रत्यक्षादि
रोधात्। तस्माद्देहात्मानौ नाविद्यया इतरेतरस्मिन् अध्यारोपि
कथं तर्हि वंशस्तम्भवन्नित्यसंयुक्तौ ॥ ५५ ॥

नन्विति। यद्यदविद्याध्यारोपितं तत्तदसत् दृष्टं यथा शुक्तिकादौ र
दीति व्याप्तिमुक्त्वा पक्षधर्मतामाह—तथा देहात्मनोरपीति। अनु
प्रयुङ्क्ते—तदितरेतरयोरित्यादिना। तत्र व्याप्तिपक्षधर्मत्वसिद्धौ स
मिति यावत्। आत्मनि अनात्मा, अनात्मनि च आत्मा नित्यमेवासत्त्वं
तुमर्हति नित्यमेवेतरेतरत्राध्यस्तत्वात् शुक्तिकादौ रजतादिवत् रज
शुक्त्यादिवच्चेति। अवयवत्रयमभिधाय उपनयनिगमने निदर्शयति—त
देहात्मनोरिति। सिद्धसाध्यत्वशङ्कां निराकरोति—तच्चानिष्टमिति।
नेतरेतराध्यासोऽङ्गीक्रियते येनात्मनोऽप्यसत्त्वप्रसङ्गः स्यात्, किंतु अ
तराध्यास एव अन्यत्राङ्गीक्रियत इत्याशङ्कते गुरुः—अथेति। तद्विपर्य
अनात्माधिष्ठानविपर्ययेणेत्यर्थः। तदेव स्पष्टयति—देह इति। शिष्यो
करोति—देहस्यात्मनि सतीति। यथा शुक्तिकादौ सत्येव नेदं र
इत्यादिना तदसत्त्वं प्रतीयते तथा आत्मनि अहमवभासे सत्येव देहस्यास
मनुभूयेत नत्वनुभूयते। अनुभूयत एव इत्यभ्युपगमः प्रमाणविरोधाद
इत्यर्थः। यस्मादेवं युक्तिं न सहते तस्मान्नाध्यास इत्युपसंहरति—तस्मा
ति। कथं तर्हि अहं मनुष्य इत्यादिव्यवहारो लोकस्येति गुरुः शङ्कते
कथं तर्हीति। शिष्यो मीमांसकादिमतमाश्रित्य संयोगसंबन्धादिति
ष्टान्तमाह—वंशस्तम्भवदिति। यथा वंशानां स्तम्भानां आधाराधेय
वेन परस्परं संयोगविशेषे सति गृहमित्येकशब्दप्रत्ययगोचरत्वं एवं दे
त्मनोरपि संयोगविशेषात् अहं मनुष्य इत्यादिसमानाधिकरणव्यवहारो
रत्वमित्यर्थः ॥ ५५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

सिद्धान्ती परिशेषेण इतरेतराध्यासं साधयितुं उक्तसंबन्धं तावत्प्रत्याचष्टे—

**न । अनित्यत्वपरार्थत्वप्रसङ्गात्—संहतत्वात् परार्थत्वं अनित्यत्वं च वंशस्तम्भादिवदेव । किंच यस्तु परैर्देहेन संहतः कल्पित आत्मा स संहतत्वात् परार्थः । तेन असंहतः परोऽन्यो नित्यः सिद्धस्तावत् ॥ ५६ ॥**

न । अनित्यत्वेति । यत्संहतं तदनित्यं परार्थं च दृष्टं यथा वंशस्तम्भादि, तथा यदि आत्मापि देहादिभिः संहत एव स्यात् तदा सोऽप्यनित्यः परार्थश्च स्यात्, तच्चानिष्टम् । अनित्यत्वे संघातात्मवादापत्तेः, परार्थत्वे च अचेतनत्वापत्तेरित्यर्थः । एवं परपक्षनिराकरणेन अर्थान्नित्यः स्वार्थश्चात्मा अभ्युपेय इत्युक्तं तदेवानूद्य आस्तिकैः सुदूरमपि गत्वा सोऽभ्युपगन्तव्य इत्यभिप्रेत्य स्वपक्षं साधयति—किंचेति । तेन परार्थेन अनित्येन संघातेन लिङ्गेन परः संघातादन्यो विलक्षणः तावदात्मा नित्यः सिद्ध इति योजना । विमतः स्वविलक्षणशेषसंहतत्वात् गृहवत् इत्यर्थः ॥ ५६ ॥

ननु सत्यं संघातादचेतनादन्य आत्मा तस्य संघातासंबन्धे अहं मनुष्य इति व्यवहारानुपपत्तेः तत्संबन्धो वाच्यः । तत्र संयोगविशेषस्यानङ्गीकारे तादात्म्याध्यासः संबन्ध इत्यायातम्, तथाच निरात्मवादापत्तिरिति प्रागुक्तं शिष्यः स्मारयति—

**तस्यासंहतस्य देहे देहमात्रतया अध्यारोपितत्वेन असत्त्वानित्यत्वादिदोषप्रसङ्गो भवति । तत्र निरात्मको देह इति वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥ ५७ ॥**

तस्यासंहतस्येति । तस्यासंहतस्य संघातसाक्षिणो देहे स्वस्मिन्नध्यस्ते इति योज्यम् । देहस्य स्वातन्त्र्येण सिद्ध्यनङ्गीकारादित्यर्थः । तथाच तादृशे देहे अध्यारोपितत्वेन हेतुना आत्मनो देहमात्रतया असत्त्वानित्यत्वादिदोषप्रसङ्गो भवति । तत्र एवं परस्पराध्यासाभ्युपगमे सतीति यावत् । अध्यस्तस्य मिथ्यात्वनियमान्निरात्मको देहो निर्देहकश्चात्मेति शून्यवादप्रसङ्ग इत्यर्थः ॥ ५७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं शून्यवादप्रसङ्गात् तादात्म्यावभासस्य अध्यासनिबन्धनत्वं नेष्य भवता, किंवा आधाराधेयभावादिसंबन्धस्य प्रामाणिकस्य तद्धेतोः सत्त्व इति विकल्प्य आद्यं निराकरोति गुरुः—

न स्वत एवात्मनः आकाशस्येव असंहतत्वाभ्युपगम सर्वेणासंहतः स च आत्मेति न निरात्मको देहादिः सर्वः स्यात् यथाच आकाशं सर्वेणासंहतमिति सर्वं न निराकाशं भव एवम्। तस्मान्न वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥ ५८ ॥

न स्वत एवेति। अयमर्थः—देहादिर्हि रूपादिमत्त्वात्सावयवत्व घटादिवत् जडोऽपि सन् तद्विलक्षणचेतनात्मतयोपलभ्यते। ततश्च तप्त पिण्डवत् तस्य चेतनसंश्लेषो वक्तव्यः। तथा आत्मनः संघातसाक्षिणः न्यमात्रस्वभावस्य निरवयवस्य आकाशवत् स्वतःपरिच्छेदाणुत्वादिधर्मै संभवात् देहसंश्लेषकृतः तस्मिन् तत्प्रतिभास इति वक्तव्यम्। तथाच इ तरधर्मसंसर्गितया उभयोरितरेतराध्यासे अनुभवानुसारेणैव सिद्धे नि ष्ठानस्यारोपस्य अदृष्टचरत्वात् आरोपज्ञाने स्फुरतोर्मध्ये यदन्योपरागमन्त कदापि स्वातन्त्र्येण न स्फुरति तत्स्वरूपेणैवारोपितं भवति। यथा गगनं रक्ततया स्फुरन्मालिन्यादि। यत्तु तद्विपरीतं तदितरस्मिन् न स्वरूपेणारो भवति किंतु संसृष्टरूपेणैव यथा शुक्तीदमंशादि रूप्यादौ तत्रात्मनो देहा रागं विनापि सुषुप्त्यादौ स्वतःस्फुरणात् तस्य संघाते स्वरूपेण नाध्यासः, संसृष्टत्वेनैव देहादेस्तद्विपरीतत्वात् स्वरूपेणैवेति न अनित्यत्वादिदोषप्र चिदात्मनः। नापि देहादेर्निरात्मकत्वप्रसङ्ग इति न शून्यवादशङ्कावका देहस्य तु चैतन्याध्यासव्याप्ततया चिद्धर्माध्यारोपाधिष्ठानत्वमुपचर्यते न परस्पराध्यासपक्षे कश्चिद्दोष इति स्वतोऽसंहतस्यात्मनः सर्वत्र सर्वदा मानत्वात् न संघातो निरात्मकः स्यात्। नाप्यात्मा अनित्यत्वादिदोष स्यादित्यर्थः। आकाशस्येवेत्युक्तं दृष्टान्तं विवृणोति—यथाचाकाशमिति स्वपक्षदूषणोद्धारमुपसंहरति—तस्मादिति ॥ ५८ ॥

तदेवं दूषणोद्धारेण इतरेतराध्यासं तादात्म्यव्यवहारहेतुं ग्राहयि आद्यं विकल्पं निराकार्षीत्। इदानीं परमते दूषणमापादयितुं द्वि यमुत्थापयति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

यत्पुनरुक्तं देहस्यात्यन्तासत्त्वे प्रत्यक्षादिविरोधः स्यादिति । तन्न । प्रत्यक्षादिभिः आत्मनि देहस्य सत्त्वानुपलब्धेः । नह्यात्मनि कुण्डे बदरं क्षीरे सर्पिः तिले तैलं भित्तौ चित्रमिव च प्रत्यक्षादिभिः देह उपलभ्यते । तस्मान्न प्रत्यक्षादिविरोधः ॥ ५९ ॥

यत्पुनरुक्तमिति । निराकरोति—तन्नेति । आत्मनि देहोऽस्तीत्येवं प्रत्यक्षं तावत् न संभवति । चक्षुःस्पर्शनाभ्यां देहस्य गृहीतत्वेऽपि आत्मनः ताभ्यामगृहीतत्वात्, तद्ग्रहणाभावे च तत्रेदमिति ग्रहणानुपपत्तेः । 'पराञ्चि खानि' इति श्रुतेश्च नात्मा इन्द्रियविषयः । अतो न तस्मिन् देहसंबन्धः प्रत्यक्षः । अतएव नानुमानादिगोचरत्वमपीत्यभिप्रेत्य अनुपलब्धिं व्यतिरेकदृष्टान्तैर्विवृणोति—नहीत्यादिना । आद्यः प्रत्यक्षस्य, द्वितीयोऽनुमानस्य, तृतीयोऽर्थापत्तेः । नहि कुण्डे बदरवत् देहात्मानौ एकदेशसंलग्नावुपलभ्येते इत्युक्ते भित्तिचित्रयोर्भेदेनानुपलम्भेऽपि यथा आधाराधेयभावः तथा अत्रापीत्याशङ्क्याह—भित्तौ चित्रमिवेति । चित्राङ्किताया भित्तेः उपलम्भवत् देहाकाराङ्कित आत्मा नोपलभ्यते । तथा सति मयि मनुष्यो देहोऽयमस्तीति व्यवहारः स्यात् । नतु मनुष्योऽहं स्थूलोऽहमित्यादिरिति समुदायार्थः ॥५९॥

ननु सामान्यतो गृहीते विशेषतश्चागृहीते विषये विषयान्तराध्यासो दृष्टः, तद्देहात्मनः प्रत्यक्षाद्यविषयत्वे कथं तत्रानात्माध्यारोपः, अनात्मनि च कथमात्माध्यारोपः, तस्य अत्यन्तासत्त्वे इत्यभिप्रेत्य शिष्यः शङ्कते—

कथं तर्हि प्रत्यक्षाद्यप्रसिद्धात्मनि देहाध्यारोपणा, देहे च आत्मारोपणा ॥ ६० ॥

कथं तर्हीति ॥ ६० ॥

किं आत्मनः स्फुरणाभावात् तत्राध्यासो न संभवतीत्युच्यते, किं वा विषयत्वेन स्फुरणाभावात्, गृहीतसामान्यांशाद्गृह्यमाणविशेषांशाभावाद्वा । तत्र नाद्य इत्याह—

नायं दोषः । स्वभावप्रसिद्धत्वादात्मनः । नहि कादाचि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्कत्वसिद्धावेव अध्यारोपणा न नित्यसिद्धौ इति नियन्तुं शक्
आकाशे तलमलाद्यध्यारोपणदर्शनात् ॥ ६१ ॥

नायं दोषः। स्वभावप्रसिद्धत्वादात्मन इति। स्वप्रकाशस्वा स्वमहिम्नैव स्फुरणादित्यर्थः। न द्वितीय इत्याह—नहीति। आकाशे त्यक्षेऽपीति शेषः। अनैन्द्रियकेऽप्याकाशे ऐन्द्रियकभ्रमदर्शनात् अविषये स्वतः स्फुरति आत्मनि विषयाध्यासो नासंभावित इत्यर्थः। न चत बहिरर्थेषु विद्यमानयोरपि सामान्यविशेषांशयोः अग्निपिङ्गल्यादिवत् धूमा ध्यासं प्रति अतन्त्रत्वात् स्वरूपमात्रेण स्फुरणं अध्यासविरोध्याकारेणास् च अधिष्ठानस्याध्यासे अपेक्ष्यते तदिहात्मनः स्वरूपतः स्फुरणेऽपि अनृत दुःखान्तवस्वानात्मव्यावृत्ताकारेण वेदान्तजनितज्ञाने अध्यासविरोधिनि णाभावात् अध्यासोपपत्तेः न कश्चिद्दोष इति द्रष्टव्यम् ॥ ६१ ॥

ननु अध्यासज्ञानाकारेण परिणामः किं आत्मनः, उतानात्मनः, कि नयोः। नाद्यः। तस्य विकारित्वापत्तेः अनित्यत्वादिदोषप्रसङ्गात्। द्वितीयः। अचेतनस्य तदनुपपत्तेः। अतएव न तृतीय इत्यभि शिष्यः पृच्छति—

किं भगवन्, देहात्मनोः इतरेतराध्यारोपणा देहादिसं तकृता अथवा आत्मकृतेति ॥ ६२ ॥

किं भगवन्निति ॥ ६२ ॥

शिष्याभिप्रायं श्रोतुकामो गुरुः कस्मिन् सति किं स्यात् इति पृच्छति—

गुरुरुवाच—यदि देहादिसंघातकृता यदि वा आत्मकृ किं तत्र स्यात् ॥ ६३ ॥

यदीति। किं तत्र स्यात् तवेति शेषः ॥ ६३ ॥

स्वाभिप्रायं शिष्यः प्रकटयतीत्याह—

इत्युक्तः शिष्य आह—यद्यहं देहादिसंघातमात्रः त ममाचेतनत्वात् परार्थत्वमिति न मत्कृता देहात्मनोः इतरे राध्यारोपणा। अथाहमात्मा परोऽन्यः संघातात् चितिमत्त्वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

स्वार्थ इति मयैव चितिमता आत्मनि अध्यारोपणा क्रियते सर्वानर्थबीजभूता ॥ ६४ ॥

इत्युक्त इति । अनात्मनः स्वरूपेणाध्यस्तत्वात् निःस्वभावस्य तस्य अध्यासकर्तृत्वानुपपत्तेः आत्मैव तत्कर्तेति स्वयमूहमानः अहमवभासस्यात्मप्रत्ययत्वात् संघाते च तद्दर्शनात् स वा अहं अन्यो वा अध्यासकर्ता इत्युभयत्र दोषमुपन्यस्यति—शिष्य आह—यद्यहमित्यादिना । आद्ये पक्षे अध्यासकर्तुरभावात् संसारदर्शनं न स्यादिति भावः । द्वितीये स्वयमेव स्वानर्थार्थं प्रवृत्तत्वात् अनिर्मोक्षत्वापत्तिरिति भावः ॥ ६४ ॥

चिन्मात्राश्रयविषयानाद्यनिर्वचनीयाऽविद्यावेशवशात् चिदात्मैव अविद्यापरिकल्पितः अहंकारादिस्थूलशरीरान्तं आत्मत्वेनाभिमन्यमानो मिथ्यैवाध्यासकर्ता इति प्रसिद्धिमुपगतः । परमार्थतस्तु कूटस्थ एवात्मा । अविद्यानिवृत्त्या च संसारनिवृत्तिः, निद्रानिवृत्त्येव स्वप्ननिवृत्तिरिति नानुपपन्नं किंचित्—इत्यभिप्रेत्य शनैः शनैरुक्तार्थं शिष्यबुद्धिमारोहयति गुरुरित्याह—

इत्युक्तो गुरुरुवाच–अनर्थबीजभूतां चेत् मिथ्याध्यारोपणां जानीषे मा कार्षीस्तर्हि ॥ ६५ ॥

इत्युक्तो गुरुरित्यादिना । देहाद्यात्मभावनामनर्थार्थां चेत् अवगच्छसि किमिति तर्हि तां न मुञ्चसि–अनर्थबीजभूतामिति ॥ ६५ ॥

साक्षिणः कूटस्थत्वात् नानर्थसंबन्धः परमार्थतः इत्युक्ताभिप्रायं अनवबुध्यमानः शिष्यः प्राह—

नैव भगवन्, शक्नोमि न कर्तुम् । अन्येन केनचित् प्रयुक्तोऽहं न स्वतन्त्र इति ॥ ६६ ॥

नैव भगवन्निति । हे भगवन्, न कर्तुं नैव शक्नोमीत्यन्वयः । अनिच्छतोऽपि मे निवृत्त्यभावात् नाहं स्वतन्त्रः । अन्येन केनचित् प्रेर्यमाण एव इति मन्ये इत्यर्थः ॥ ६६ ॥

यद्येवं मन्यसे तदा चितिमत्त्वात्स्वार्थ इति मयैव इत्यादिनोक्तं स्मरेति गुरुः स्वाभिप्रायं प्रकटयति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तर्हि अचितिमत्त्वात् स्वार्थः त्वम् । येन प्रयुक्तः अ तन्त्रः प्रवर्तसे स चितिमान् स्वार्थः संघात एव त्वम् ॥ ६७

न तर्हि अचितिमत्त्वादिति ॥ ६७ ॥

ननु कथमहं संघातः ज्ञातृत्वात् इति शिष्य आह—

यद्यचेतनोऽहं कथं सुखदुःखवेदनां भवदुक्तं च जानामि

यद्यचेतन इति । भवदुक्तमिति । संघात एव त्वं इत्यादीत्यर्थः ॥ मिथ्याध्यासप्रयुक्तकर्तृत्वाद्यवभासस्य देहेन्द्रियान्तःकरणगतचिदाभ विविक्ततया तद्विशिष्टात्मविषयत्वात् तस्य च अविवेकविवेकाभ्यां आ परतन्त्रत्वस्वतन्त्रत्वप्रतिभासगोचरत्वात् अविवेकनिराकरणेन अस्य स्वरू द्धाबुद्धिः संपाद्या इत्यभिप्रेत्य आचार्यः पृच्छतीत्याह—

गुरुरुवाच—किं सुखदुःखवेदनाया मदुक्ताच्चान्यस्त्वं, अनन्य एवेति ॥ ६९ ॥

गुरुरुवाच किमित्यादिना ॥ ६९ ॥

शिष्यः पुनः स्वानुभवमनुस्मरन् उत्तरमाहेति दर्शयति—

शिष्य उवाच—नाहं तावदनन्यः । कस्मात् । यस्मा भयं कर्मभूतं घटादिकमिव जानामि, यद्यनन्योऽहं तेन भयं न जानीयां, किंतु जानामि तस्मादन्यः । सुखदुःख नाविक्रिया च स्वार्थैव प्राप्नोति, त्वदुक्तं च स्यात् । अनन् न च तयोः स्वार्थता युक्ता । नहि चन्दनकण्टककृते दुःखे चन्दनकण्टकार्थे, घटोपयोगो वा घटार्थः । तस्मात् ज्ञातुर्मम चन्दनादिकृतः अर्थः । अहं हि ततोऽन्यः समस्त जानामि बुद्ध्यारूढम् ॥ ७० ॥

शिष्य इति । नाहं संघातानन्यः तद्द्रष्टृत्वात् । यो यद्द्रष्टा न स तद यथा घटद्रष्टेत्यर्थः । हेतोरप्रयोजकताशङ्कामनवकाशयति—यदीति । इति । अनन्यत्वहेतुनेत्यर्थः । नहि स्वयं स्ववेद्यं किमपि भवति । स्वा वृत्तिविरोधात्, जडस्य च स्वप्रकाशतानुपपत्तेः । स्वान्यद्रष्टृविषयत्वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...तदसिद्धिप्रसङ्गात् तद्व्यवहारलोपः प्रसज्येत इति भावः । उपनयनिगमने दर्शयति—किंतु जानासि तस्मादन्य इति । अनन्यत्वे विषयत्वानुपपत्तिरूपं बाधकमभिधाय शेष्यन्तराभावात् संघातस्य स्वशेषत्वापत्तिं बाधकान्तरमाह—सुखदुःखेति । विक्रिया कर्तृत्वादिलक्षणा इत्यर्थः । त्वदुक्तं वेति । असत्त्वानित्यत्वादिपूर्वोक्तदोषश्च प्राप्नोतीत्यर्थः । भवतु स्वार्थता मित्याशङ्क्य विषयस्य स्वार्थत्वाभावं दृष्टान्तेनोपपादयति—नच तयोरिति । सुखदुःखवेदनाविक्रिययोरित्यर्थः । द्रष्टुरात्मनो दृश्यादन्यत्वं शेषित्वं च ...उपपादितमुपसंहरति—तस्मादिति । ज्ञातृज्ञेयसंबन्धमाह—बुद्ध्यारूढ... ...मेति ॥ ७० ॥

यद्येवं प्रतिबुद्धोऽसि वत्स, न तर्हि परप्रयुक्तता तव इति तत्त्वमवबोधय... ...आचार्य इत्याह—

**तं गुरुरुवाच—एवं तर्हि स्वार्थस्त्वं चितिमत्त्वान्न परेण प्रयुज्यसे । नहि चितिमान् परतन्त्रः परेण प्रयुज्यते—चितिमतश्चितिमदर्थत्वानुपपत्तेः समत्वात्प्रदीपप्रकाशयोरिव । नापि अचितिमदर्थत्वं चितिमतो भवति, अचितिमतोऽचितिमत्त्वादेव स्वार्थसंबन्धानुपपत्तेः । नापि अचितिमतोः अन्योन्यार्थत्वं दृष्टम् । नहि काष्ठकुड्ये अन्योन्यार्थं कुर्वाते ॥ ७१ ॥**

तं गुरुरिति । ननु चितिमतोऽपि परार्थत्वं किं न स्यात् इतिचेत् तत्र वक्तव्यं किं चितिमान् चितिमदर्थः, किंवा अचितिमदर्थ इति । आद्येऽपि स्वयमेव स्वार्थः चितिमदन्तरार्थो वा । नाद्यः । एकस्मिन्नुपकार्योपकारकभावलक्षणस्य अर्थार्थित्वस्यायोगादित्यभिप्रेत्य द्वितीयं प्रत्याह—चितिमत इति । समत्वात् अन्योन्यस्मिन्नन्योन्यकृतातिशयाभावादित्यर्थः । द्वितीयं दूषयति—नापीति । अचितिमदर्थत्वं चितिमत इति पूर्वेणानुषङ्गः । अचितिमतो... ...स्य जडत्वादेव शेषित्वानुपपत्तेः इति हेत्वर्थः । माभूत्तर्हि अचेतनानामपि चितिमच्छेषत्वं तेषां अन्योन्यार्थता किमिति न भवेत् । अतः किमिति चेतनोऽध्यक्षः स्वार्थः कल्प्यते इत्याशङ्क्य दृष्टविरोधान्नैवमित्याह—नाप्यचितिमतोरिति ॥ ७१ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदुक्तं चितिमतः चितिमदर्थत्वं नोपपद्यते समत्वात् इति तत्र व्या
शङ्कते—

नन्तु चितिमत्त्वे समेऽपि भृत्यस्वामिनोः अन्योन्या
दृष्टम् ॥ ७२ ॥

नन्विति ॥ ७२ ॥

स्वामिचैतन्यस्य भृत्यदेह एव अचेतनभागः उपकरोति न तां
चिन्मात्रम्, तथा भृत्यचैतन्यस्य स्वामिदेह एव अचेतनभागः उपक
चैतन्यमात्रं तथा दर्शनादित्यभिप्रेत्य परिहरति—

नैवं—अग्नेरुष्णप्रकाशवत् तव चितिमत्त्वस्य विवक्षि
प्रदर्शितश्च दृष्टान्तः प्रदीपप्रकाशयोरिति । तत्रैवं सति
द्ध्यारूढमेव सर्वमुपलभसे अग्न्युष्णप्रकाशतुल्येन कूटस्थ
चैतन्यस्वरूपेण यदि चैवमात्मनः सर्वदा निर्विशेषत्व
च्छसि । किमित्यूचिवान् सुषुप्ते विश्रम्य विश्रम्य जाग्रत्स्व
दुःखमनुभवामि इति । किं अयमेव मम स्वभावः किंवा
त्तिकः इति च । किमसौ व्यामोहोऽपगतः किंवा नेति ॥

नैवमग्नेरिति । तदेवं चेतनस्य अनन्यशेषत्वे सति तस्य ईक्षि
सिद्धं, अतः कूटस्थ एवात्मा इत्युपसंहरति—तत्रैवं सतीति । चि
मतः स्वार्थत्वमेव न परार्थत्वं सर्वदेति स्थिते सतीत्यर्थः । स्वबु
स्वाध्यस्तान्तःकरणवृत्तिकवलितमेव सर्वमध्यात्माधिभूतादिलक्षणं
अग्न्युष्णप्रकाशवत्स्वरूपभूतेन निर्विकारनित्यचैतन्यस्वभावेनोपलभसे
अतो नित्यमुक्तोऽहं न संघाताध्यासकर्ता न मे संघातधर्मसंसर्ग
स्वस्थो भवेत्यर्थः । ओमितिचेत् स ब्रूयात् तदा गुरुरेवं ब्रूयात्
यदि चैवमिति । मोहादेवाब्रुवम् इतिचेत् स ब्रूयात् तदा तं प्रति
वक्तव्यमाह—किमसाविति ॥ ७३ ॥

ननु संसार्यहं दुःखी नित्यमुक्तस्वभावादीश्वरादन्यः इत्यादिभ्रम
व्यामोहः अविवेकलक्षण आसीन्मम स इदानीं त्वत्प्रसादान्निवृत्त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

कूटस्थचैतन्यस्वरूपेणेति यदिदं मम कूटस्थत्वमूचिवान् भवान् तत्र प्रतिविषयज्ञानकर्तृत्वात् कथं कूटस्थचित्स्वभावता इति संशयो जायते इति शिष्यप्रश्नमुत्थापयति—

इत्युक्तः शिष्य आह—भगवन्, अपगतः त्वत्प्रसादात् व्यामोहः किंतु मम कूटस्थतायां संशयः कथम्—शब्दादीनां स्वतःसिद्धिर्नास्ति अचेतनत्वात्—शब्दाद्याकारप्रत्ययोत्पत्तेस्तु तेषां प्रत्ययानामितरेतरव्यावृत्तविशेषणानां नीलपीताद्याकारवतां स्वतःसिद्ध्यसंभवात् । तस्माद्बाह्याकारनिमित्तत्वं गम्यते इति बाह्याकारवत् शब्दाद्याकारत्वसिद्धिः । तथा प्रत्ययानामपि अहंप्रत्ययालम्बनवस्तुभेदानां संहतत्वात् अचैतन्योपपत्तेः स्वार्थत्वासंभवात्—स्वरूपव्यतिरिक्तग्राहकग्राह्यत्वेन सिद्धिः । शब्दादिवदेव असंहतत्वे सति चैतन्यात्मकत्वात् स्वार्थोऽपि अहंप्रत्ययानां नीलपीताद्याकाराणामुपलब्धेति विक्रियावानेव कूटस्थ इति संशयः ॥ ७४ ॥

इत्युक्तः शिष्य आहेति । अपगतः व्यामोह इत्यनुषङ्गः । संघातसाक्षिणो निर्विकारस्योक्तत्वात् कथं संशय इति तन्मुखेनैव कूटस्थतामवगमयितुं गुरुः पृच्छति—कथमिति । संशयः इत्यनुषङ्गः । शिष्यः स्वविदितमर्थं निवेदयति—शब्दादीनामिति । शब्दस्पर्शरूपरसगन्धास्तावद्विषयाः प्रसिद्धाः तेषामचिद्रूपत्वात् स्वतःस्फुरणं नास्ति इत्यविवादम् । कथं तर्हि तेषां स्फूर्तिरिति, तदाह—शब्दाद्याकारप्रत्ययोत्पत्तेस्तु तेषामिति । सिद्धिरित्यनुषङ्गः । शब्दाद्याकाराणां प्रत्ययरूपत्वात् न स्वातिरिक्तग्राह्यता इति विज्ञानवादिमतमाशङ्क्य मध्ये निराकरोति—प्रत्ययानामित्यारभ्य सिद्धिरित्यन्तेन । इतरेतरं व्यावृत्तानि विशेषणानि शब्दाद्याकाररूपाणि येषां ते तथा । हेतुगर्भं विशेषणम् । प्रकाशस्वरूपत्वात् प्रत्ययानां स्वतएव परोपरागं विना नीलपीताद्याकारवत्ताया असंभवात् न प्रत्ययमात्रस्वरूपाः यः इति शब्दाध्याहारेण योजना । परमतनिराकरणमुपसंहरति—तस्मा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिति। बाह्याकारः शब्दादिरूपः इन्द्रियसंसृष्टः अर्थः निमित्तं येषां यानां तेषां भावो बाह्याकारनिमित्तत्वमिति विग्रहः। इत्यतः तस्मात् यानां बाह्याकारवच्छब्दाद्याकारत्वसिद्धिरित्यन्वयः। चैतन्यात्पृथगा वन्तो ये शब्दादयः पराग्व्यवहारयोग्याः तत्कृताकारत्वात्सिद्धिः प्रत्य न स्वत इत्यर्थः। एवं शब्दादीनां विषयाणां स्वव्यतिरिक्तप्रत्ययग्राह्यत्वं अध्यवस्यसि तर्हि प्रत्ययस्वरूपे विशेषाभावसिद्धेः कूटस्थत्वसिद्धिः इ त्र्याह—तथा प्रत्ययानामपीति। नहि विषयसंसृष्टतया भासमाना याकाराः प्रत्ययाः स्वप्रकाशचैतन्यरूपा भवन्ति आगमापायित्वात्, अन्यसाक्षिका एव इत्यभिप्रेत्य तत्स्वरूपविशेषं विशेषणनिर्देशेन कथयं अहंप्रत्ययालम्बनवस्तुभेदानामिति। अहंप्रत्ययालम्बनं वस्तु करणं (अहंकरणं) तस्य भेदा वृत्तिविशेषाः तदात्मकानामित्यर्थः। वि प्रत्ययाः न चित्स्वभावाः संहतत्वात्। संहतत्वं च आगमापायित्वाद् दिवत् देहादिवद्वा। तथा विमताः स्वातिरिक्तग्राहकग्राह्याः अचेत शब्दादिवदेव इत्यर्थः। अतः परमाकाराभावात् प्रत्ययोत्पत्त्याद्यवस्था निर्विशेषश्चिदात्मा सिद्ध एवेति कुतः कूटस्थतायां संशयः इति न मित्याह—असंहतत्वे सतीति। यद्यपि संघातादन्यः चैतन्यस्वभावः एवात्मा, तथापि अहंप्रत्ययानां अन्तःकरणवृत्तीनां नीलपीताद्याकारा लब्धा उपलब्धिकर्ता इति हेतोः विक्रियावानेवायं कथं कूटस्थ इति मे इत्यर्थः॥ ७४॥

एवं चेत् दृश्यदर्शने विवेचयसि न तर्हि ते संशयावकाश इति हरति—

तं गुरुरुवाच—न युक्तस्तव संशयः। यतस्तेषां प्रत्य नियमेन अशेषतः उपलब्धेरेव अपरिणामित्वात् कूटस् सिद्धौ निश्चयहेतुमेव अशेषचित्तप्रचारोपलब्धिं संशयहेतुमा यदि हि तव परिणामित्वं स्यात् अशेषस्वविषयचित्तप्र पलब्धिर्न स्यात् चित्तस्येव स्वविषये। यथा चेन्द्रियाणां षयेषु। नच तथाऽत्मनस्तव स्वविषयैकदेशोपलब्धिः। कूटस्थतैव तवेति॥ ७५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

तं गुरुरुवाचेत्यादिना । संशयायोगे हेतुमाह—यत इति । यः परिणामी चित्तादिः तस्य क्रमेण स्वविषयग्राहकत्वं च दृष्टं तद्व्यापकमात्मनः प्रत्ययसाक्षिणः सकाशाद्व्यावर्तमानं स्वव्याप्यं परिणामित्वमपि तस्य व्यावर्तयति इति व्यापकविरुद्धोपलब्धेः कूटस्थत्वसिद्धौ निश्चय एव युक्तो न संशय इत्यर्थः । उक्तमेवार्थं व्यतिरेकव्याप्तिं विवृण्वन्नुपपादयति—यदि हीति ॥७५॥

इदानीं प्रकृतिप्रत्ययार्थपर्यालोचनया उपलब्धा कूटस्थ इति विरुद्धमिति शिष्यः शङ्कामुद्भावयति—

तत्राह—उपलब्धिर्नाम धात्वर्थो विक्रियैव उपलब्धुः कूटस्थात्मता चेति विरुद्धम् ॥ ७६ ॥

तत्राहेति । उपोपसर्गस्य लभतेः धातोः कर्तरि तृचो विधानात् धात्वर्थस्य च क्रियात्वात् क्रियायाश्चोत्पत्तिविनाशवत्त्वात् तत्कर्तरि कथं क्रियाराहित्यमित्यर्थः ॥ ७६ ॥

क्रियैव प्रकृतिभूतधात्वर्थः, कर्तैव च प्रत्ययार्थः सर्वत्र मुख्य इति नास्ति नियमः । 'गडि वदनैकदेशे' सविता प्रकाशते सविता प्रकाशयतीत्यत्र व्यभिचारात् इत्यभिप्रेत्य प्रकृते धात्वर्थतत्कर्तृवचनस्योपलब्धृशब्दस्य गौणार्थत्वमेव युक्तमित्याह गुरुः—

न । धात्वर्थविक्रियायां उपलब्ध्युपचारात् । यो हि बौद्धः प्रत्ययः स धात्वर्थो विक्रियात्मकः आत्मनः उपलब्ध्याभासफलावसान इति उपलब्धिशब्देन उपचर्यते । यथा छिदिक्रिया द्वैधीभावफलावसानेति धात्वर्थेन उपचर्यते तद्वत् ॥७७॥

न । धात्वर्थेति । संग्रहं विवृणोति—यो हि बौद्ध इति । बौद्धो बुद्धिपरिणामः प्रतिविषयं अयति गच्छतीति प्रत्ययः । ननु बुद्धेरन्तःकरणस्य द्रव्यत्वात् तत्परिणामस्य च मृत्परिणामघटादिवत् द्रव्यत्वोपपत्तेः कथं क्रियात्वमिति तत्राह—स धात्वर्थो विक्रियात्मक इति । विशिष्टक्रियात्मक इत्यर्थः । नहि मृदादिवत् स्वाकारतिरोधानेन अन्तःकरणपरिणाम इष्यते किंतु जलूकावत् आलोकवद्वा संकोचविकासरूपेण । तादृशस्तु परिणामः परिणामिचेष्टारूपत्वात् तत्क्रियेति वक्तुं युक्तेत्यभिप्रायः । तस्याः क्रियायाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपलब्धिशब्दोपचारे निमित्तमाह—आत्मन इति। आत्मनः स्वरूप
या उपलब्धिः—'सत्यं ज्ञानं' 'विज्ञानघन एव' इत्यादिश्रुतिसिद्धा तस्य
आभासो वह्निव्याप्तायःपिण्डस्य वह्न्याकारत्ववत् चिदात्मव्याप्ततया वि
यापत्तिः तदेव फलं तदवसानः तत्पर्यन्त इतिकृत्वा उपलब्धिशब्देनोपचर्यते
इत्यर्थः । तत्रानुकूलं दृष्टान्तमाह—यथेति। अयं भावः—अर्थप्रकाशो
उपलब्धिशब्दार्थः प्रसिद्धः स नार्थधर्मः अर्थानां जडत्वात् इत्युक्तम्। कि
प्यन्तःकरणधर्मः तस्यापि करणत्वात्, चैतन्यप्रकाशाश्रयत्वायोगात्, त
स्वयंप्रकाशमाननित्यचैतन्यात्मनि अव्यवधानेन अहंतयैवाध्यासात्
त्तायां प्रकाशाव्यतिरेकात् आत्मचैतन्यव्याप्ताः तत्तदर्थाकारा वृत्तीः
अन्तःकरण उपलब्धा कर्ता प्रमाता भोक्ता इति च प्रमातृत्व-कर्तृत्व-
त्व-अनुभवितृत्व-व्यपदेशास्पदं भवति यथा अयःपिण्डो दहति प्रकाश
तद्वत् आत्मा आकाशवदविक्रियत्वात्कूटस्थोऽपि सन् तादृगन्तःक
स्वाभासाविवेकात्तद्धर्मैः तदवस्थाभिश्च मिथ्यैव व्यपदिश्यते चतुष्कोणो
कृशः स्थूलो जातो नष्टः अग्निरिति यथा अयःपिण्डगताभासावि
अग्निः व्यपदिश्यते तद्वत्। तस्मात् अन्तःकरणस्य विकारिणः कर्तृ
उपलब्धेः क्रियमाणत्वाभावात् उपलब्धिस्वरूपस्यात्मनः सिद्धं कूट
मिति ॥ ७७ ॥

तत्रोक्तमर्थं विशदीकर्तुं दृष्टान्तस्य दार्ष्टान्तिकाननुरूपत्वं शङ्कते—

इत्युक्तः शिष्य आह—ननु भगवन्, मम कूटस्थत्व
पादनं प्रति असमर्थो दृष्टान्तः कथम्, छिदिः छेद्यविक्रिया
साना उपचर्यते—यथा धात्वर्थत्वेन तथा उपलब्धिशब्दो
रितोऽपि धात्वर्थो बौद्धप्रत्ययः आत्मनः उपलब्धिवि
वसानश्चेत् नात्मनः कूटस्थतां प्रतिपादयितुं समर्थः ॥ ७८

इत्युक्तः शिष्य आह—नन्विति । उभयत्र प्रकृतिप्रत्ययार्थयोः
चारिकत्वस्योक्तत्वात् कथं दृष्टान्तासामर्थ्यमिति गुरुराह—कथमि
उपचरितत्वेऽपि उपलब्धुः विक्रिया दुर्वारा । यतः छिदिक्रियासाध्यं
भावाख्यं फलं विक्रिया, एवं उपलब्धिफलस्यापि फलत्वाविशेषात् साध्य
विक्रियात्वोपपत्तेः कथं उपलब्धा कूटस्थः स्यात् इति शिष्यो दृष्टान्ता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

...पपादयति—छिदिः छेद्येत्यादिना । छिदिक्रियायाः छेद्यविक्रियावसान-त्ववत् बौद्धो धात्वर्थः उपलब्धिशब्दोपचरितोऽपि आत्मोपलब्धिविक्रियाव-सानश्चेदिति योजना । छिदिक्रियायाः छेत्तृकृतद्वैधीभावपर्यन्तत्ववत् आत्म-...तोपलब्धिविकारपर्यन्तः उपलब्धिधात्वर्थश्चेदित्यर्थः ॥ ७८ ॥

...उपलब्धेः स्वरूपेणैव फलत्वं विवक्षित्वा दृष्टान्ताननुगुणत्वं अध्यवस्यसि, किंवा उपाधिवशात् इति विकल्प्य आद्यं दूषयति—

**गुरुरुवाच—सत्यमेवं स्यात् यदि उपलब्ध्युपलब्ध्रोः विशेषः। नित्योपलब्धिमात्र एव हि उपलब्धा नतु तार्किकसमय इव अन्या उपलब्धिः अन्य उपलब्धा च ॥ ७९ ॥**

सत्यमेवमिति । विशेषो भेदः । नित्यशब्देन बौद्धमताद्व्यावृत्तिः । मात्रपदेन भेदाभेदमतात् । 'प्रज्ञानघन एव', 'प्रज्ञानं ब्रह्म' इत्यादिश्रुति-प्रसिद्धं हेतुमाह—हीति । एवकारव्यावर्त्यमाह—नतु तार्किकेति ॥ ७९ ॥

यद्येवं आत्मतत्त्वं कथं तर्हि धात्वर्थफलवत्त्ववचनमिति शिष्यः शङ्कते—

**ननु उपलब्धिफलावसानो धात्वर्थः कथमिति ॥ ८० ॥**

नन्विति ॥ ८० ॥

उपाधिवशात्फलत्वोपचारोपलब्धेः न स्वरूपत इत्युक्तं स्मारयन् पक्षान्तर-मविरुद्धमित्याह—

**उच्यते—शृणु—उपलब्ध्याभासफलावसान इत्युक्तं किं न श्रुतं तत् त्वया, नतु आत्मा विक्रियोत्पादनावसान इति मयोक्तम् ॥ ८१ ॥**

शृण्विति । अन्तःकरणवृत्तीनां आविर्भावतिरोभावधर्मकत्वात् तद्वि-शिष्टतया स्फुरणं अङ्गीकृत्य विषयस्थचैतन्याभेदेन प्रकाशमानवृत्तितत्स्था-भासाश्रयतया भासमान आत्मा प्रमाता इत्युच्यते । कर्मेन्द्रियाणि अधिष्ठाय क्रियावत्प्राणप्रधानान्तःकरणलिङ्गगताभासाविवेकात्कर्तेत्युच्यते । शुभाशु-भकर्मोपस्थापितान्तःकरणपरिणामविशेषं तदविवेकात् स्वगतमिव पश्य-न्नात्मा भोक्तेत्युच्यते । एतां सर्वामेव चित्तविलासावस्थां स्वरूपचैतन्यानु-भवमात्रेण साक्षादवभासयन्निव भासमानः अलुप्तप्रकाशः असंदिग्धः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अविपर्यस्तः अविपयः साक्षी उपलब्धा ज्ञाता इति च व्यपदिश्यते ।
विनाशात् तद्गतचिदाभासस्यापि विलयात् तत्संस्कारसंभवे सति
न्तरे पूर्वावगतविपयाकारस्मृतिवृत्त्युदये तद्गताऽभासद्वारा स एव
व्यपदिश्यते । स एव तु चिदात्मा समस्तकार्यकारणप्रपञ्चोपलक्षितः
वृत्तसत्ताऽभेदेन सर्वाधिष्ठानमित्युच्यते । कारणोपाध्यविवेकेन अलु
शक्तितया च अन्तर्याम्यादिशब्दवाच्योऽपि भवति । तस्मात् केनचिद्
विना क्वचित् क्वचित् तथा तथा व्यवहारास्पदत्वेन अविद्यावशात् आ
नोऽप्यात्मा स्वरूपतो निर्विकारो निर्धर्मकः असङ्गः कूटस्थ एवेति ॥ ८

एतत्सर्वमभिप्रेत्य उक्तमर्थं प्रश्नमुत्थाप्य उपसंहरति—

शिष्य उवाच—कथं तर्हि कूटस्थे मयि अशेपस्वविपर्या
प्रचारोपलब्धृत्वमित्यात्थ ॥ ८२ ॥

तं गुरुरुवाच—सत्यमवोचं, तेनैव कूटस्थतामब्रुवं तव ॥

शिष्य उवाच । कथं तर्हीत्यारभ्य तवेत्यन्तेन । तेनैव अ
विपयचित्तप्रचारोपलब्धृत्वेनेत्यर्थः । अतः कुतस्तत्र तवानाश्वासो
इत्यभिप्रायः ॥ ८२ ॥ ८३ ॥

आत्मनो नित्यनिवृत्ताशेपस्वगतविशेषतया कूटस्थत्वे अवबोधिते आ
स्वरूपः शिष्यः स्वभ्रान्तिबीजमपश्यन् पृच्छति—

यद्येवं भगवन्, कूटस्थनित्योपलब्धिस्वरूपे मयि श
द्याकारबौद्धप्रत्ययेपु च मत्स्वरूपोपलब्ध्याभासफलावसान
उत्पद्यमानेपु कस्त्वपराधो मम ॥ ८४ ॥

यद्येवमिति । अथवा-बौद्धप्रत्ययाश्चेत् उपलब्ध्याभासफलावसाना
न्ते तदा तानात्मनि नित्यं पश्यतो मम कोऽपराध इत्याक्षिपति-य
मिति ॥ ८४ ॥

प्रश्नस्योत्तरमाह—

सत्यम्, नास्त्यपराधः किंतु अविद्यामात्रस्तु अपराध
प्रागेवावोचम् ॥ ८५ ॥

सत्यं नास्त्यपराध इति । कथं तर्हि किं न श्रुतं त्वया-इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

स्येति शङ्कते—किंत्विति । जिज्ञासोः तव प्रेक्षावत उक्तार्थानवधानं न आगन्तुकदोपनिमित्तकं संभाव्यते इत्यभिप्रेत्य मयोक्तमिति परिहरति—अविद्येति । यद्वा आक्षेपं परिहरति—सत्यमिति । नास्त्यपराधस्तव स्वानुभवाप्रच्छादकत्वात् । कथं तर्हि त्वयोक्तं ममानाश्वासो जायते इति पृच्छति—किंत्विति । अन्योऽस्तु अपराध इत्युत्तरमाह—अविद्येति । तदेवं यथावदात्मनः स्वरूपानवभासाविद्यानिबन्धन एव संसारित्वं अधिकृतत्वं इत्यादि अतद्धर्मावभासः न परमार्थोऽस्तीति उपपत्तितोऽवगमितमात्मनः कूटस्थनित्यत्वम् ॥ ८५ ॥

इदानीं अवस्थात्रयसाक्षितया अवस्थाधर्मास्पर्शित्वेन पुनः कूटस्थतां प्रतिपादयितुमाक्षेपमुत्थापयति—

**यदि भगवन्, सुषुप्त इव मम विक्रिया नास्ति कथं स्वप्नजागरिते ॥ ८६ ॥**

यदि भगवन्निति । स्वप्नजागरिते ममेति शेषः ॥ ८६ ॥

स्वचैतन्यप्रकाश्यत्वात् न तव स्वभावभूते ते अवस्थे इति परिहरति—

**तं गुरुरुवाच—किंत्वनुभूयेते त्वया सततम् ॥ ८७ ॥**

तं गुरुरुवाचेति—सततमिति । यदा ते भवतः तदा नानुभूयमाने भवत इत्यर्थः ॥ ८७ ॥

अनुभूयमानत्वमङ्गीकृत्य सततानुभवशब्दार्थमजानानः शिष्य आह—

**बाढम् अनुभवामि, किंतु विच्छिद्यविच्छिद्य न तु सततम् ॥ ८८ ॥**

बाढमिति ॥ ८८ ॥

तं गुरुराह—

**तं गुरुरुवाच—तर्हि आगन्तुके त्वेते न तवात्मभूते, यदि तवात्मभूते चैतन्यस्वरूपवत् स्वतःसिद्धे संतते एव स्याताम् । किंच स्वप्नजागरिते न तव आत्मभूते व्यभिचारित्वात् वस्त्रादिवत् । नहि यस्य यत्स्वरूपं तत् तद्व्यभिचारि दृष्टम् । स्वप्न-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जागरिते तु चैतन्यमात्रत्वाद्व्यभिचरतः । सुषुप्ते चेत् स्वप्न
व्यभिचरेत् तन्नष्टं नास्तीति वा बाध्यमेव स्यात् आगन्तुका
अतद्धर्माणां उभयात्मकत्वदर्शनात् यथा धनवस्त्रादीनां ना
दृष्टः स्वप्नभ्रान्तिलब्धानां तु अभावो दृष्टः ॥ ८९ ॥

आगन्तुके त्वेते इति । सुषुप्तौ आत्मस्वरूपे भासमानेऽपि तयोः
वभासात् न आत्मनः स्वरूपभूते ते अवस्थे । अतो विच्छिन्नविच्छिन्ना
येते त्वया ते इत्यर्थः । विमते अनात्मभूते व्यभिचारित्वात् वस्त्रादिव
यत्वा व्यतिरेकेण एतदेव द्रढयति—यदीत्यादिना । चैतन्यमात्र
दिति । चित्स्वभावादित्यर्थः । यत्र यत् अनुभवगोचरः तत्रैव चेत्
नानुभूयते तदा तस्य ध्वंसो बाधो वा स्यात्। उभयथाऽपि तस्य न आधि
धर्मत्वं इति सदृष्टान्तमुपपादयति—सुषुप्ते चेदित्यादिना। नाशो ध्वं
अभावो बाधः ॥ ८९ ॥

तत्र शिष्योऽतिप्रसङ्गं शङ्कते—

नन्वेवं भगवन्, चैतन्यस्वरूपमपि आगन्तुकं प्राप्तम् । स्व
जागरितयोरिव सुषुप्ते अनुपलब्धेः । अचैतन्यस्वरूपो
स्यामहम् ॥ ९० ॥

नन्वेवमिति । दृष्टि-श्रुति-मति-विज्ञातिलक्षणे हि स्वप्नजागरिते श
दिमत् चैतन्यमेव । अतो यदि सुषुप्तौ स्वप्नजागरिते नोपलभ्येते इति
ते न स्तः, तदा चैतन्यमेव सुषुप्तौ नास्तीत्यात्मा आगन्तुकचैतन्यो वा स्व
अचैतन्यस्वरूपो वा गत्यन्तराभावादित्यर्थः ॥ ९० ॥

गुरुः परिहरति—

न पश्य तदनुपपत्तेः। चैतन्यस्वरूपं चेत् आगन्तुकं पश्यसि
पश्य । नैतद्वर्षशतेनापि उपपत्त्या कलयितुं शक्नुमो वयं
अन्यो वाऽचैतन्योऽपि संहतत्वात् पारार्थ्यं अनेकत्वं नाशित्वं
न केनचित् उपपत्त्या वारयितुं शक्यम् । अस्वार्थस्य स्वतःसिद्ध

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वभावादित्यवोचाम । चैतन्यस्वरूपस्य तु आत्मनः स्वतःसिद्धेः अन्यानपेक्षत्वं न केनचित् वारयितुं शक्यम्, अव्यभिचारात् ९१

नेति । नैवं । नैवं वक्तुमुचितमित्यर्थः । कथं इति चेत् तत्राह–पश्येति । पर्यालोचयेत्यर्थः । वस्तुस्वभावे आलोच्यमाने चैतन्यस्य आगन्तुकत्वानुपपत्तेः नैवं वक्तुमुचितं इति वाक्यार्थः । ननु सुषुप्ते दृष्ट्यादिरूपस्य चैतन्यस्यादर्शनात् जाग्रदादौ दर्शनात् आगन्तुकमेव चैतन्यं पर्यालोचयामि इति चेत् तत्र वक्तव्यं, किं निरुपाधिकचित्स्वरूपमेवागन्तुकं पश्यसि, किंवा नयनादिद्वारकबुद्धिवृत्त्युपहितं, इति विकल्प्य आद्यं प्रत्याह—चैतन्यस्वरूपं चेदिति । अलौकिकप्रज्ञस्त्वं चेत् चैतन्यस्वरूपमागन्तुकं पश्यसि तर्हि पश्य, वयं तु न्यायप्रमाणकुशला अपि तच्चैतन्यस्वरूपमागन्तुकं द्रष्टुं घटयितुं वा न वर्षशतेनापि शक्नुमः । अन्यो वा कश्चित् अचैतन्योऽपि मूढोऽपि न शक्नुयादित्यर्थः । अयं भावः—चैतन्यस्य आगन्तुकत्वं चैतन्येन गृह्यते किंवा अचैतन्येन । नाद्यः । स्वग्राह्यत्वे स्ववृत्तिविरोधात् । नह्यङ्गुल्यग्रेण तदेव स्पृश्यते, असिधारया वा असिधारा छिद्यते, नापि अन्यचैतन्येन अन्यचैतन्यस्यागन्तुकत्वं ग्राह्यं अन्यस्य अव्याप्यसिद्धेः । न द्वितीयः । जडस्य चिदधीनप्रकाशतया चित्प्रकाशत्वायोगात् । अतः चैतन्यं नागन्तुकमिति । श्रुतिश्च भवति—'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' एवमाद्यं कल्पं अनुपपत्त्या निराकृत्य द्वितीयं अचैतन्यापादनेन निराकरोति—संहतत्वादिति । नयनादिद्वारकबुद्धिवृत्त्युपाधिग्रस्तस्य तु संहतत्वात्परार्थत्वादिकं पूर्वमेवोपपादितमिति नेदानीमुपपत्तिर्वक्तव्या इत्याह—इत्यवोचामेति । अत्रापि श्रुतिर्भवति—'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः' इत्याद्या । अस्मिंस्तु श्रुतिवाक्ये पञ्चम्यन्तशब्दवाच्यदृष्ट्यादेः अन्यद्रष्टृव्याप्यतया अचैतन्यस्वभावत्वोक्तेः दृष्ट्यादिस्वरूपप्रकाशकत्वेन द्रष्ट्रादिशब्दनिर्दिष्टः साक्षी नित्यचैतन्यस्वभावः सिद्ध इति उपसंहरति—चैतन्यस्वरूपस्य त्विति ९१

उक्तमेवार्थं युक्त्यन्तरेणोपपादयितुं शङ्कामुद्भावयति—

ननु व्यभिचारो दर्शितो मया सुषुप्ते न पश्यामीति ॥९२॥

नन्विति ॥ ९२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्तरं संग्रहेणाह—

न। व्याहतत्वात्। कथं व्याघातः पश्यतस्तत्र न पश्
इति व्याहतं वचनम्। नहि कदाचित् भगवन्, सुपुप्ते
चैतन्यं अन्यद्वा किंचित् दृष्टम्। पश्यन् तर्हि सुपुप्ते
यस्मात् दृष्टमेव प्रतिषेधसि न दृष्टिम्। या तव दृष्टिः तत्
न्यमिति मयोक्तम्। यया त्वं विद्यमानया न किंचित्
मिति प्रतिषेधसि सा दृष्टिः त्वच्चैतन्यम्। तर्हि सर्वत्र
भिचारात् कूटस्थनित्यत्वं सिद्धं स्वत एव न प्रमाणापे
स्वतःसिद्धस्य हि प्रमातुः अन्यस्य प्रमेयस्य परिच्छित्ति
प्रमाणापेक्षा। या तु अन्या नित्यापरिच्छित्तिः अ
अन्यस्य अपरिच्छित्तिरूपस्य परिच्छेदाय सा हि नित्यैव कू
स्वयंज्योतिःस्वभावा, आत्मनि प्रमाणत्वे प्रमातृत्वे वा न
प्रति प्रमाणापेक्षा, तत्स्वभावत्वात्। यथा प्रकाशनं उ
वा लोहोदकादिषु परतः अपेक्षते अग्न्यादित्यादिभ्यः अत
भावत्वात् न अग्न्यादित्यादीनां तदपेक्षा सर्वदा तत्स्व
त्वात्॥ ९३॥

न। व्याहतत्वादिति। व्याहतत्वमेव प्रश्नपूर्वकं विवृणोति—कथं
त्यादिना। नहि कदाचिदिति पुनः शिष्यप्रश्नः। पश्यंस्तर्हि
गुरोरुक्तिः। पश्यन् द्रष्टा दृष्टिमानेव त्वं सुपुप्त इत्यर्थः। यस्मादि
तदुपपादनपरो ग्रन्थः स्पष्टार्थः। सुपुप्ते मया किंचिन्न दृष्टं इति उ
परामर्शानुपपत्त्या सौपुप्तानुभवस्यावश्यंभावात्, तदा करणोपसं
आगन्तुकानुभवासंभवात् स्वरूपचैतन्यमनागन्तुकं कूटस्थात्मस्वरूपं
मित्युपसंहरति—ययेत्यादिना। चैतन्यस्य स्वतःसिद्धत्वमुपपाद
स्वतःसिद्धस्य हि प्रमातुरिति। हिशब्दो लोकानुभवप्रसिद्धिद्योतना
स्वतःसिद्धः प्रमाणनिरपेक्षत्वेनैव सिद्धः। प्रमाणप्रवृत्तेः प्रागेव प्रका

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

इति यावत् । एवंविधस्य प्रमातुः यदन्यत्प्रमेयं दृश्यं तस्य परिच्छित्तिं स्फूर्तिं प्रति प्रमाणापेक्षा न प्रमातृस्वरूपपरिच्छित्तिं प्रति इत्यर्थः । या तु अन्यस्य परिच्छित्तिरूपस्याचेतनस्य परिच्छेदाय अवभासनाय नित्या स्वतःसिद्धा च अन्या परिच्छित्तिः संविदपेक्ष्यते सा हि कूटस्थैव । यतो नित्या स्वयंज्योतिः-स्वभावाचेति योजना । तां प्रति स्वरूपकूटस्थनित्यसंविदं प्रति आत्मनि संविद्रूपे विषये प्रमाणत्वे तत्सत्तानिश्चयफलव्यापारात्मत्वे प्रमातृत्वे वा तादृग्व्यापारा-श्रयत्वे वा न प्रमाणापेक्षा प्रमात्रपेक्षा वाऽस्तीत्यर्थः । अयंभावः—अन्तःकरण-वृत्तिप्रतिबिम्बितं हि चैतन्यं प्रमाणमिष्यते । वृत्तिमदन्तःकरणप्रतिबिम्बितं प्रमातृ चैतन्यम् । तदुभयं प्रमेयावभाससमये नानवभासमानं भवति । तथा सति प्रमेयस्यैव स्वतःस्फुरणशङ्कापातादिदोषप्रसङ्गात् तदवभासश्च न प्रमा-त्रन्तरात् प्रमाणान्तराद्वा भवति, अनवस्थाप्रसङ्गात्, अनुपपत्तेश्च, इत्यतः स्वप्रकाशतयैव प्रमातृ-प्रमाण-प्रमेयानामवभासकस्यात्मनः सिद्धिरिति तस्य सिद्धा नित्यस्वप्रकाशकूटस्थचिदात्मता इति अप्रकाशस्वभावस्यैव प्रकाशा-न्तरापेक्षा न प्रकाशस्वभावस्य । उक्तमर्थं दृष्टान्तोक्त्या बुद्धिमारोहयति—यथा प्रकाशनमिति ॥ ९३ ॥

ननु संविदः प्रमाणफलत्वप्रसिद्धेः कथं नित्यत्वं इत्याक्षिपति—

**अनित्यत्वे एव प्रमा स्यात् न नित्यत्वे इति चेत् ॥ ९४ ॥**

अनित्यत्व एवेति ॥ ९४ ॥

अर्थावगतिर्हि प्रमा न तस्याः स्वरूपत एव अनित्यत्वे कल्पकमस्ति इति समाधत्ते—

**न । अवगतेः नित्यत्वानित्यत्वयोः विशेषानुपपत्तेः । नहि अवगतेः प्रमात्वे अनित्या अवगतिः प्रमा न नित्या इति विशेषः अवगम्यते ॥ ९५ ॥**

नावगतेरिति । संग्रहं विवृणोति—नहीति । चक्षुरादिद्वारकबुद्धिवृत्ति-व्यक्तायाः अवगतेः प्रमात्वे सति नित्यायाः प्रमात्वं न भवति । अनित्या-यास्तु भवति इति विशेषो न हि गम्यते विनिगमनाभावादित्यर्थः ॥ ९५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र विनिगमनाभावोऽसिद्ध इति शिष्यः शङ्कते—

**नित्यायां प्रमातुः अपेक्षाभावः । अनित्यायां तु यत्नान्तत्वात् अवगतिः अपेक्ष्यत इति विशेषः स्यादिति चेत् ॥९**

**नित्यायामिति ।** अवगतेः नित्यत्वे कारकव्यापारवैयर्थ्यं स्यात् । विशेष इत्यर्थः ॥ ९६ ॥

प्रमातुः स्वावगतेः नित्यत्वे प्रमाणव्यापारवैयर्थ्यमापद्यते, किंवा वि वगतेर्नित्यत्वे । नाद्यः । इष्टापत्तेरित्याह—

**सिद्धा तर्हि आत्मनः प्रमातुः स्वतःसिद्धिः प्रमाणनि तयैवेति ॥ ९७ ॥**

**सिद्धा तर्हीति ।** नित्यावगतिपक्षे प्रमाणनैरपेक्ष्यं चेत् त्वया अङ्गी तर्हि प्रमातुरात्मनः स्वरूपस्य स्वतःसिद्धिः स्वप्रकाशता प्रमानिरपे सिद्धेत्यर्थः । अनित्यस्यास्वप्रकाशस्य च जडत्वात् आत्मत्वानुपपत्तेः इ प्रायः ॥ ९७ ॥

ननु आत्मप्रमाया नित्यत्वात् प्रमाणानपेक्षा किं न स्यादिति शङ्कते—

**अभावेऽपि अपेक्षाऽभावः नित्यत्वात् इति चेत् । न । गतेरेव आत्मनि सद्भावादिति परिहृतमेतत् ॥ ९८ ॥**

**अभावेऽपीति ।** प्रमाभावेऽपीत्यर्थः । परिहरति—**नावगतेरि** अवगतेरात्मनि सद्भावादेव प्रमाणानपेक्षा नह्यवगत्यभावशङ्कावका असंहतस्य संघातसाक्षिणश्चितिमत्त्वोपपादनादित्यर्थः । अथवा आत्मनि प्रमाणं नापेक्षते इति वदता प्रमाणाभावमपेक्षत इत्युक्तं स्यात् इति तदपेक्षापि तव नोपपद्यते आत्मसिद्धेर्नित्यत्वादेव इति शङ्कते—**अभा पीति ।** स्वतःसिद्धप्रमाणनैरपेक्ष्यशब्दाभ्यां सर्वानपेक्षप्रकाशमानात्मस्व पस्यैव विवक्षितत्वान्नात्र शङ्कावकाश इति परिहरति—**नावगतेरिति** ॥९

इदानीं प्रमातुः स्वतःसिद्धिर्निरपेक्षैव इत्येतत् विपक्षबाधकोपन्या साधयन् नित्याया अपि प्रमाया विषयावगतित्वसिद्धये विषयस्थत्वं संपाद्य प्रमाणव्यापारापेक्षाऽस्तीति सूचयन् पक्षान्तरमपाकरोति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

प्रमातुश्चेत् प्रमाणापेक्षासिद्धिः कस्य प्रमित्सा स्यात् । यस्य प्रमित्सा स एव प्रमाता अभ्युपगम्यते । तदीया च प्रमित्सा प्रमेयविषयैव न प्रमातृविषया । प्रमातृविषयत्वे अनवस्थाप्रसङ्गात् । प्रमातुः तदिच्छायाश्च तस्याप्यन्यः प्रमाता तस्याप्यन्य इति । एवमेव इच्छायाः प्रमातृविषयत्वे प्रमातुरात्मनः अव्यवहितत्वाच्च प्रमेयत्वानुपपत्तिः । लोके हि प्रमेयं नाम प्रमातुः इच्छा–स्मृति–प्रयत्न–प्रमाणजन्म–व्यवहितं सिद्ध्यति नान्यथा अवगतिः प्रमेयविषया दृष्टा । नच प्रमातुः प्रमाता स्वस्य स्वयमेव केनचित् व्यवहितः कल्पयितुं शक्यः इच्छादीनामन्यतमेनापि । स्मृतिश्च स्मर्तव्यविषया न स्मर्तृविषया । तथा इच्छायाः इष्टविषयत्वमेव न इच्छावद्विषयत्वम् । स्मर्त्रिच्छावद्विषयत्वेऽपि हि उभयोः अनवस्था पूर्ववदपरिहार्या स्यात् ॥ ९९ ॥

प्रमातुश्चेदित्यादिना । अयमर्थः–सर्ववस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषय एवेति स्थिते कदाचिदज्ञातत्वेन निर्विकल्पकसाक्ष्यवगतस्य ज्ञातत्वव्यवहारसिद्धये यस्य प्रमित्सोत्पद्यते स एव तदा प्रमाता प्रमाणव्यापाराश्रय इत्युच्यते । तत्र प्रमातुः स्वरूपसिद्धिश्चेत् प्रमाणापेक्षा स्यात् तदा कस्य प्रमित्सा स्यात् तस्यैव वा, अन्यस्य वा, प्रमातुमिच्छा स्वविषया, अन्यविषया वा, सर्वथापि नोपपद्यते इति । तत्र इच्छाश्रयस्येच्छागोचरत्वं निराकुर्वन् स्वप्रमातृकत्वमात्मनो निराकरोति—यदीया चेति । कर्मविषया न कर्तृविषया इत्यर्थः । कर्तैव कर्मापि किं न स्यात् इत्याशङ्क्य एकस्यां क्रियायां एकस्यैव गुणप्रधानभावेन कर्तृकर्मतया वैरूप्यप्रसङ्गान्मैवं इत्यभिप्रेत्य अन्यप्रमातृकत्वे स्वयमसिद्धस्य अन्यसाधकत्वानुपपत्तेः अकरणस्य च निलीनतया साधकत्वासंभवात् तस्यापि सिद्धावन्यापेक्षायां तस्यापि तथात्वं इत्यनवस्थामाह—प्रमातृविषयत्व इति । प्रमातुरनवस्थामभिनयति—अप्यन्य इति । उक्तमनवस्थामिच्छायामतिदिशति—एव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेवेति। आत्मनोऽप्रमेयत्वे हेत्वन्तरमाह—प्रमातुरिति । तदेव
यति—लोके हीति । इच्छाजन्मव्यवहितमिष्यमाणं भवति,
जन्मव्यवहितं स्मर्तव्यम्, प्रयत्नजन्मव्यवहितं च क्रियासाध्यं प्रयत्न
प्रमाकरणव्यापारोत्पत्तिव्यवहितं प्रमेयमिति हि लोकप्रसिद्धमित्यर्थः।
तीति निष्पत्तिप्रकाशयोर्निर्देशः । अन्वयमुक्त्वा व्यतिरेकमाह—
थेति । अवगतिशब्दश्च प्रकाशप्राप्त्योः साधारणः सुषुप्तस्यापि प्रमे
द्धिप्रसङ्गादिति भावः । तर्हि प्रमातुरपि सिद्धिः इच्छादिजन्मव्य
तैव भवतु, नेत्याह—नचेति । स्वयमेव प्रमाता स्वस्यैव प्रमातुः
दीनां अन्यतमेनापि व्यवहितः कल्पयितुं नच केनचित् शक्यः
न्वयः । तत्र हेतुमाह—स्मृतिश्चेत्यादिना । स्मृतीच्छयोः स्व
विषयकत्वे बाधकमाह—स्मर्त्रिच्छावद्विषयत्वे हीति। स्मर्ता च
वांश्च स्मर्त्रिच्छावन्तौ तौ विषयौ ययोः तयोर्भावः स्मर्त्रिच्छावद्विषयत्वं
त्विति विग्रहः। उभयोः स्मृतीच्छयोरित्यर्थः। स्मर्तुः स्ववृत्तिव्याप्यत्वा
स्मर्त्रन्तरस्मृतिविषयता वक्तव्या । तथाच एकस्मिन्नात्मनि स्मर्त्रन्तरा
गमे तस्यापि पूर्वसमानयोगक्षेमतया स्मृत्यनवस्था स्यादित्यर्थः। तु
च्छायाः प्रयत्नस्येति च द्रष्टव्यम् ॥ ९९ ॥

तदेवमात्मनि न प्रमाणव्यापारापेक्षा प्रमातुः स्वविषयप्रमाणक्रिया
त्वायोगात् प्रमान्तरकल्पनायां अनवस्थानात् अप्रमेय एवात्मा सि
तस्य च बाह्यविषयावच्छेदाय प्रमाणव्यापारापेक्षासंभवाच्च तद्वैयर्थ्यं
चोक्त्या अवगतेः स्वतो नित्यत्वं साधितम्। इदानीं प्रकरणान्तरेण
साधयितुं पूर्वपक्षयति—

नतु प्रमातृविषयावगत्यनुत्पत्तौ अनवगत एव प्रमा
स्यादितिचेत् ॥ १०० ॥

ननु प्रमातृविषयेति । यद्विषयाऽवगतिरुत्पद्यते सोऽवगतः
इति चोच्यते । प्रमातुश्चावगत्यनुत्पत्तौ प्रमाता सुषुप्त एव सदा
इत्यर्थः ॥ १०० ॥

तत्र किं सुषुप्तसाम्यपरिहाराय आत्मनोऽवगतिविषयत्वं वक्तव्यमि
प्रायः, किं वा सुषुप्तसाम्यपरिहारमात्रं वक्तव्यमिति। तत्र नाद्य इत्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

न, अवगन्तुः अवगतेः अवगन्तव्यविषयत्वात् अवगन्तृविषयत्वे च अनवस्था पूर्ववत् स्यात् । अवगतिश्च आत्मनि कूटस्थनित्यात्मज्योतिः अन्यतः अनपेक्षैव सिद्धा अग्न्यादित्याद्युष्णप्रकाशवदिति पूर्वमेव प्रसाधितम् । अवगतेः चैतन्यात्मज्योतिषः स्वात्मनि अनित्यत्वे आत्मनः स्वार्थतानुपपत्तिः कार्यकारणसंघातवत् संहतत्वात् पारार्थ्यं दोषवत्त्वं च अवोचाम । कथम् । चैतन्यात्मज्योतिषः स्वात्मनि अनित्यत्वे स्मृत्यादिव्यवधानात् सान्तरत्वम् । ततश्च तस्य चैतन्यज्योतिषः प्रागुत्पत्तेः प्रध्वंसाच्चोर्ध्वं आत्मन्येव अभावात् चक्षुरादीनामिव संहतत्वात् पारार्थ्यं स्यात् । यदा च तत् उत्पन्नं आत्मनि विद्यते न तदा आत्मनः स्वार्थत्वम् । तद्भावाभावापेक्षा हि आत्मानात्मनोः स्वार्थत्वपरार्थत्वसिद्धिः । तस्मात् आत्मनः अन्यनिरपेक्षमेव नित्यचैतन्यज्योतिष्ट्वं सिद्धम् ॥ १०१ ॥

नावगन्तुरिति । अवगन्तुरवगतिविषयत्वे स्वाश्रयावगतिव्याप्यत्वायोगात् अवगत्यन्तरावगतिविषयत्वं वाच्यम् । तथाच अनवस्था पूर्ववत् स्मृतीच्छाविषयत्ववत्स्यादित्यर्थः । द्वितीयं प्रत्याह—अवगतिश्चेति । 'अत्रायं पुरुषः स्वयंज्योतिः' 'आत्मैवास्य ज्योतिः' 'एषोऽस्य परमो लोकः' 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इत्यादिश्रुतेः आत्मनो नित्यप्रकाशस्वभावत्वावगमात् अग्न्युष्णप्रकाशवदलुप्तावगतिरूपे अवगत्युत्पत्त्यपेक्षाभावात् न सुषुप्ततुल्यता तस्येति भावः । विपक्षे च उक्तं दोषं स्मारयति—अवगतेश्चैतन्यात्मज्योतिष इति । उक्तामेवानुपपत्तिं प्रश्नपूर्वकमुपन्यस्यति—कथमित्यादिना । स्मृत्यादेः स्मृतीच्छादिरूपाव्यवधानात् विच्छेदात् चैतन्यज्योतिषः सान्तरत्वम् । इच्छादिवृत्त्यन्तरपूर्वकत्वमित्यर्थः । किं तत्र स्यात्तदाह—ततश्चेति । आत्मा यदि आगन्तुकचित्प्रकाशविषयः स्यात् तदा संहतः परार्थश्च स्यात् इन्द्रियान्तःकरणप्राणादिवदिति । फलितमाह—यदा चेति । चैतन्यज्योतिः तच्छब्दार्थः । यदा च आत्मनि तदुत्पन्नं विद्यते



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदा नैवमात्मनः स्वार्थत्वं संभवतीत्यन्वयः । तत्र हेतुमाह—तद्भाव
तस्य संहतत्वस्य यो भावाभावौ तदपेक्षा हि इति योजना । आगन्तुकत्वे
शगम्यस्यानात्मत्वनियमात् तस्य च पारार्थ्यात् तद्विलक्षण आत्मा नि
न्यस्वरूप एव सन् सदैवावभासते इत्युपसंहरति—तस्मादिति ॥ १०

इदानीं नित्यचैतन्यस्वरूपत्वे प्रमातृत्वानुपपत्तिं शङ्कते—

ननु एवं सति असति प्रमाऽऽश्रयत्वे कथं प्रमातुः प्र
त्वम् ॥ १०२ ॥

नन्विति ॥ १०२ ॥

जन्यप्रमाश्रयत्वाभावेऽपि प्रमातृत्वव्यपदेश उपपद्यते इति परिहर

उच्यते—प्रमायाः नित्यत्वे अनित्यत्वे च रूपविशेषाभा
अवगतिर्हि प्रमा । तस्याः स्मृतीच्छादिपूर्विकायाः अनि
कूटस्थनित्याया वा न स्वरूपविशेषो विद्यते । यथा धात्
तिष्ठत्यादेः फलस्य गत्यादिपूर्वकस्य अनित्यस्य अपूर्वस्य नि
वा रूपविशेषो नास्तीति तुल्यो व्यपदेशो दृष्टः—ति
मनुष्याः तिष्ठन्ति पर्वताः इत्यादि । तथा नित्यावगति
येऽपि प्रमातरि प्रमातृत्वव्यपदेशो न विरुध्यते फलसाम
दिति ॥ १०३ ॥

उच्यते इत्यादिना । रूपविशेषः स्वरूपविशेषः । संग्रहं विवृ
अवगतिर्हीति । तत्र दृष्टान्तमाह—यथेति । तिष्ठतिर्हि अ
प्रयुज्यते, तत्र किंचिद्गतिपूर्वकमेव अचलं भवति—यथा जंगम
किंचित् अचलमेव सदा—यथा स्थावरजातम् । उभयत्र तिष्ठति
कश्चिद्विशेषोऽवगम्यते—यथा प्रमातेति । नित्यप्रमाश्रयत्वेऽपि व्यप
विरुध्यत इत्यर्थः । फलसामान्यादिति । फलस्वरूपे प्रमायां वि
वादित्यर्थः । अयमाशयः—प्रमाणफलं हि प्रमा सा च चित्
प्रमातृगतैव वक्तव्या । अन्यथा विषयगतत्वेन मयेदं विदितं इति
ज्ञानज्ञेयसंबन्धानुभवानुपपत्तेः । जडस्य च अन्तःकरणादेः व्यापार
ऽपि चिदाश्रयत्वायोगात् प्रमात्वानुपपत्तेः । चिदात्मनस्तु कूटस्थत्वाद्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

रवत्वायोगात् प्रमां प्रति कर्तृत्वानुपपत्तेः मुख्यया वृत्त्या जडाजडयोः उभयोरपि प्रमातृत्वव्यपदेशायोग्यत्वात् परस्पराध्यासेन व्यवहारप्रवृत्तेः मिथ्यैयात्मनो बाह्यविषयेऽपि प्रमातृत्वमिति स्थितौ स्वात्मनि स्वयंप्रकाशस्वभावे कुतः प्रमातृत्वशङ्कावकाशः, कुतस्तरां अनवभासप्रसङ्गः, कुतस्तमां च प्रमाणापेक्षेति ॥ १०३ ॥

एवं कूटस्थनित्यचैतन्यज्योतिषः अन्तःकरणोपाधिसंबन्धात्प्राप्तमौपाधिकं प्रमातृत्वं उपपाद्य इदानीं कर्तृत्वमपि तथैवेति प्रतिपादयितुं चोद्यमुत्थापयति—

अत्राह शिष्यः—नित्यावगतिस्वरूपस्य आत्मनः अविक्रियत्वात् कार्यकरणैः असंहत्य तक्षादीनामिव वास्यादिभिः कर्तृत्वं नोपपद्यते, असंहतस्वभावस्य च कार्यकरणोपादाने अनवस्था प्रसज्यते । तक्षादीनां तु कार्यकरणैः नित्यमेव संहतत्वमिति वास्याद्युपादाने नानवस्था स्यादिति ॥ १०४ ॥

अत्राहेति । तक्षादीनामिवेति । व्यतिरेकदृष्टान्तः । तक्षा काष्ठवर्धकः । वासी तदायुधविशेषः । कस्माच्चोपपद्यते इत्यत आह—असंहतस्वभावस्येति । तक्षादिदृष्टान्तं विवृणोति—तक्षादीनां त्विति । अनवस्था न स्यादिति संबन्धः । इतिशब्दः शङ्कासमाप्त्यर्थः ॥ १०४ ॥

असंहतस्य कर्तृत्वादर्शनात् आत्मनोऽपि संहतत्वं सिषाधयिषितं, किं वा वस्तुतः तस्य कर्तृत्वाभाव इति वक्तव्यम् । तत्राद्यः पक्षः आत्मनः कूटस्थत्वसाधनेनैवापोहितत्वात् अनवसरदुःस्थ इति मत्वा द्वितीयमङ्गीकरोति—

इह तु असंहतस्वभावस्य करणानुपादाने कर्तृत्वं नोपपद्यत इति करणं उपादेयम्, तदुपादानमपि विक्रियैवेति तत्कर्तृत्वे करणान्तरमुपादेयम्, तदुपादानेऽपि अन्यदिति प्रमातुः स्वातन्त्र्ये अनवस्था अपरिहार्या स्यात् इति । नच क्रियैव आत्मानं कारयति अनिर्वर्तितायाः स्वरूपाभावात् । अथ अन्यत् आत्मानं उपेत्य क्रियां कारयतीति चेत् । न । अन्यस्य स्वतःसिद्धत्वा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषयत्वाद्यनुपपत्तेः । नहि आत्मनः अन्यत् अचेतनं वस्तु माणकं दृष्टम् । शब्दादिसर्वमेव अवगतिफलावसानप्रत्ययमितं सिद्धं स्यात्, अवगतिश्चेदात्मनोऽन्यस्य स्यात्, आत्मैव असंहतः स्वार्थः स्यात् न परार्थः । नच देहेन्द्रियाणां स्वार्थतां अवगन्तुं शक्नुमः । अवगत्यवसानप्रत्ययसिद्धिदर्शनात् ॥ १०५ ॥

असंहतस्वभावस्य करणानुपादान इति । स्वातन्त्र्ये कर्तृत्वमित्यर्थः । अयं भावः—कर्तृत्वं क्वचित् करणोपादानसाध्यं क्वचित्तु स्वसत्तामात्रनिबन्धनम् । तत्र करणोपादानसाध्ये कर्तृत्वे वस्तुनः आत्मनः करणोपादानासंभवात् कर्तृत्वाभावः पारमार्थिकः, तथापि लौकिककर्तृत्वं तैजसवच्च आत्मनः कर्तृत्वप्रतिभासो मायाप्रत्युपस्थापितान्तःकरणविवेकादुत्पद्यते, द्वितीये तु तक्षाद्यात्मनः स्वहस्तादिव्यापारयितृत्वरूपे स्वसान्निध्यातिरिक्तस्य करणादेरभाववत् आत्मनोऽपि सकलकरणसान्निध्यमात्रेणैव कर्तृत्वव्यपदेश उपपद्यतेति—परमार्थतोऽकर्तृत्वं विवेकात् कर्तृत्वव्यपदेशश्चेति न किंचन अवद्यमिति । तथाच पारमार्थिकद्वयं 'कर्ता शास्त्रार्थवत्वात्', 'यथा च तक्षोभयथा' इति च । तर्हि तद्ध एव करिष्यत्यात्मा इति कर्ममीमांसकमतमाशङ्क्य प्रत्याह क्रियेति । क्रियाशब्दः किं प्रयत्नवचनः, तद्व्याप्यधात्वर्थवचनो वा, ध्याऽपूर्ववचनो वा, इति विकल्प्य आद्यौ प्रत्याह—अनिर्वर्तितया नहि स्वयमसिद्धः परं साधयतीति न्यायादित्यर्थः । तृतीयेऽपि किं दपायं नियोगाख्यमपूर्वं विवक्षितं, उत पूर्वनिर्वृत्तं धर्माधर्माख्यम् । पूर्वोक्तदूषणानुवृत्तेः । नच लिङादिश्रवणसमनन्तरं प्रतीयमानाकारं स्वात्मानमिति वाच्यम् । प्रतीतिकाले यद्यस्तीति बुद्धिः तदा सिद्धत्वात् न कारयितृत्वम् । नास्तीति प्रतीतौ वन्ध्यासुतवत् न कारयितृत्वम्, रणप्रतीतौ च पक्षे निवृत्तिसंभवात् न प्रेरकत्वसिद्धिः इत्यभिप्रेत्य मुत्थापयति—अथेति । यदप्यन्यत् पूर्वसिद्धं तदचेतनं, चेतनं वा न प्रेरकत्वसंभव इत्याह—नेत्यादिना । आदिशब्दात् प्रेरकत्वग्रह चात्मनः कर्तृत्वे सति लब्धस्वरूपस्यादृष्टस्य प्रेरकत्वसिद्धिः तत्सिद्धौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिद्धिः इत्यन्योन्याश्रय इति भावः । द्वितीयं प्रत्याह—नहीति । अदृष्टं अचेतनं आत्मान्यत्वात् शब्दादिवत् इत्यर्थः । स्वप्रमाणकं स्वतःसिद्धमिति यावत् । अतः स्वसत्तास्फूर्त्योः आत्मसापेक्षस्य कुतस्तत्प्रेरकत्वसंभव इति भावः । शब्दादीनामनात्मसापेक्षसिद्धिकत्वं पूर्वोक्तं स्मारयति—शब्दादिर्यमेवेति । एवं मीमांसकशङ्का निराकृता । एवं क्षेत्रज्ञातिरिक्तोऽपीश्वरोऽवगत्याश्रयः प्रेरकश्चास्तीति नैयायिकशङ्कां अपाकुर्वन् आत्मान्यस्याचेतनत्वानुमाने व्यभिचारप्रसक्तिं वारयति—अवगतिश्चेदिति । ईश्वरो वस्तुतः आत्मभिन्नो न भवति अवगत्याश्रयत्वात् प्रत्यगात्मवत्, प्रत्यनुमानानुगृहीतायाः 'अयमात्मा ब्रह्म' इत्यादिश्रुतेः । आत्मनाऽन्यो न चेतनोऽस्ति स आत्मभूत ईश्वरो देहादिभिः असंहतः स्वार्थः स्वतन्त्रः न परतन्त्र इति न क्रियाशेपः । अतः आत्मनः कर्तृत्वं विभ्रममात्रमित्यर्थः । ईश्वरात्मनो जगत्कर्तृत्वमपि मायाद्वारकमेवेति न क्वापि कर्तृत्वपरमार्थमिति भावः । ननु अवगत्याश्रयत्वात् कथं असंहतत्वादिः । यतो देहादेः संहतस्यापि अवगत्याश्रयत्वमस्ति इति लोकायतमतं आशङ्क्याह—नचेति । देहादिः नावगत्याश्रयः अवगम्यमानत्वात् घटादिवत् इत्यर्थः ॥ १०५ ॥

ननु कथं देहादेः अवगत्यवसानप्रत्ययापेक्षसिद्धिकत्वं, यावता मनुष्योऽहं पश्यामि जानामि इति स्वसंवेद्यत्वमनुभूयते इति शङ्कते—

ननु देहस्यावगतौ न कश्चित् प्रत्यक्षादिप्रत्ययान्तरं अपेक्ष्यते ॥ १०६ ॥

नन्विति ॥ १०६ ॥

अनुभवमात्रमङ्गीकरोति—

बाढम् । जाग्रति एवं स्यात् । मृतिसुषुप्त्योस्तु देहस्यापि प्रत्यक्षादिप्रमाणापेक्षैव सिद्धिः तथैव इन्द्रियाणां बाह्या एव हि शब्दादयो देहेन्द्रियाकारपरिणता इति प्रत्यक्षादिप्रमाणापेक्षैव हि सिद्धिः । सिद्धिरिति च प्रमाणफलं अवगतिं अवोचाम । सा च अवगतिः कूटस्था स्वयंसिद्धाऽऽत्मज्योतिःस्वरूपेति च ॥ १०७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बाढमिति। नायमनुभवः स्वनिबन्धनः किंतु देहात्मनोः अविवे बन्धन इति। प्रत्याययति—जाग्रत्येवं स्यादित्यादिना। यदि देहः स्व प्रकाशस्वभावः स्यात्। तदा स्वसत्तायां प्रमाणनिरपेक्षस्वभावत्वात् इ मरणावस्थस्यापि प्रमाणानपेक्षसिद्धिकत्वं स्यात्, नचैवमस्ति तस्मात् तनो देह इत्यर्थः। देहे उक्तन्यायमिन्द्रियादौ अतिदिशति—तथेन्द्रि णामिति। तथा देहवत् प्रमाणापेक्षैव सिद्धिरित्यर्थः। किंच देहादि भौतिकत्वात् बाह्यवत् इत्याह—बाह्या एव हीति। भूतान्येव ग्राह्य ककरणतदायतनत्वेन परिणमन्ते। उपकार्योपकारकभावेन मिथः संह समानयोनित्वनियमात् इति भावः। ननु सिद्धिरिति निष्पत्तिरुच्यते प्रत्यक्षाद्यपेक्षेति तत्राह—सिद्धिरिति चेति। देहाकारपरिणतेषु मदशक्तिवत् अवगतिः उत्पद्यत इति तस्यापि भौतिकत्वं अविदि लोकायतिकशङ्कामपाकुर्वन् अवगतिस्वरूपमाह—सा चेति। इति चाम इत्यनुषङ्गः॥ १०७॥

अवगतेः कूटस्थत्वे तस्याः फलत्वप्रसिद्धिविरोधं शङ्कते—

अत्राह चोदकः। अवगतिः प्रमाणानां फलं कूटस्थ रमज्योतिःस्वरूपेति च विप्रतिषिद्धम् इत्युक्तवन्तमाह—न तिषिद्धम्। कथं तर्हि कूटस्था नित्यापि सती प्रत्यक्षादि यान्ते लक्ष्यते तादर्थ्यात्। प्रत्यक्षादिप्रत्ययस्य अनित्यत्वे त्येव भवति तेन प्रमाणानां फलं इति उपचर्यते॥ १०८

अत्राहेति। अकार्यरूपाया अपि अवगतेः कार्यत्वं कूपाकाशका उपचर्यते इति न फलत्वप्रसिद्धिविरोध इति परिहरति—इत्युक्तवन्त न विप्रतिषिद्धमिति। उपचारनिमित्तं पृच्छति—कथं तर्हीति। रमाह—कूटस्थेति। तादर्थ्यादिति। प्रत्यक्षादिप्रत्ययस्य बुद्धिवृत्तेः संसृष्टतया अवगत्यभिव्यक्त्यर्थत्वादित्यर्थः। तदेवं कूटस्थावगतिरूपे प्रमातृत्वं कर्तृत्वं फलत्वं च कल्पनामात्रं इत्युपपादितम्, संहतस्य च देहविषयपर्यन्तस्य पारार्थ्यं जाड्यं पराधीनसिद्धिकत्वं चोक्तम्॥ १०८॥

इदानीं एवं आत्मानात्मनोरवगमितं तत्त्वमवगम्य शिष्यः स्वाव गुरुं प्रति निवेदयन् अद्वैतत्वमात्मनः संभावयितुं द्वैतस्य मृषात्वं प्रक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

यद्येवं भगवन्! कूटस्थनित्यावगतिः आत्मज्योतिःस्वरूपैव स्वयंसिद्धा आत्मनि प्रमाणनिरपेक्षत्वात् ततोऽन्यतः अचेतनं संहत्यकारित्वात् परार्थं येन च सुखदुःखमोहप्रत्ययावगतिरूपेण पारार्थ्यं तेनैव स्वरूपेण अनात्मनः अस्तित्वं नान्येन रूपान्तरेण, अतो नास्तित्वमेव परमार्थतः। यथा हि लोके रज्जुसर्पमरीच्युदकादीनां तदवगतिव्यतिरेकेण अभावो दृष्टः एवं जाग्रत्स्वप्नद्वैतभावस्यापि तदवगतिव्यतिरेकेण अभावो युक्तः। एवमेव परमार्थतः भगवन्, अवगतेः आत्मज्योतिषः नैरन्तर्यभावात् कूटस्थनित्यता अद्वैतभावश्च सर्वप्रत्ययभेदेषु अव्यभिचारात् प्रत्ययभेदास्तु अवगतिं व्यभिचरन्ति। यथा स्वप्ने नीलपीताद्याकारभेदरूपाः प्रत्ययाः तदवगतिं व्यभिचरन्तः परमार्थतो न सन्तीत्युच्यन्ते एवं जाग्रत्यपि नीलपीतादिप्रत्ययभेदाः तामेवावगतिं व्यभिचरन्तः असत्यरूपा भवितुमर्हन्ति। तस्याश्चावगतेः अन्यः अवगन्ता नास्तीति न स्वेन स्वरूपेण स्वयं उपादातुं हातुं वा शक्यते अन्यस्य च अभावात् ॥ १०९ ॥

यद्येवं भगवन्नित्यादिना। हे भगवन्, यद्येवं प्रत्यगात्मतत्त्वं कूटस्थत्वादिविशेषणावगत्यात्मकं तर्हि न प्रमातृत्वादिधर्मकं यतः अतः प्रमाणनिरपेक्षत्वात् परमार्थतः प्रमातुरभावे प्रमाणस्याप्यभावात् तन्निरपेक्षसिद्धिकम्, ततः प्रत्यगात्मनः अन्यदचेतनं परस्परोपकार्योपकारकभावेन संहत्य व्यवहारप्रवर्तकत्वात् परार्थं चेतनार्थं चैतन्यप्रतिभासमात्रसिद्धं स्वप्नदृष्टवत्—अनृतमित्यर्थः। ननु सुखदुःखमोहान्वयित्वेन दृश्यस्य सत्त्वरजस्तमोरूपप्रकृतिकार्यत्वावगमात्कथमनृतत्वमिति सांख्यशङ्कामपाकरोति—येन चेति। येन दृश्यमानाकारेण सुखदुःखमोहहेतुप्रत्ययावगतिरूपेण जडं परार्थं भोक्तृशेषवत् प्रतीयते तेनैव रूपेणात्मनः स्वस्य दृश्यस्येति यावत्। अस्तित्वं सद्भावः नान्येन सत्त्वाद्यात्मना रूपान्तरेण, तत्र प्रमाणाभावात्। अतः परमार्थतो नास्तित्वमेव दृश्यस्येत्यर्थः। किंच विमतं जाग्रत्स्वप्नावस्थं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृश्यं नावगतिव्यतिरेकेण क्वचिदपि परमार्थसत् दृश्यत्वात् जडत्वाद्वा सर्पादिवदित्याह—यथाहीति। एवं दृश्यस्य सापेक्षत्वेन मायामयत्वे वित्ते द्रष्टृत्वमद्वैतमनुभवारूढं मम संवृत्तमित्याह—एवमेवेति। सतीत्यर्थः। नैरन्तर्यभावादेवेति एवकारो योज्यः। अथवा—यथा दृश्यस्य येन रूपेण परमार्थतः असत्त्वमनुभूयते मया, एवमेव भगवन् गत्यात्मकस्य प्रत्ययप्रकाशस्य कूटस्थनित्यताऽद्वैतभावश्च मयानुभूयत हारः। कूटस्थनित्यतायां हेतुः—नैरन्तर्यभावादिति। उत्पत्त्यादिसा उत्पत्त्यादिविकारस्यान्तरायस्यासंभवादित्यर्थः। अद्वैतभावे हेतुमाह—प्रत्ययेति। व्यावर्तमानेषु प्रत्ययेषु अव्यावृत्तेरित्यर्थः। ननु कुसुमेषु द्व्यावृत्तावपि अवगत्यात्मनो न अद्वैतत्वसिद्धिः प्रत्ययानां कुसुमवद तत्वात् इत्याशङ्क्य अवगतिव्यावृत्तानां अज्ञातसत्त्वे मानाभावान्मैवमि त्याह—प्रत्ययभेदास्त्विति। विमताः जाग्रत्प्रत्ययाः परमार्थतो न चैतन्यप्रकाशव्यभिचारित्वात्, य एवं त एवं यथा स्वप्नप्रत्ययाः त तस्मात्तथेति समुदायार्थः। द्वैतस्य मिथ्यात्वे तस्य दृश्यत्वं व्यभिचा कारणमुक्तम्, तच्चैतन्यस्वरूपे आत्मनि नास्तीत्यात्मनः सत्यत्वं कूटस्थ स्वप्रकाशत्वं च सिद्धमित्याह—तस्याश्चावगतेरिति। योऽवगन्ता एवात्मा इति स्थितेः अवगन्तुरवगम्यमानत्वाभावादवगम्यमानस्य च त्मत्वात् आत्मा स्वतः परतो वा नोपादेयो न हेयश्च। अन्यस्य च अ पूर्णोऽहं त्वत्प्रसादादिदानीमस्मीति शेषः ॥ १०९ ॥

एवं शिष्येणोक्तं गुरुरनुजानाति—

तथैवेति। एषा अविद्या यन्निमित्तः संसारो जाग्रत्स्व क्षणः तस्या अविद्यायाः विद्या निवर्तिका इत्येवं त्वं अ प्राप्तोऽपि—नातः परं जाग्रत्स्वप्नदुःखमनुभविष्यसि संसारदु न्मुक्तोऽसीति ॥ ११० ॥

तथैवेति। प्रकरणोपक्रमे पृष्टं विद्याऽविद्यास्वरूपं तद्विभागं सम्प्रप पादितमुपसंहरति—एषा अविद्येत्यादिना। यन्निमित्तः संसारो जा मलक्षणः एषा अविद्या इत्यन्वयः। विद्या वेदान्तमहावाक्यजन्यप्रत्य व्यक्तकूटस्थात्मप्रकाशरूपा इत्यर्थः। एषा च विद्या तवेदानीं संवृत्तेति कृत्यस्त्वमिति शिष्यं प्रति आह गुरुः—इत्येवमिति ॥ ११० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

गुरुणोक्तं शिष्योऽपि अनुमनुते—

**ओमिति ॥ १११ ॥**

ओमितीति । इतिशब्दः प्रकरणपरिसमाप्तिद्योतनार्थः ॥ १११ ॥

॥ इति कूटस्थाद्ध्यात्मबोधनामकं अवगतिप्रकरणं द्वितीयं विवृतम् ॥ २ ॥

---

## ॥ अथ परिसंख्यानप्रकरणं तृतीयम् ॥ ३ ॥

यथोक्तविद्यावतः कृतकृत्यत्वात् न किंचिद्विपित्तः अनुष्ठेयमस्ति इत्युपपादितम् । तत्र यद्येवं विज्ञानवतामपि केषांचित् भेददर्शनवासनावशात् निर्वातस्थप्रदीपवत् निश्चलं विज्ञानं न भवति तदा तेषां ज्ञानदार्ढ्याय परिसंख्यानं नाम वक्ष्यमाणमनुचिन्तनमनुष्ठेयमुपदेष्टुमारभते—

**मुमुक्षूणां उपात्तपुण्यापुण्यक्षपणपराणां अपूर्वानुपचयार्थिनः परिसंख्यानमिदमुच्यते अविद्याहेतवो दोषाः वाङ्मनःकायप्रवृत्तिहेतवः—प्रवृत्तेश्च इष्टानिष्टमिश्रफलानि कर्माणि उपचीयन्ते इति तन्मोक्षार्थम् ॥ ११२ ॥**

मुमुक्षूणामित्यादिना । मुमुक्षूणां परममुपशममिच्छतामित्यर्थः । अविद्यामूलकत्वात् कर्मणां तन्निवृत्तिमन्तरेण आत्यन्तिकनिवृत्त्यसंभवात् पूर्वोपार्जितकर्मोच्छेदः अपूर्वकर्मानुपजनिश्च अविद्यानिवृत्त्यैवोपपत्स्यत इति अविद्यानिवृत्तिद्वारा तदुभयमिच्छतामित्युत्तरविशेषणद्वयस्यार्थः । परिसंख्यानानुष्ठानप्रयोजनमाह—अविद्याहेतव इति । अविद्या हेतुः निदानं येषां ते तथा । दोषाः रागद्वेषादयः । तेच वागादीनां व्यापारोत्पत्तिहेतवः । तद्व्यापाराच्च द्विविधं कर्मजातम् शास्त्रीयं स्वाभाविकं च देवतिर्यङ्मनुष्यत्वप्रापकं उपचीयत इति यतः अतः तन्मोक्षार्थमविद्यारागादिनिबन्धनकर्मतत्फलसङ्गनिवृत्त्यर्थं परिसंख्यानं कार्यमित्यर्थः ॥ ११२ ॥

परिसंख्यानप्रकारं सोपस्करं निरूपयति—

**तत्र शब्दस्पर्शरूपरसगन्धानां विषयाणां श्रोत्रादिग्राह्यत्वात् स्वात्मनि परेषु वा विज्ञानाभावः, तेषामेव परिणतानां यथा**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोष्टादीनां श्रोत्रादिद्वारैश्च ज्ञायन्ते, येन च ज्ञायन्ते सः ज्ञ
त्वात् अतज्जातीयः, ते हि शब्दादयः अन्योन्यसंसर्गि
जन्मवृद्धिविपरिणामापक्षयनाशसंयोगवियोगाविर्भावतिरो
विकारविकारिक्षेत्रबीजाद्यनेकधर्माणः सामान्येन च सुखदु
द्यनेककर्माणः। तद्विज्ञातृत्वादेव तद्विज्ञाता सर्वशब्दादिध
लक्षणः ॥ ११३ ॥

तत्रेत्यादिना। तत्र प्रथमं आत्मानं अनात्मभ्यो विविच्य अनुस
तेत्युपदिशन् तद्विवेकप्रकारमाह—शब्दस्पर्शेत्यादिना। विषयत्वे हे
श्रोत्रादिग्राह्यत्वादिति। स्वात्मनि शब्दादिस्वरूपे परेषु वा घ
विज्ञानाभावो विज्ञातृत्वाभावः चैतन्याभावो वा निश्चितः यथा लो
विषयाणां तथा तेषामेव शब्दादीनां भूतसूक्ष्माणां परिणतानां देहा
रतां आपन्नानां यथोक्तविज्ञानाभावो निश्चीयत इति योजना। वि
देहादयो न चेतनावन्तः विज्ञानकर्मत्वात् लोष्टादिवदित्यर्थः। हेत्व
परिहरति—श्रोत्रादीति। ज्ञायन्ते देहाद्याकारपरिणताः शब्दादय
शेषः। देहेन्द्रियमनोबुद्धिप्राणाहंकारपर्यन्तस्य साक्ष्यस्यानात्मतया हेय
पदिश्य अवशिष्टमहेयमनुपादेयं च साक्षिणमात्मानं दर्शयति—येन चे
अतज्जातीयः। भूतसंघातविलक्षणस्वभाव इत्यर्थः। विलक्षणस्वभाव
प्रकटयितुं विषयस्वभावमुपन्यस्यति—ते हीत्यादिना। जन्मग्रहणादेव
नन्तरास्तित्वं गृहीतं द्रष्टव्यम्। जन्मादयः षड्भावानां स्वरूपनिब
विकाराः, संयोगविभागौ पुत्राद्यनुबन्धनिबन्धनौ, आविर्भावतिरोभाव
आगन्तुकप्रकाशविषयतया जडत्वद्योतकौ दर्शनादर्शने आविर्भावादिशब्द
विकारविकारीति व्रणगण्डस्फोटाद्यवस्थोच्यते। क्षेत्रबीजेति स्त्रीपुंप्रकृत
कपरिणामभेद उक्तः। आदिपदात् अनुक्त अवान्तरभेदपरिग्रहः। एवं
नेकधर्मवन्त इत्यर्थः। सामान्येनेति। शब्दाद्यनुभवे सति सुखदुः
हरागाद्युत्पत्तिः प्रसिद्धेत्यर्थः। कर्मशब्दः कार्यवचनः। शब्दादिविषय
स्यासाक्षिणः तद्विलक्षणस्वभावत्वमाह—तद्विज्ञातृत्वादेवेति ॥ ११
एवं साक्षिसाक्ष्यान्वयव्यतिरेकाभ्यां आत्माऽनात्मानौ विविच्य आत्मा
मेव शुद्धमहं ब्रह्मास्मीत्यनवरतमनुचिन्तयतः यदा अन्यप्रयुक्तशब्दा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

म्भनिमित्तविक्षेपः उपस्थितो भवति तदा अवकूपानैपुर्यादिविकारोद्भवपरिहाराय अनुचिन्तनीयमुपदिशति—

तत्र शब्दादिभिः उपलभ्यमानैः पीड्यमानो विद्वान् एवं परिसंचक्षीत ॥ ११४ ॥

तत्र शब्दादिभिरिति ॥ ११४ ॥

उक्तमेव विषयं विभज्य व्युत्पादयति—

शब्दस्तु ध्वनिसामान्यमात्रेण विशेषधर्मैर्वा षड्जादिभिः प्रियैः स्तुत्यादिभिः इष्टैः अनिष्टैश्च असत्यबीभत्सपरिभवाऽक्रोशादिभिर्वचनैः मां दृक्स्वभावं असंसर्गिणं अविक्रियं अचलं अनिधनं अभयं अत्यन्तसूक्ष्मं अविषयं गोचरीकृत्य स्प्रष्टुं नैवार्हति असंसर्गित्वादेव माम् । अतएव न शब्दनिमित्ता हानिः वृद्धिर्वा । अतो मां किं करिष्यति स्तुतिनिन्दादिप्रियाप्रियत्वादिलक्षणः शब्दः । अविवेकिनं हि शब्दं आत्मत्वेन गतं प्रियः शब्दो वर्धयेत् अप्रियश्च क्षपयेत् अविवेकित्वात्, नतु मम विवेकिनो वालाग्रमात्रमपि कर्तुमुत्सहत इति । एवमेव स्पर्शसामान्येन तद्विशेषैश्च शीतोष्णमृदुकर्कशादि–ज्वरोदरशूलादिलक्षणैश्च अप्रियैः प्रियैश्च कैश्चित् शरीरसमवायिभिः वाह्यागन्तुकनिमित्तैश्च न मम काचित् विक्रिया वृद्धिहानिलक्षणा अस्पर्शत्वात् क्रियते व्योम्न इव मुष्टिघातादिभिः । तथा रूपसामान्येन तद्विशेषैश्च प्रियाप्रियैः स्त्रीव्यञ्जनादिलक्षणैः अरूपत्वात् न मम काचित् हानिः वृद्धिर्वा क्रियते । तथा रससामान्येन तद्विशेषैश्च प्रियाप्रियैः मधुराम्ललवणकटुतिक्तकषायैः मूढबुद्धिभिः परिगृहीतैः अरसात्मकस्य मम न काचित् हानिः वृद्धिर्वा क्रियते । तथा गन्धसामान्येन तद्विशेषैः प्रियाप्रियैः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुष्पाद्यनुलेपनादिलक्षणैः अगन्धात्मकस्य न मम काचित् हानि वृद्धिर्वा क्रियते—'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्य गन्धवच्च यत्' इति श्रुतेः ॥ ११५ ॥

शब्दस्त्विति । ध्वनिः अव्यक्तवर्णविशेषो नादमात्रमित्यर्थः । विशे मैरित्यस्य व्याख्या—षड्जादिभिरित्यादि । मां स्वस्वभावम् इत्यस्य रणार्थानि विशेषणानि—असंसर्गिणमित्यादीनि । उत्सहेत इति परिसंचक्षीतेत्यनुषङ्गः । किंच य एव इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः ॥११

एवं तावच्छब्दस्पर्शरूपरसगन्धैः सामान्यविशेषरूपैः न हानिर्वृ ममेति तैरनभिभवं अनुचिन्तनीयमभिधाय इदानीं शब्दाद्यनुभवमनुचि नीयं दर्शयति—

किंच य एव बाह्याः शब्दादयः ते शरीराकारेण संस्थि तद्ग्राहकैश्च श्रोत्राद्याकारैः अन्तःकरणद्वयतद्विषयाकारेण अन्योन्यसंसर्गित्वात् संहतत्वाच्च सर्वक्रियासु । तत्र एवं विदुषो मम न कश्चित् शत्रुः मित्रं उदासीनो वा अस्ति, यदि कश्चित् मिथ्याज्ञानाभिमानेन प्रियं अप्रियं वा प्रयुङ्क्ते क्रियाफललक्षणं तन्मृषैव प्रयुयुङ्क्ते सः । तस्य अविषयत्वा म—'अव्यक्तोऽयमचिन्त्योऽयं' इति स्मृतेः । तथा सर्वेषां पञ्च नामपि भूतानां अविकार्यः अविषयत्वात् 'अच्छेद्योऽयम ह्योऽयं' इति स्मृतेः । यापि शरीरेन्द्रियसंस्थानमात्रमुपल मद्भक्तानां विपरीतानां च क्रियाऽक्रियादिप्रयुयुङ्क्ष तज्जा धर्माधर्मादिप्राप्तिः सा तेषामेव नतु मयि अजरे अमृते अ 'नैनं कृताकृते तपतः', 'न कर्मणा वर्धते नो कनीयान्–', बाह्याभ्यन्तरो ह्यजः', 'न लिप्यते लोकदुःखेन बाह्यः' इत्या श्रुतिस्मृतिभ्यः अनात्मवस्तुनश्च असत्त्वात् इति परमो हेतुः आत्मनश्च अद्वयत्वविषयाणि द्वयस्यासत्त्वात् यानि सर्वाणि उप

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**पद्वाक्यानि विस्तरशः समीक्षितव्यानि समीक्षितव्यानीति ११६**

**इति श्रीमच्छंकरभगवत्पादकृतौ उपदेशसाहस्र्यां गद्यप्रबन्धः समाप्तः ॥ ॐ ॥**

किंच य एवेति । ये एव शरीरेन्द्रियाकारैः परिणम्य संस्थिताः ते एव अन्तःकरणद्वय—तद्विषयसुखदुःखाद्यात्मना च परिणमन्त इत्यध्याहारः । तत्र हेतुद्वयमाह—अन्योन्येति । सर्वक्रियासु संहतत्वात् । संभूयकारित्वादित्यर्थः । ततः किं इत्यत आह—तत्रैवं सतीति । भूतभौतिकानामेव सक्रियत्वे सति विदुषो मम सर्वविकारविकारिसंघातसाक्षिणो निर्विकारस्य न कश्चित् शब्दादिः विद्यत इति चिन्तयेत् । यदि कश्चिन्मिथ्याज्ञाननिमित्ताद्देहाभिमानात् मम प्रियमप्रियं वा क्रियाफललक्षणं प्रयुयुक्षेत प्रयोक्तुमिच्छेत् तन्मृषैव प्रयुयुक्षते तस्य अविषयत्वात् क्रियाद्यगोचरत्वात् ममेति चिन्तयेदिति योजना । क्रियाद्यविषयत्वे मानमाह—अव्यक्तोऽयमिति । अविकारित्वं चात्मनः चिन्तयेदिति सप्रमाणमाह–तथा सर्वेषामिति । नन्वेवं अनाधेयातिशयश्चेदात्मा कथं तर्हि तमुद्दिश्य अन्येषामुपकाराद्यर्था प्रवृत्तिः तत्राह—यापीति । शरीरसंस्थानमेव ते पश्यन्ति न आत्मानम् । शरीरे च ममाभिमानाभावात् आत्मनश्चासङ्गादिलक्षणत्वात् न मयि तत्कृतोऽतिशयः किंतु तेषामेव यथाक्रियं फललाभ इत्यर्थः । स्वस्यानाधेयाऽतिशयत्वे प्रमाणमाह—नैनमित्यादिना । किंच यदि अनात्मा नाम स्यात् तदा तत्कृतं प्रियमप्रियं वा भवेत् न तन्ममास्ति सर्वात्मत्वान्ममेति चिन्तयेदित्याह—अनात्मवस्तुनश्चेति । कुतः तस्यासत्त्वमित्यत्र हेतुमाह—आत्मनश्चेति । आत्मनश्चाऽद्वयत्वे प्रामाणिके सति तद्विरुद्धस्य द्वयस्यासत्त्वादित्यर्थः । उक्तार्थसाधकं प्रमाणमप्यनुशासनीयमित्याह—यानीति । ब्रह्मविद्याप्रतिपादकानि सर्वाणि वेदान्तवाक्यानि विस्तरशो बहुशाखोपसंहारेण पुनः पुनः आलोचनीयानीत्यर्थः । द्विरुक्तिः गद्यबन्धसमाप्तिद्योतनार्था ११६

॥ इति परिसंख्यानप्रकरणं तृतीयं विवृतम् ॥ ३ ॥

उपदेशसाहस्र्याः सद्गद्यबन्धो यथामति ।
व्याख्यातो रामतीर्थेन भक्त्या स्वज्ञानसिद्धये ॥

इति श्रीमता रामतीर्थेन विरचिता उपदेशसाहस्रीगद्यप्रबन्धटीका संपूर्णा ॥

॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीमच्छङ्कराचार्यप्रणीता

# उपदेशसाहस्री ।

श्रीमद्रामतीर्थविरचितपदयोजनिकाव्याख्यायुता ।

## पद्यबन्धः द्वितीयो भागः २

## उपोद्धातप्रकरणम् १

यत्राध्यस्तमिदं सर्वं मेयमात्राद्यविद्यया ।
भाति नो भाति यज्ज्ञानात्तदस्मि ब्रह्म चित्सुखम् ॥ १ ॥

तदेवं सर्वोपनिषदर्थसारसंग्रहं गद्यबन्धप्रबन्धेन संक्षेपतो युक्त्यो पुनरप्युक्तमेवार्थजातं पद्यबन्धप्रबन्धेन सोपस्करं विस्तरेणोपदेष्टुकामो वान्भाष्यकारः पद्यग्रन्थारम्भे ग्रन्थप्रतिपाद्यपरदेवतानमस्काररूपं कृतं शिष्यशिक्षार्थं श्लोकेनोपनिबध्नाति—

चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।
यत्सर्वविषयातीतं तस्मै सर्वविदे नमः ॥ १ ॥

चैतन्यमिति ॥ तस्मै सामान्यतः प्रसिद्धाय नमः । प्रह्वीभावो स्त्वर्थः । तस्य विशेषजिज्ञासायां लक्षणमाह—सर्वविद इति । सर्वं सर्ववित्तस्मै । सर्वशब्देन भूतं भवद्भविष्यदित्येतदात्मकं जगदुच्यते सर्वावस्थं सर्वदा सवितृवत्संनिधिसत्तामात्रेण प्रकाशयत्सर्ववित् । नहीं स्वसत्तास्फूर्त्योः स्वतन्त्रं भवति, अतो यदधीनसत्तास्फूर्तिमदिदं तदस्ति सर्ववित्सर्वाश्रय इति तटस्थलक्षणं सिद्धं भवतीति भावः । एवं जगत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थितिसंहारनियामकत्वेन सन्मात्रतया ताटस्थ्येन लक्षितस्य स्वरूपलक्षणं वदन् सर्वविषयवेदनाश्रयतया सर्वविरचमिति वैशेषिकादिमताशङ्कां वारयति—चैतन्यमिति । यच्चैतन्यं चितिस्वभावं ज्ञानस्वरूपं तस्मै इति यत्तच्छब्दयोः संबन्धः । 'विज्ञानमानन्दं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्म'इत्यादिश्रुतिभ्यः । नह्यचित्स्वभावस्य चिद्धर्मकता युज्यते । न खल्वनुष्णस्वभावकं जलमुष्णत्वधर्मकं भवतीति भावः । चिदेकरसस्यापि सर्वज्ञत्वं मायोपाधिकं व्यावहारिकमित्यनवद्यम् । ननु चेतनोऽणुपरिमाण इत्येकदेशिनो, मध्यमपरिमाण इति दिगम्बरा मन्यन्ते, अतस्तस्य सर्वविषयसंसर्गाभावे कथं सर्वज्ञत्वम् । प्रकाशो हि सावित्रादिः स्वसंसृष्ट एव प्रकाशव्यवहारहेतुर्नासंसृष्टे विषय इत्यत आह—सर्वगमिति । 'नित्यं विभुं सर्वगतं', 'आकाशवत्सर्वगतश्च नित्यः', 'स पर्यगाच्छुक्र'मित्यादिश्रुतिविरोधादणुपरिमाणत्वादिकल्पनानवकाश इति । उत्क्रान्त्यादेर्लिङ्गोपाधिकत्वश्रवणाच्च तेन स्वाभाविकविभुत्वार्थकश्रुतिबाध इति दिक् । ननु सर्वगमित्युक्ते सर्वमन्यत्तद्गतं च ब्रह्मान्यदिति तस्य वस्तुपरिच्छेदप्रतिभासात्सांख्यादिवादिमतवत्सजातीयविजातीयभेदवत्त्वं प्राप्तमित्यत आह—सर्वमिति । 'सर्वं खल्विदं ब्रह्म', 'इदं सर्वं यदयमात्मा', 'आत्मैवेदं सर्वमि'त्यादिश्रुतेरित्यर्थः । अनेन सर्वोपादानत्वमुक्तम् । उपादानं हि स्वकार्यं सर्वं व्यामुच्यापकं भवति नानुपादानम् । तद्वैकदेशेन संसृज्यमानमव्यापकमेव भवतीत्यतः सर्वोपादानत्वात्सर्वमित्यभिप्रायः । सर्वात्मकमपि ब्रह्म जीवाद्व्यावृत्तं जीवस्य ब्रह्मणोऽभिन्नत्वात्, नह्यसंसारि संसारिभावेन विरुद्धधर्मवतोरैक्यं संभवति दहनतुहिनवदित्यत आह—सर्वभूतगुहाशयमिति । सर्वभूतानां स्थावरजङ्गमानां गुहासु बुद्धिषु शेत इति सर्वभूतगुहाशयम् । गूढा अस्यां ज्ञानज्ञेयज्ञातृपदार्था इति गुहा बुद्धिः । गूहतेः संवरणार्थस्य धातोरिदं रूपम् । सर्वप्राणिषुअन्तःसाक्षितया निर्विकारं वर्तत इत्यर्थः । तथाच श्रुतिः 'यो वेद निहितं गुहायां परमे व्योमन्', 'हृद्यन्तर्ज्योतिः पुरुषः', 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदय'मित्याद्या । तथाच 'तत्सृष्ट्वा तदेवानुप्राविश'दित्यादिना स्रष्टुरेव ब्रह्मणो जीवरूपेण प्रवेशश्रवणात् 'अयमात्मा ब्रह्मे'त्यादितादात्म्यश्रुतेश्च न ब्रह्मणोऽन्यो जीव इत्यवधार्यते । विरुद्धधर्मसंसर्गप्रतिभासस्तूपाधिनिबन्धनो न

१ त्वादिलिङ्ग- २ तद्वैकदेशेन.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वरूपनिबन्धन इति भावः । एतेन जीवो नाम ब्रह्मणोंऽशो वि स्वतन्त्र एवेति भेदाभेद(भेद)वादिपक्षा निराकृता वेदितव्याः । ननु तद्गुहाशयत्वे ब्रह्मणो मानसवेद्यत्वं स्यात्तथा सर्वात्मत्वे प्रपञ्चात्म रिति शङ्कायामाह—यत्सर्वविषयातीतमिति । सर्वमविद्यातत्कार्यात्मकं यमतीत्य व्यवस्थितमित्यक्षरार्थः । 'मायां तु प्रकृतिं विद्यान्मायिनं श्वर'मित्यादिश्रुतेः परमेश्वराधिष्ठितमायाविवर्तत्वावगमात् । सर्वस्य याश्चानिर्वचनीयत्वान्न परमार्थं किमपि ब्रह्मणो भिन्नं वस्त्वस्ति सर्वान्तःकरणतत्प्रचारसाक्षिणो न मानसवेद्यत्वं संभाव्यते । नहि ष्टिगृहीतेन मरीच्युदकादिना भूम्याद्युदकादिमत्परमार्थतो भवति काष्ठेनाग्निः प्रकाश्यते दह्यते वा । अतो युक्तं सर्वविषयातीतत्वमिति तथाच श्रुतिः 'नेतिनेति', 'नेह नानास्ति किंचन'–'यतो वाचो नि अप्राप्य मनसा सहे'त्याद्या । अत्र चैतन्यमित्यादिविशेषणत्रयं साधारणं, सर्वभूतगुहाशयमिति च बुद्ध्यादिसाक्षी त्वंपदार्थ उक्तः, त्पदेन तत्पदवाच्यं ब्रह्मोच्यते, सर्वविषयातीतमिति तत्पदलक्ष्यमुक्तं च्छब्दयोः सामानाधिकरण्यादेकार्थवृत्तित्वे सति तत्त्वंपदार्थयोरैक्यं वाक्यार्थस्तात्पर्यवृत्त्या प्रतिपादितो भवति । तदेवं मङ्गलाचरणव्याजे न्तशास्त्रीयविषयाद्यनुबन्धोऽप्यत्र प्रपञ्चितोऽस्य तत्प्रकरणत्वद्योत तथाहि । उक्तवाक्यार्थो विषयश्चैतन्यं सर्वविषयातीतमिति च वि सर्वानर्थसंस्पर्शित्वाभावोक्तेरशेषानर्थनिवृत्त्युपलक्षितं निरतिशयान वात्मकं ब्रह्मैव प्रयोजनमुक्तम् । अर्थात्तत्कामोऽधिकारी सूचित एव उक्तविशेषणानां वेदान्तेष्वेव प्रसिद्धेः शास्त्रब्रह्मणोः प्रतिपाद्यप्रतिपा संबन्धो ध्वनित इति ॥ १ ॥

एवं देवतानमस्कारव्याजेन वेदान्तप्रतिपाद्यपरदेवतातत्त्वमु इदानीं वेदानां तत्परत्वं प्रतिपादयितुं कर्मकाण्डनिर्वृत्तमर्थमनूद्य ते काण्डाख्यवेदान्तानां संगतिमभिदधानस्तेषामगतार्थत्वमनन्यशेष तावदाह—

**समापय्य क्रियाः सर्वा दाराग्न्याधानपूर्विकाः ।**
**ब्रह्मविद्यामथेदानीं वक्तुं वेदः प्रचक्रमे ॥ २ ॥**

१ एव चेति भेदा. २ त्यावस्थित. ३ वेदान्तानां.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

समापय्येति ॥ येद इदानीं ब्रह्मविद्यां वक्तुं प्रचक्रम इत्यन्वयः । इदानीमिति जिज्ञासोरुपस्थितिसमय उक्तः । अथेति जिज्ञासाप्रवृत्तिप्रयोजकहेतुसाधनचतुष्टयसंपत्त्यानन्तर्यमुच्यते । तथाच विवेकवैराग्यशमादिसाधनसंपन्नस्य मुमुक्षोर्मोक्षसाधनब्रह्मविद्यां साक्षात्प्रतिपादयितुं ज्ञानकाण्डात्मको वेदः प्रवर्तत इत्यर्थः । कुतोऽस्य साधनसंपत्तिरित्यपेक्षायां कर्मकाण्डोक्तकर्मानुष्ठानजनितबुद्धिशुद्धित इत्यभिप्रेत्याह—समापय्येत्यर्धेन । दाराग्न्याधानपूर्विका इति विहितक्रियामात्रोपलक्षणम् । नित्यनैमित्तिकप्रायश्चित्तोपासनारूपाः सर्वाश्रमप्रयुक्ता विधिविहिताः सर्वाः क्रियाः समापय्य समाप्तिं प्रापय्य कर्मकाण्डात्मनानुष्ठेयकर्माणि प्रतिपाद्य स्थितो वेद इति संबन्धः । अयं भावः—वेदो हि स्वतःप्रमाणभूतः सर्वार्थप्रकाशको नित्यनिरतिशयपुरुषार्थमर्थयमानस्य तदुपायं मृगयतः सर्वोत्साहं प्रयतमानस्यापि तमलभमानस्य तादृक्पुरुषार्थसाधनं प्रत्यक्षादिभिरनवगम्यमानमुपदेष्टुं प्रवर्तते । नित्यनिरतिशयपुरुषार्थश्च मोक्ष एव नान्य इति मोक्षोपायप्रतिपादने वेदतात्पर्यमवगम्यते । श्रुतिस्मृती चात्र भवतः—'सर्वे वेदा यत्पदमामनन्ति', 'सर्वे वेदा यत्रैकीभवन्ति', 'स मानसीन आत्मा जनाना'मिति, 'वेदैश्च सर्वैरहमेव वेद्य' इति च । मोक्षसाधनं च साक्षादात्मतत्त्वज्ञानमेव । 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'तिश्रुतेः । तच्च नाशुद्धान्तःकरणस्योपदेष्टुं युक्तं तस्य तद्ग्रहणसामर्थ्याभावात् । श्रुतिश्च भवति 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुया'-दिति । अतस्तस्य ज्ञानोत्पत्तिप्रतिबन्धकदुरितक्षयार्थानि नित्यानि कर्माणि प्रथमं विधन्ते, तानि च संयोगरूपचोदनासमाख्यानामविशेषेण सर्वशाखाप्रत्ययन्यायेनेतिकर्तव्याङ्गकलापपरिमाणाधिकारिविशेषोक्तिपूर्वकमनुष्ठापयति । 'धर्मेण पापमपनुदति', 'न कर्म लिप्यते नरे', 'अविद्यया मृत्युं तीर्त्वे'त्यादिश्रुतेर्दुरितक्षय एव धर्मानुष्ठानस्य परं प्रयोजनं, परम्परया परमपुरुषार्थोपयोगित्वात् ननु 'कर्मणा पितृलोक' इत्याद्युक्तः पितृलोकादिः प्रयोजनम्, तस्य क्षयादिदोषदुष्टतया हेयत्वात् । आनुषङ्गिकं हि तत्कर्मफलं भवति । तथा भवदपि नेदं चित्तशुद्धिप्रतिबन्धकम् । तदुक्तं सुरेश्वराचार्यैः—'नित्येषु शुद्धिप्राधान्याद्भोगोऽप्यप्रतिबन्धकः । भोगं भङ्गुरमीक्ष्यन्ते बुद्धिशुद्धिस्तु रोचते' इति । काम्याभिचारादिकर्मविधानं तु पुरुषवशीकरणेन स्वाभाविकप्रवृत्तिनि-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वारणार्थमित्येषा दिक् । तथाच चित्तशुद्धेः प्रथमापेक्षितत्वात्तदर्थं कर्म
प्रथमं प्रवर्तते पश्चाच्च ज्ञानोपदेश इति कर्मज्ञानकाण्डयोरर्थद्वारा हेतु
भावेन पौर्वापर्यसंबन्ध उक्तः । ज्ञानकाण्डस्य साक्षात्फलार्थविषयत्वात्
रनपेक्षितार्थत्वाच्चागतार्थत्वमनन्यशेषत्वं च तस्य सिद्धमिति ॥ २ ॥

ननु कर्माणि कृतानि कर्तुः फलप्रदानि लोके दृष्टानि यथा पित्रा
पदिष्टविषयाणीष्टफलानि, तैर्निषिद्धविषयान्यनिष्टफलानि, तदुदासीन
दैवाधीनतयोभयार्थानि । तथा वेदविहितानि कर्माणीष्टफलानि, निषि
निष्टफलानि, विहितप्रतिषिद्धव्यामिश्रकर्माणीष्टानिष्टव्यामिश्रफलानि
तथाच शास्त्रं 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फल'मिति । एवं च
फलाव्यभिचारान्मोक्षस्य च फलविशेषत्वात्कर्मविशेषसाध्यत्वोपपत्तेर्न
कृत्यमस्तीति न तदर्थानि ज्ञानकाण्डानि मुमुक्षुणा विचारणीया
कर्माण्येव कानिचिच्चातुर्मास्यादीन्यक्षय्यफलार्थान्यनुष्ठेयानीति क
प्रत्यवस्थानमित्याशङ्क्याह—

कर्माणि देहयोगार्थं देहयोगे प्रियाप्रिये ।
ध्रुवे स्यातां ततो रागो द्वेषश्चैव ततः क्रियाः ॥ ३ ॥

कर्माणीति द्वाभ्याम् ॥ कर्मफलं हि जात्यायुर्भोगलक्षणं, तच्च
बन्धंविना नोपपद्यत इति कर्माणि देहयोगार्थमेवेत्यर्थः । देहयोगे च
दुर्वार इत्याह—देहयोग इति । देहसंबन्धे सति प्रियाप्रिये सुखदुःख
स्यातां भवेतामेव । 'न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति'
श्रुतेः । ततः सुखदुःखयोस्तत्साधनयोश्च यथासंख्यं रागद्वेषौ वास
स्याताम् । ततो रागद्वेषाख्यान्निमित्तात्क्रिया वाङ्मनःकायचेष्टाः
त्यर्थः ॥ ३ ॥

धर्माधर्मौ ततो ज्ञस्य देहयोगस्तथा पुनः ।
एवं नित्यप्रवृत्तोऽयं संसारश्चक्रवद्भृशम् ॥ ४ ॥

अज्ञस्य प्रत्यगात्मतत्त्वं ब्रह्माजानतोऽहंकारपारवश्यस्य ततः क्रि
विहितप्रतिषिद्धरूपाभ्यो धर्माधर्मौ पुनर्भवेतां पुनस्ततो देहयोगस्त
प्रिये इत्येवं संसारो जन्ममरणकर्मकरणतत्फलभोगलक्षणः कुलालचक्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

[क]र्मप्रत्यर्थमविश्रमं यथा स्यात्तथा नित्यप्रवृत्तोऽनादिकालमारभ्य प्रवर्तते अयं हेतुरित्यक्ष इत्यर्थः। तस्मादैहिकार्थानां कर्मणामनित्यफलत्वस्य लोके दृष्टत्वादामुष्मिकफलार्थानामपि कर्मत्वादनित्यफलतानुमानात् 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत' इति वस्तुबलावलम्बिश्रुतेश्च 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृत'मित्याद्यर्थवादश्रुत्यवलम्बनेन कर्मफलस्य नित्यत्वाशा न कार्येति भावः ॥ ४ ॥

नन्वेवमपि न मोक्षार्थिनो ज्ञानेन प्रयोजनमस्ति, कृतकर्मणां संसारनिमित्तानां फलभोगानन्तरं नाशे सति 'निमित्ताभावान्नैमित्तिकस्याप्यभाव' इति न्यायादयत्नलभ्यत्वान्मोक्षस्येत्याशङ्क्याज्ञानमूलत्वात्कर्मणस्तस्मिन्सति तदनुपमान्मैवमित्याह—

अज्ञानं तस्य मूलं स्यादिति तद्धानमिष्यते।
ब्रह्मविद्यात आरब्धा ततो निःश्रेयसं भवेत् ॥ ५ ॥

अज्ञानमिति ॥ यद्वा अज्ञस्य कर्मप्रवृत्त्यविरमात्संसाराविरमः कृतकर्मफलभोगसमयेऽपि कर्मप्रवृत्त्यवश्यंभावात्पुनर्भोगसंतानाविच्छेदश्चेत्कथं तर्हि कर्मनिवृत्त्या मोक्षसिद्धिरिति विवक्षायामाह—अज्ञानमिति। अयमर्थः—'नीहारेण प्रावृता जल्प्या चाऽसुतृप उक्थशासश्चरन्ति', 'एकः शत्रुर्न द्वितीयोऽस्ति शत्रुरज्ञानतुल्यः पुरुषस्य राजन्। येनावितः कुरुते कार्यते च घोराणि कर्माणि सुदारुणानी'त्यादिश्रुतिस्मृतिभ्योऽज्ञानं तस्य पूर्वोक्तस्य कर्मतत्फलदुःखणस्य संसारस्य मूलं स्यादिति हेतोस्तस्याज्ञानस्य हानमात्यन्तिकोपरम इष्यते निर्वृत्तेन संपादनीयतयाभिप्रेयते, मूलोन्मूलनमन्तरेण प्ररोहाविच्छेदादित्यर्थः। तरति शोकमात्मवित्', 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति', 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः। तेषामादित्यवज्ज्ञानं प्रकाशयति तत्पर'मित्यादिश्रुतिस्मृतिभ्यो यतोऽस्यैवाज्ञानहानहेतुरवगतातो ब्रह्मविद्यारब्धा, अतो ब्रह्मविद्यया निःश्रेयसं कैवल्यं भवेत्तदुदये नान्तरीयकतयाऽज्ञाननिवृत्तौ केवलात्मस्वरूपावस्थानरूपो मोक्षो लब्ध इव भवेदित्यर्थः ॥ ५ ॥

ननु कर्मणां विचित्रशक्तित्वात् 'हिरण्यदा अमृतत्वं भजन्त' इत्यादिश्रुतेः

१ कर्मजितः—पुण्यजितः इत्यपि पाठः.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इत्यादिस्मृतेश्च कर्मभिरेव सिद्धेः कथं तद्ब्रह्मविद्ययेति शङ्कामपाकुर्वन्ननन्तरोक्तमर्थमुपपादयति—

विद्यैवाज्ञानहानाय न कर्माऽप्रतिकूलतः।
नाज्ञानस्याप्रहाणे हि रागद्वेषक्षयो भवेत् ॥ ६ ॥

विद्यैवेति द्वाभ्याम् ॥ संसारमूलाज्ञानहानाय विद्यैव समर्थ... हारः। एवकारार्थमाह—न कर्मेति। तत्र हेतुरप्रतिकूलत इति। ... दित्यर्थः। विद्यैव प्रकाशरूपत्वादप्रकाशरूपामविद्यां तत्कार्यं च निवर्त... यथा रज्ज्वावरणविद्यां तमसि तत्कल्पितसर्पाद्याकारं च रज्जुतत्त्व... दीपौ निवर्तयतः स्वभावविरोधात्। कर्म तु नाज्ञानतमोनिवर्तकं ... धित्वादप्रकाशात्मकत्वाद्वा नीहारक्षोमवदित्याद्यनुमानैः, 'नान्यः पन्था ... तेऽयनाय' इत्यादिश्रुतिभिश्च विरोधाद्धिरण्यदा इत्यादावापेक्षि... पर्यवस्यति 'कर्मणैव ही' ति स्मृतिः। 'न कर्मणा न प्रजये' तिश्रुति... न्यपरेत्यतो न तद्बलात्कर्मभिरज्ञानहानशङ्केत्यभिप्रायः। विद्यां वि... क्षयाभावश्चेदज्ञानक्षयार्थमेव विद्यान्विष्यतां तत्कार्यस्य तु परमार्थत्वा... नाशानुपपत्तेस्तन्नाशे हेत्वन्तरमन्वेषणीयमित्यत आह—नाज्ञानस्येति। ... नस्याप्रहाणे रागादिक्षयो न स्यादविवेकपूर्वकत्वस्य रागादावन्वयव्यति... द्धत्वादज्ञानमया रागादयो न परमार्था इत्यज्ञाननिवृत्त्यैव निवर्तन्ते। ... तत्र हेत्वन्तरान्वेषणेत्यर्थः ॥ ६ ॥

रागाद्यनिवृत्तौ का हानिरिति तत्राह—

रागद्वेषक्षयाभावे कर्म दोषोद्भवं ध्रुवम्।
तस्मान्निःश्रेयसार्थाय विद्यैवात्र विधीयते ॥ ७ ॥

रागद्वेषेति ॥ दोषा रागद्वेषमोहास्तदुद्भवं तद्धेतुकं कर्म ध्रुवं पुन... वेति पुनः संसारो दुर्वार इत्यर्थः। उपपादितमर्थमुपसंहरति—तस्मा... अत्रेति वेदान्तोक्तिः। विधीयते प्रकाश्यत इत्यर्थः ॥ ७ ॥

तदेवमज्ञानमूलत्वात्संसारस्य ज्ञानमेव तन्निवर्तकं मोक्षहेतुर्न क... तत्र यदि कर्मणां स्वातन्त्र्येण मोक्षहेतुता न संभवेत्तर्हि ज्ञानेन समुच्च... तद्धेतुता स्यादिति समुच्चयवादिमतमुत्थापयति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

नतु कर्म तथा नित्यं कर्तव्यं जीवने सति ।
विद्यायाः सहकारित्वं मोक्षं प्रति हि तद्व्रजेत् ॥ ८ ॥

नन्तु कर्मेति ॥ 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणै'रिति स्मृत्युक्तन्यायेनावशेनापि जीवता पुरुषेण कर्म कर्तव्यमेव । 'विद्या यथा तथा नित्यं कर्मावश्यं कर्तव्यं यावज्जीव'मित्यादिश्रुतिविहितत्वादित्यर्थः । उपयोगाभावान्मुमुक्षुणा नित्यं कर्म न कर्तव्यमित्यत आह—विद्याया इति । विद्याया मोक्षंप्रति कारणभूतायाः सहकारित्वमितिकर्तव्यभावं हि यस्मात्तत्कर्म व्रजेत्प्राप्नुयादतस्तत्कार्यं मुमुक्षुणेत्यर्थः । 'विद्ययामृतमश्नुत' इति तृतीयया ज्ञानस्य मोक्षकरणत्वावगमात्करणस्य चेतिकर्तव्यतासापेक्षत्वादन्यस्य चेतिकर्तव्यस्यात्राभावात्कर्मभिरेव प्रयाजादिभिर्दर्शादीव फलोपकार्यङ्गैर्ज्ञानं समुचीयत इति भावः ॥ ८ ॥

'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिन' इत्यादिस्मृतेर्मुमुक्षुभिः कर्म न कर्तव्यमिति चेत्तत्राह—

यथा विद्या तथा कर्म चोदितत्वाविशेषतः ।
प्रत्यवायस्मृतेश्चैव कार्यं कर्म मुमुक्षुभिः ॥ ९ ॥

यथा विद्येति ॥ यथा विद्या मुमुक्षुभिः कार्या तथा कर्मापि कर्तव्यम् । कुतः । 'विद्यां चाविद्यां च यस्तद्वेदोभयश्सहे'ति समुच्चयविधिना अविशेषेण चोदितत्वादित्यर्थः । किंच 'अकुर्वन्विहितं कर्म निन्दितं च समाचरन् । प्रसंजंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥' इत्यननुष्ठाने प्रत्यवायस्मृतेश्च कर्म कार्यमित्यर्थः । तथाचोदाहृतश्रुतिस्मृतिविरोधे 'तस्मात्कर्म न कुर्वन्ति यतय' इतीयमपि स्मृतिर्ज्ञानप्रशंसार्था वा भविष्यतीति भावः ॥ ९ ॥

अत्र सिद्धान्ती विद्यायाः सहकार्यपेक्षितत्वमुक्तमाक्षिपति—

ननु ध्रुवफला विद्या नान्यत्किंचिदपेक्षते ।
नाग्निष्टोमो यथैवान्यद्ध्रुवकार्योऽप्यपेक्षते ॥ १० ॥

नन्विति ॥ ब्रह्मविद्या सहकारिनिरपेक्षा ध्रुवफलत्वाद्धटादिज्ञानवदित्यर्थः । पूर्ववादी व्यभिचारेण परिहरति—नेति । अवश्यंभाविफलोऽप्यग्नि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्टोमो यथोद्गीथशब्दादितद्गतदेवताज्ञानसहकारिकर्मापेक्षते तथा वि
त्यर्थः ॥ १० ॥

पूर्वपक्षमुपसंहरति—

तथा ध्रुवफला विद्या कर्म नित्यमपेक्षते।
इत्येवं केचिदिच्छन्ति न कर्म प्रतिकूलतः॥ ११॥

इत्येवं केचिदिच्छन्तीति॥ सिद्धान्तं वक्तुमुपक्रमते—नेत्यादिना वि
स्वकार्ये न कर्मापेक्षते तत्प्रतिकूलत्वात्। तद्विरोधित्वादिति यावत्। नहि प्र
तिकूलः स्वसहायो भवति। माभूत्तिमिरं तेजसःसहायभूतमित्यर्थः॥

कर्मणो विद्याप्रतिकूलत्वमुक्तं साधयति—

विद्यायाः प्रतिकूलं हि कर्म स्यात्साभिमानतः।
निर्विकारात्मबुद्धिश्च विद्येतीह प्रकीर्तिता॥ १२॥

विद्याया इत्यर्धेन॥ हिशब्दः प्रसिद्धिद्योतकः। साभिमान
ब्राह्मण्याद्यभिमानसहितपुरुषनिर्वर्त्यत्वात्कर्मणो विद्यायाश्च कूटस्था
तथा जात्याद्यभिमानहीननिष्ठत्वात्प्रसिद्धो विद्याकर्मणोर्विरोध इ
हिशब्दद्योतितां प्रसिद्धिमुपपादयति—निर्विकारेति। नाहं कर्ता
किंतु कूटस्थं ब्रह्मैवास्मीत्येवमात्माकारान्तःकरणवृत्तिर्विद्येति इह
विद्वद्भिः प्रकर्षेणोक्तेत्यर्थः। कर्मत्वहं ब्राह्मणोऽस्य कर्मणः कर्ता ममैत
साध्यं फलं भविष्यतीत्यभिमानपूर्वकं प्रवर्तत इति प्रत्यक्षमतः स्फुटो
इत्यर्थः॥ १२॥

ज्ञानकर्मणोरन्तर्मुखत्वबहिर्मुखत्वाभ्यां प्रवृत्तितो विरोधमुक्त्वा
विरोधमाह—

अहं कर्ता ममेदं स्यादिति कर्म प्रवर्तते।
वस्त्वधीना भवेद्विद्या कर्त्रधीनो भवेद्विधिः॥ १३॥

वस्त्वधीनेति॥ प्रमाणवस्त्वधीना विद्या यथाप्रमाणं यथावस्तु
न तत्र पुरुषस्वातन्त्र्यं संभवतीत्यर्थः। विधिर्विधेयं कर्म कर्त्रधीनं पुरुषेण
मकर्तुमन्यथा वा कर्तुं शक्यम्, अतः पुरुषस्वातन्त्र्यास्वातन्त्र्यरूपविरोधा
जन्यत्वान्न कर्मज्ञानयोः समुच्चय इत्यर्थः॥ १३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

किंच विद्यायां सत्यां कर्मणो निराश्रयतया स्वरूपालाभान्न ज्ञानसहकारितेति विध्यन्तरेण विरोधमाह—

कारकाण्युपमृद्नाति विद्या बुद्धिमिवोखरे ।
इति तत्सत्यमादाय कर्म कर्तुं व्यवस्यति ॥ १४ ॥

कारकाणीति ॥ ऊखरदेशे जातामुदकबुद्धिं यथोखरस्वभावावलम्बिनी विद्योपमृद्नाति तथात्मन्यविद्याध्यस्तकारकबुद्धिमात्मस्वभावावलम्बिनी विद्योपमृद्नात्येवेत्यर्थः । इति तत्सत्यमित्यर्धश्लोकः पूर्वेणैवान्वेति । उपमृद्नातीति यतोऽतस्तत्कारकजातं सत्यमादाय कर्म कर्तुं ज्ञानी कथं व्यवस्यतीति कथंशब्दाध्याहारेणायं योजनीयः ॥ १४ ॥

विरुद्धत्वकृतसमुच्चयासंभवे फलितमाह—

विरुद्धत्वादतः शक्यं कर्म कर्तुं न विद्यया ।
सहैव विदुषा तस्मात्कर्म हेयं मुमुक्षुणा ॥ १५ ॥

विरुद्धत्वादिति ॥ अतो विरुद्धत्वादिति सामानाधिकरण्यम् । विद्यया सह कर्म कर्तुं विदुषा न शक्यमेवेत्यन्वयः । समुच्चयनिराकरणफलमाह—तस्मादिति ॥ १५ ॥

ननु 'ज्ञात्वा कर्म समाचरे'दित्यादिवचनात्स्वर्गकामादिविध्यन्यथानुपपत्तेश्च देहादिव्यतिरिक्तात्मज्ञानवतः कर्मानधिकारात् ज्ञानकर्मणोर्विरोधे च तदयोगादधिकार्यभावेन कर्मकाण्डस्याप्रामाण्यं प्राप्तमित्याशङ्क्य कर्मस्वरूपभेदाङ्गविशेषप्रयुक्तक्रमाधिकारादिविशेषज्ञानस्य देहादिव्यतिरिक्तात्मज्ञानस्य च कर्मविशेषाधिकारिण्यपेक्षितत्वेऽपि न परमात्मतत्त्वज्ञानं तत्रापेक्ष्यतेऽनुपयोगादधिकारिविरोधाच्चेत्यभिप्रेत्य समाधत्ते—

देहाद्यैरविशेषेण देहिनो ग्रहणं निजम् ।
प्राणिनां तदविद्योत्थं तावत्कर्मविधिर्भवेत् ॥ १६ ॥

देहाद्यैरिति ॥ यद्वा यद्यौपनिषदं ज्ञानं कर्मकारकभेदोपमर्दकं स्यात्तदा ज्ञानकाण्डेन कर्मकाण्डस्य निर्विषयीकरणाद्बाधितविषयं कर्मकाण्डमप्रमाणं स्यात्तच्चानिष्टं स्वाध्यायाध्ययनविधिविरोधादित्याशङ्क्य किमात्मतत्त्वज्ञाना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रागूर्ध्वं वा तदप्रामाण्यापत्तिरिति विकल्प्याद्यं निराकरोति—देहाद्यैः देहिन आत्मनो देहाद्यैरिन्द्रियमनोबुद्धिप्राणतद्धर्मैरविशेषेणाविवेकेन तद्विशिष्टतयैवात्माभिमानरूपं निजं स्वाभाविकं न योषिदादावग्न्यादिव बुद्धिवद्विध्यधीनम्, यदेवंविधं प्राणिनामात्मज्ञानं तदविद्योत्थमनादि भ्रान्तिसंस्कारोत्थं सर्वसाधारणत्वाद्यावदेवं ब्राह्मणोऽहं गृहस्थोऽहं न्द्रियवानहं सकामो बलवानित्यादिज्ञानमनुवर्तते तावत्कर्मविधिः कर्म प्रमाणं भवेदित्यर्थः। प्रमितिजनकं हि प्रमाणं भवति। अधिकारिप्र तिजनको वेदो नानधिकारिण इति स्थिते कर्मप्रवृत्तिपर्यन्तं प्रमिति विधिकाण्डस्योक्ताधिकारिलाभान्न ब्रह्मात्मतत्त्वविद्योदयात्प्रागप्रामा रिति नाध्ययनविधिविरोध इति भावः ॥ १६ ॥

द्वितीयं विकल्पमिष्टापत्त्या प्रत्याचष्टे—

नेतिनेतीति देहादीनपोह्यात्मावशेषितः।
अविशेषात्मबोधार्थं तेनाविद्या निवर्तिता ॥ १७ ॥

नेतीति ॥ नेतिनेतीति वीप्सार्थया श्रुत्या देहादीन्मिथ्यादृष्ट्यात्म भावेन गृहीतानशेषानपोह्य प्रतिषिध्य प्रतिषेधावधिभूत आत्मा 'सत्यस्य सत्य'मित्यादौ। किमर्थमित्यत आह—अविशेषात्मबोधा अविशेषश्चासावात्मा चेति तथा। तस्य बोधो निर्विशेषचित्सदानन् वाविर्भावस्तदर्थमित्यर्थः। परागर्थेष्वपोहितेषु तदवधित्वेन प्रत्यगर्थ शिष्यत इति प्रत्यक्तत्त्वबोधार्थमित्युक्तं भवति। बोधे सति किं स्या तेनेति। यन्निबन्धनो देहादावात्माभिमानः कर्माधिकारहेतुः साऽवि बोधेन निवर्तिता बाधितेत्यर्थः। अतो 'निमित्ताभावान्नैमित्तिकस्या इति न्यायेनात्मतत्त्वज्ञानवतो न कर्मविधिप्रतिपत्तिरिति तंप्रति फल नजनकत्वाभावात्कर्मकाण्डस्य तदानीमप्रामाण्यमिष्टमेव। निवृत्ता प्रत्यभिचारविधिशास्त्रवदिति सर्वमनवद्यम् ॥ १७ ॥

ननु निर्विशेषात्मबोधेन सकृन्निवर्तिताप्यविद्या पुनरुद्भविष्यति तत धिकारहेतुसंभवात्कर्मविधिः स्याच्छुक्तितत्त्वावगमात्तदज्ञाननिवृत्तावपि स्वप्न समयान्तरे रजतभ्रमोदयोपलम्भादित्याशङ्क्याह—

निवृत्ता सा कथं भूयः प्रसूयेत प्रमाणतः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

असत्येवाविशेषेऽपि प्रत्यगात्मनि केवले ॥ १८ ॥

निवृत्तेति ॥ प्रमाणतो निवृत्ता प्रमाणाग्निना दग्धा साऽविद्या भूयः पुनः कथं प्रसूयेत जायेत । नहि मृता दग्धा च भार्या पुनः प्रसवायोद्भवति तद्वदित्यर्थः । अविद्यान्तरं जायेतेति चेत्तत्र वक्तव्यं किं निर्निमित्तं जायेत निमित्ताद्वा । नाद्यः । अकारणकार्योत्पत्तावतिप्रसङ्गात् । द्वितीये आत्मा निमित्तमनात्मा वा । नाद्य इत्याह—असत्येवेति । अविशेषे केवले त्यनयोर्व्याख्यानव्याख्याभावः । यद्वाऽविशेष इत्युक्ते मूर्त्यादिकतिपयविशेषाभावेऽपि विशेषान्तरशङ्का स्यादत उक्तं केवल इति । तावत्युक्त एकाकिनोऽप्यात्मनः प्रयत्नादिगुणयोगित्वविशेषशङ्का स्यात्तन्निवृत्तयेऽविशेष इत्युक्तम् । तथाचाविशेषे केवले प्रत्यगात्मनि सर्वान्तरे परमार्थवस्तुनि साऽविद्याऽसती एव न सत्तां लभते । असहायस्यात्मनः कूटस्थस्य कर्तृत्वानुपपत्तेः । अविद्यान्तरसहायाभ्युपगमे चान्योन्याश्रयोऽनवस्था वा प्रसज्येतेत्यर्थः । अपिशब्देन पक्षान्तरं निरस्यते । अनात्मन्यप्यसत्येव साविद्याकार्यत्वानात्मनोऽविद्याहेतुत्वानुपपत्तेरित्यर्थः । शुक्तिकादौ तु रजतादिविक्षेपोपादानांशस्यैवाविद्याशक्तिभेदस्य ज्ञानेन निवृत्त्यभ्युपगमात् मूलाज्ञानस्य त्वनन्तशक्तिमतो विद्यमानत्वात्तद्वशात्पुनर्भ्रान्त्युदयोपपत्तेर्दृष्टान्तो विषम इति द्रष्टव्यम् ॥ १८ ॥

अविद्यायाः पुनरनुद्भवसाधनफलमाह—

न चेद्भूयः प्रसूयेत कर्ता भोक्तेति धीः कथम् ।
सदसीति च विज्ञाने तस्माद्विद्याऽसहायिका ॥ १९ ॥

न चेदिति पादत्रयेण ॥ सदेव ब्रह्मैवाहमस्मीति विज्ञाने विशिष्टज्ञानेऽपरोक्षानुभवे सति भूयः पश्चान्न चेदविद्या प्रसूयेतेति कर्ता भोक्तेति धीः कर्माधिकारनिमित्तभूता कथं स्यात् । न स्यादेवेत्यर्थः । चकारः कर्तृत्वादेः पारमार्थिकत्वशङ्कानिवृत्त्यर्थः । कर्तृत्वादेः पारमार्थिकत्वे विद्यानिवर्त्यत्वायोगादनिर्मोक्षप्रसङ्ग इति भावः । ज्ञानकर्मसमुच्चयनिराकरणमुपसंहरति—तस्मादिति । यस्माद्विद्यायामुत्पन्नायां कर्मासंभवः सिद्धस्तस्मादसहाया केवलैव विद्या कैवल्यहेतुरित्यर्थः ॥ १९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

विद्यायाः सहकारिनिरपेक्षत्वेनैव मोक्षहेतुत्वमिति युक्त्योक्तेर्थं श्रौत
मुपोद्बलयति—

अत्यरेचयदित्युक्तो न्यासः श्रुत्यात एव हि।
कर्मभ्यो मानसान्तेभ्य एतावदिति वाजिनाम् ॥ २०
अमृतत्वं श्रुतं यस्मात्त्याज्यं कर्म मुमुक्षुभिः।

अत्यरेचयदिति ॥ तैत्तिरियोपनिषत्सु 'सत्यं परं परं सत्यं' क्रम्य 'सत्यं तप' आदिमानसान्तानि कर्माणि श्रेयःसाधनत्वेन 'तानि वा एतान्यवराणि तपांसी'ति तेषां फल्गुफलत्वेन निन्दा 'न्यास इति ब्रह्मे'त्युक्तो 'न्यास एवात्यरेचय'दिति तत्त्वज्ञानान्त्ये संन्यासः स्तूयते। तस्मान्निन्दितस्यानुपादेयत्वात्स्तुतस्य चोपादे सापेक्षत्वे मोक्षस्य संन्यासविधानानुपपत्तेः ससंन्यासमात्मज्ञानं साधनं गम्यत इत्यर्थः। अतएव हीति। ज्ञानस्य स्वफले कर्मनिर चेत्यर्थः। लिङ्गान्तरमाह—एतावदिति। वाजिनाममृतत्वं श्रुतमिति सनेयिनामुपनिषत्सु 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं दित'मित्युपक्रम्याद्वयमात्मतत्त्वं दुन्दुभ्यादिदृष्टान्तप्रबन्धेनोपपाद्य नुशासनास्मि मैत्रेय्येतावदरे खल्वमृतत्व'मिति ज्ञानस्यैवामृतत्व वधारणं श्रुतं तस्य कर्मानपेक्षायां लिङ्गमन्यथैतावदित्यवधारणा पत्तेरित्यर्थः। 'अमृतत्वस्य तु नाशोऽस्ति वित्तेने'ति च तत्रोक्तो ध्यस्य कर्मणोऽमृतत्वसाधनत्वाभावे लिङ्गमनुसंधेयम्। नच 'विद्यां चे'ति समुच्चयविधानविरोधः, तस्य देवतोपासनज्ञानकर्मसमु त्वात्। अन्यथा 'हिरण्मयेन पात्रेण', 'अग्ने नय सुपथे'ति च मार्ग द्यनुपपत्तेरिति सर्वमनवद्यम्। 'न कर्मणा न प्रजया धनेन त्यागेन तत्वमानशुः', 'त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम्। त्यजेयं त्यक्तुः प्रत्यक् परं पद'मित्यादिशास्त्राद्यस्मात्त्यागोपलक्षित नमेव मुक्तिसाधनं तस्मादिति प्रकृतार्थमुपसंहरति। तस्मात्त्याज्यं क क्षुभिः साधनचतुष्टयसंपन्नैरात्मतत्त्वजिज्ञासुभिरित्यर्थः। विविदिषोर कर्मावसरः कुतो विदुष इत्यभिप्रायः ॥ २० ॥

अत्रार्धश्लोकोऽधिकः प्रागुक्ताधिकार्थेन संख्येयः। तदेवं मुमुक्षु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

श्रौतं कर्मसंन्यासपूर्वकज्ञाननिष्ठेन भवितव्यमिति न्यायेनोपपाद्येदानीं परोक्तदृष्टान्त-मनूद्य दूषयति—

**अग्निष्टोमवदित्युक्तं तत्रेदमभिधीयते ॥ २१ ॥**

अग्निष्टोमवदिति ॥ अर्धश्लोकेन ॥ २१ ॥

दूषणमुच्यत इति प्रतिज्ञाय श्लोकेन दूषणमाह—

**नैककारकसाध्यत्वात्फलान्यत्वाच्च कर्मणः ।**
**विद्या तद्विपरीतातो दृष्टान्तो विषमो भवेत् ॥ २२ ॥**

नैकेति ॥ कर्मणोऽग्निष्टोमादेरनेककारकसाध्यत्वात् । नियतद्रव्यमन्त्रतन्त्र-योगसाध्यत्वादितियावत् । तथा फलान्यत्वात्फलभेदवत्त्वात् 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'तिश्रुतेर्विद्याद्वारा वीर्यवत्तर-फलविशेषसंभवाच्च युक्ता सहकार्यपेक्षेत्यर्थः । नैवं विद्याया इत्याह—विद्येति । तद्विपरीता कर्मस्वभावविपरीतस्वभावेति यावत् । यथा वस्त्वधीनप्र-माणनिबन्धनाया निरतिशयमोक्षैकफलाया विद्याया न सहकार्यपेक्षा युक्ते-त्यर्थः । यतएवं स्वभावभेदः कर्मविद्ययोरतोऽग्निष्टोमदृष्टान्तो विषमो दार्ष्टा-न्तिकाननुरूपो भवेदित्यर्थः ॥ २२ ॥

वैषम्यमेवोपपादयति—

**कृष्यादिवत्फलार्थत्वादन्यकर्मोपबृंहणम् ।**
**अग्निष्टोमस्त्वपेक्षेत विद्यान्यत्किमपेक्षते ॥ २३ ॥**

कृष्यादिवदिति ॥ अग्निष्टोमः सातिशयः साध्यफलार्थत्वादन्यकर्मोप-बृंहणमन्यैः कर्मभिः सहकारिभिर्विहितोद्गीथाद्यङ्गसंश्रितोपासनादिरूपैरुपचय-मपेक्षेतेति योजना । तत्र दृष्टान्तः कृष्यादिवदिति । कृषिवाणिज्यादौ फलोप-चयार्थं साधनविशेषोपचयः प्रसिद्ध इत्यर्थः । विद्या तु निरतिशयफलत्वादन्य-त्सहकारिभूतं किं वस्त्वपेक्षते, न किमपीत्यर्थः ॥ २३ ॥

यदुक्तमकुर्वन्विहितं कर्मेति प्रत्यवायस्मृतेश्चेति तत्राह—

**प्रत्यवायस्तु तस्यैव यस्याहंकार इष्यते ।**
**अहंकारफलार्थित्वे विद्येते नात्मवेदिनः ॥ २४ ॥**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

प्रत्यवायस्त्विति ॥ अस्य कर्मणोऽहं कर्ता एतत्कृत्वेदं फलं इति यस्याहंकार इष्यते इष्टो भवति। स्वाभाविको वर्तत इति यावत्। धिकृतस्य विहिताकरणे प्रत्यवायो भवेदित्यर्थः। आत्मवेदिन आत्म ननिष्ठस्य तु अहंकारफलार्थित्वे न विद्येते विषयाभावादतो निमि प्रत्यवायस्तस्येत्यर्थः ॥ २४ ॥

'विद्यैवाज्ञानहानाय न कर्माप्रतिकूलत' इत्युपक्रम्येयता ग्रन्थेन स्वातन्त्र्येण वा ज्ञानसहकारितया वा सर्वथा न साक्षान्मोक्षहेतुत्वम् पाद्य 'ब्रह्मविद्यामथेदानीं वक्तुं वेदः प्रचक्रम' इति परमप्रकृतमुपसं

तस्मादज्ञानहानाय संसारविनिवृत्तये।
ब्रह्मविद्याविधानाय प्रारब्धोपनिषत्त्वियम् ॥ २५ ॥

तस्मादिति ॥ विद्यायाः कर्मनिरपेक्षत्वं तच्छब्दार्थः। अज्ञा नायज्ञाननिराससिद्ध्येऽपेक्षितब्रह्मविद्या विधातुं संपादयितुमयं द्वेदान्तभागः प्रारब्ध इति योजना। अज्ञानहानस्य विशेषणं संस त्तय इति। संसारस्य विनिवृत्तिः सम्यङ्निवृत्तिर्यस्मादिति विग्रहः। स्वमार्पम्। अत्रोपनिषच्छब्दो लक्षणया वेदान्तग्रन्थेषु प्रयुक्तः ॥ २५

तर्हि कोऽस्य मुख्योऽर्थ इति विवक्षायां ब्रह्म विद्याख्यं शब्दसाम यद्युपनिषच्छब्दव्युत्पादनेनापि स्वतश्चैव विद्या मोक्षहेतुरिति सूचय

सदेरुपनिपूर्वस्य क्विपि चोपनिषद्भवेत्।
मन्दीकरणभावाच्च गर्भादेः शातनात्तथा ॥ २६ ॥

सदेरिति ॥ 'षद्लृ विशरणगत्यवसादनेषु' इति धातोरुपनीत्युप पूर्वकस्य क्विप्प्रत्ययान्तस्योपनिषदिति रूपम्। अस्त्यत्र धात्वर्थ तथाहि ये मन्दब्रह्मविदस्तेषां गर्भजन्मजरादिकमुपनिषदयति शिथि तीत्युपनिषदित्येकोऽर्थः। जिज्ञासोश्चोप समीपे नि निश्चयेन ब्रह्म गम द्वितीयः। तत्त्वविदां तु गर्भादि नाशयत्येवेति तृतीयः। एवं सम्ब योगाद्विद्यैवोपनिषच्छब्दवाच्या। तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते।[1] जीवनमितिवदित्यर्थः ॥ २६ ॥

इति प्रथममुपोद्घातप्रकरणम्।

१ चैतन्यप्रकरणमिति टीकान्तरे पाठः.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## प्रतिषेधप्रकरणम् २

तदेवं मुमुक्षोर्मोक्षसाधनब्रह्मात्मविद्याप्रतिपत्तये वेदान्तारम्भ उपपद्यते ति स्थिते पुनराशङ्क्यते । ननु विद्योपदेशाय वेदान्तारम्भस्तदोपपद्यते यदि द्योदयः संभाव्येत स इहात्मनि संसारित्वग्राहकप्रत्यक्षादिविरोधाद्वाक्य- तेनापि नोत्पादयितुं शक्यते, असंजातविरोधितया प्रत्यक्षादेर्बलवत्त्वात्तदु- जीविनश्चागमस्य दुर्बलत्वात्कथंचिदुत्पन्नापि विद्या यदि प्रमाणसिद्धं संसारं धेत तर्हि प्रत्यगात्मनोऽपि ब्रह्मरूपत्वं कथं प्रत्यक्षानुभवो न बाधेतेति, अत त्तरं वदति—

प्रतिषेद्धुमशक्यत्वान्नेतिनेतीति शेषितम् ।
इदं नाहमिदं नाहमित्यद्धा प्रतिपद्यते ॥ १ ॥

प्रतिषेद्धुमित्यादि ॥ नेतिनेतीति वीप्सया सकलदृश्यप्रतिषेधे शेषित- र्यैरितं यदात्मतत्त्वं तत्प्रतिषेधावधित्वेन प्रतिषेद्धुः स्वरूपत्वेन प्रतिषेधसा- त्तया ऽवस्थितं यतोऽतः प्रतिषेद्धुमशक्यत्वादद्धा साक्षात्प्रतिपद्यते निःसं- न्धमुपलभ्यत इति योजना । उपलम्भप्रकारमभिनयति—इदमिति । इदं रूपं नाहमात्मा, इदमिन्द्रियजातं मनोबुद्धिप्राणतदुपादानचेतनपर्यन्तं नाहं र्वेषां प्रकाशकमव्यभिचारि स्वयंप्रकाशं कूटस्थमक्षरं यस्मिन्सर्वं जगदा- येऽव्याकृताकाश ओतश्च प्रोतश्च तदेवाहं परमक्षरमिति प्रतिपद्यत इत्यर्थः । नेन विद्या नोदेतीत्येषा शङ्का निराकृता । प्रतिषेद्धुमशक्यत्वादित्यनेन तु वाच्याख्यातेन बाधायोग्यत्वं दर्शितमिति विवेक्तव्यम् ॥ १ ॥

नन्वहं ब्रह्मेति ज्ञानमुक्तविधयोत्पन्नमपि न प्रतिष्ठां लभते देहेन्द्रियाद्य- मानस्यानवरतमनुवृत्तेरित्याशङ्क्य, तस्य प्रमाणमूलत्वाभावाद्बाधितानुवृ- गान्त्रस्याभासत्वान्न विद्याप्रतिपक्षत्वमित्यभिप्रेत्य वाक्योत्थज्ञानस्य प्राब- मुपपादयति—

अहंधीरिदमात्मोत्था वाचारम्भणगोचरा ।
निषिद्धात्मोद्भवत्वात्सा न पुनर्मानतां व्रजेत् ॥ २ ॥

अहंधीरिति ॥ देहादावनात्मन्यात्मबुद्धिरहंधीरित्युच्यते साहंकर्तुरिद- ात्पूर्वपूर्वाऽहंकारवासनावासितान्तःकरणरूपादिदमात्मनः सकाशादुत्थि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

ताध्यासात्मिकेत्यर्थः। स्वरूपतोऽस्या दौर्बल्यमुक्त्वा विषयभेदादपि वाचारम्भणगोचरेति। निरूप्यमाणं स्वतःसत्ताहीनमपि यदपरोक्ष गोचरतया गम्यते तद्वाचारम्भणमनृतजडानात्मरूपं तदेव गोचरो यस्याः सा। तथा यत एवमतो नेतिनेतीति शास्त्रेण निषिद्धो बाधित स्वरूपमुद्भवः कारणं यस्याः सा निषिद्धात्मोद्भवा तस्या भावो नि द्भवत्वं तस्मादिति विग्रहः। सा पुनरिदंधीरात्मयाथात्म्यज्ञानानन्तरं प्रमाणत्वं न व्रजेन्न लभेत, अवस्तुत्वादवस्तुजत्वादवस्तुविषयत्वाच्च विशेषज्ञानवदित्यर्थः। अतो वाक्योत्थज्ञानमेव प्रबलं नेतरदिति भाव

इदानीं 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदि'तिन्यायेन प्रथमोत्पन्न कर्ता भोक्तेत्यादिधिय उत्तरेण ब्रह्मात्मज्ञानेन बाध्यत्वमुपपादयति—

पूर्वबुद्धिमबाधित्वा नोत्तरा जायते मतिः।
दृशिरेकः स्वयं सिद्धः फलत्वात्स न बाध्यते ॥ ३ ॥

पूर्वबुद्धिमिति॥ न शुक्त्यज्ञानजन्यां रजतबुद्धिमबाधित्वा उ त्तरोत्पद्यते एवं कर्त्रादिबुद्धिमबाधित्वा नात्मतत्त्वज्ञानमुत्तरमुत्पद्यते प्रसक्तनिषेधात्मकत्वाद्बाधस्य पूर्वसमये उत्तरप्रसक्त्यभावाच्च पूर्व बाधः, किंतु परेण पूर्वस्य प्रसक्तस्य बाध इत्यनवद्यम्। पदार्थबोधे मानान्तरसापेक्षत्वेऽपि न वाक्यार्थबोधे तदपेक्षा, पदार्थबोधेऽपि मात्रस्यैवापेक्षत्वात्पूर्वबुद्धेर्व्यवहाराङ्गस्वांशस्योत्तरेणात्मज्ञानेनाबाधनाद जीव्यविरोधश्चेति द्रष्टव्यम्। किंचौपनिषदात्मज्ञानमेव तत्त्वावेदकं बाध्यार्थत्वादित्याह—दृशिरिति। ब्रह्मात्माकारान्तःकरणवृत्तिप्रतिफ क्षस्फूर्तिर्दृशिरित्युच्यते सचैकः पराभावेनोपलक्षितोऽद्वितीय इति स्वयंसिद्धः परनिरपेक्षसत्तास्फूर्तिकः स न बाध्यते। उक्तैर्विशेषणैर्बा त्वावगमात्फलत्वात्। नहि फलं बाध्यते। तस्य सर्वज्ञानसाधारण व्यवहारहेतुप्रकाशत्वाच्चेत्यर्थः। नित्यसिद्धस्याप्यस्य फलत्वं विषयाकार कत्वापेक्षयोपचर्यत इति भावः ॥ ३ ॥

एवं ब्रह्मात्मज्ञानस्य वाक्यादनुत्पत्तिशङ्कामुत्पन्नस्य प्राबल्ये पूर्वप्रवृत्तप्रत्यक्षादिभिर्बाध्यार्थत्वशङ्कां चोन्मथ्येदानीं कथमिदमुत्पन्न वीक्षायां पदार्थपरिशोधनेनेति श्रौतदृष्टान्तेनोपपादयति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**इदं वनमतिक्रम्य शोकमोहादिदूषितम् ।**
**वनाद्गान्धारको यद्वत्स्वात्मानं प्रतिपद्यते ॥ ४ ॥**

इदं वनमिति ॥ इदं शरीरमेव वनमिव वनं रागद्वेषशोकमोहादिभि-र्व्याघ्रतस्करादिस्थानीयैर्दूषितमाक्रान्तमतिक्रम्य दिङ्मात्रमाचार्यादवगम्यान्वयव्यतिरेकालोचनया पदार्थशोधनेन देहादिकमनात्मतया त्यक्त्वा स्वमात्मानं सर्वानुस्यूतमनपोह्यं प्रतिपद्यते । अहं ब्रह्मास्मीत्यौपनिषदं पुरुषमवगच्छतीत्यर्थः । यथा गान्धारको गन्धारदेशवासी पुरुषो बद्धचक्षुरेव तस्करैर्नीय महावने निक्षिप्तः स बन्धमोक्षार्थी तत्राक्रोशं कुर्वन्केनचित्कारुणिकेनोपलब्धस्तेन मोचितबन्धो दर्शितस्वदेशमार्गो ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी वनात्स्वदेशं प्रतिपद्यते, तथायमपि संसारी अविद्यारागादितस्करैर्मिथ्याज्ञानपटेन विवेकदृष्टिमाच्छाद्य स्वदेशाद्देहारण्यं प्रवेशितो बन्धमोक्षार्थी कदाचित्केनचित्कारुणिकेनाचार्येण ब्रह्मविदा त्याजितमिथ्यादृष्टिपटः प्रबोधितस्वदेशब्रह्ममार्गोऽन्वयव्यतिरेकाभ्यां स्वयमूहमानः स्वमात्मानमवगच्छतीत्यर्थः ॥ ४ ॥

इति द्वितीयं आत्मज्ञानोत्पत्तिविधिप्रकरणम् ॥ २ ॥

---

## ईश्वरात्मप्रकरणम्[१] ३

येयं ब्रह्मविद्या प्रतिपादिता तस्यां प्रकाशमानं ब्रह्म किं प्रत्यगात्मनो भेदेन प्रत्येतव्यं तदभेदेन वेति 'द्वा सुपर्णा सयुजे'त्यत्र भेदश्रवणात् 'अयमात्मा ब्रह्मे'त्यभेदश्रवणाच्च संदेहे निर्णयकारणं श्रौतं दर्शयन्वाक्यविषयं स्पष्टयति—

**ईश्वरश्चेदनात्मा स्यान्नासावस्मीति धारयेत् ।**
**आत्मा चेदीश्वरोऽस्मीति विद्या सान्यनिवर्तिका ॥ १ ॥**

ईश्वर इत्यादिना ॥ ईश्वरो जगत्कारणत्वेनोपलक्षितः परमात्मा सत्यज्ञानानन्तानन्दरूपः स चेदात्मभिन्नो मेर्वादिवद्विषयभूतः परोक्षो वा स्यात्त-

---

१ प्रतिषेधप्रकरणमित्यन्यत्र.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वासावीश्वरोऽहमस्मीति मुमुक्षुर्न धारयेदात्मानं तत्त्वतो न प्रति
ततस्तत्त्वमस्यादिवचनविरोधः स्यात्। 'आत्मेति रूपं गच्छन्ति इ
चे'ति न्यायविरोधश्च स्यादित्यर्थः। ईश्वर एवात्माहमस्मि नान्य इ
रयेद्विजानीयात्तदा न श्रुतिन्यायविरोध इति योज्यम्। सा विद्या
त्मभेदाकारप्रत्यग्ब्रह्मैक्यावलम्बिनी अन्यस्या अविद्याया निवर्तिका
सारनिवर्तिकेत्यर्थः। 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मैव सन्ब्रह्माप्ये
श्रुतौ ब्रह्मज्ञानस्य ब्रह्मभावफलश्रवणादन्यत्वपक्षे स्थितस्य नष्टस्य वे
न्यभावानुपपत्तेरैक्यज्ञानमेव फलवदिति तत्रैव शास्त्रतात्पर्यं न भेदे
नस्याफलत्वात् 'अन्योऽसावन्योऽहमस्मीति न स वेदे'ति भेदे
निन्दितत्वाच्च भेदश्रुतेस्त्वनाद्यविद्याकल्पितभेदानुवादपरत्वान्न स्वार्थ
मिति भावः ॥ १ ॥

इतश्चाभेदे वेदतात्पर्यमाह—

आत्मनोऽन्यस्य चेद्धर्मा अस्थूलत्वादयो मताः।
अज्ञेयत्वेऽस्य किं तैः स्यादात्मत्वे ह्यन्यधीह्नुतिः ॥ २

आत्मन इति ॥ अस्थूलत्वादयो धर्माः प्रत्यगात्मनोऽन्यस्य ईश
श्वरस्य चेन्मता इष्टाः स्युस्तदास्येश्वरस्यानात्मभूतत्वादज्ञेयत्वे सति
स्थूलत्वादिभिः श्रौतैर्धर्मैः किं स्यान्न किमपि। स्थूलोऽहं कृशोऽ
स्वगतभ्रान्त्यनिवृत्तेरित्यर्थः। यदा त्वस्थूलत्वादिधर्मक ईश्वरोऽ
ज्ञायते तदा तस्याप्यात्मत्वेसति प्रतीचोऽन्यधीह्नुतिः स्वात्मन्येव
कृशस्थूलत्वादिधियो मोहमूलाया बाधसिद्धिः फलं स्यादित्यर्थः ॥ २

'कस्मिन्नाकाश ओतश्च प्रोतश्चे'ति कार्यकारणात्मकजगदाश्रय
नाक्षरस्योपक्रमात् 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इति जग
मध्ये परामर्शात् 'अदृष्टं द्रष्टृ'त्यादिना तत्स्वभावकथनपूर्वकमन्ते
स्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'त्युपसंहारादीश्वरपरत्व
वाक्यस्याशेषस्यावधारिता, तत्र 'नान्यदतोऽस्ति द्रष्टृ श्रोतृ'मन्यु
द्रष्टृत्वाद्युपलक्षितस्य प्रत्यगात्मनोऽक्षरब्रह्माभेदश्चावधारित इती
भेद एव शास्त्रार्थो यतस्तस्मात्प्रत्यगात्मन्यप्यस्तस्थूलत्वादिप्रति
वाक्यमास्थेयमित्यभिप्रेत्याह—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिथ्याध्यासनिषेधार्थं ततोऽस्थूलादि गृह्यताम् ।
परत्र चेन्निषेधार्थं शून्यतावर्णनं हि तत् ॥ ३ ॥

मिथ्येति ॥ ततस्तस्मान्मिथ्याध्यासस्याज्ञानमूलस्य निषेधार्थं निवृत्त्यर्थं अस्थूलादिप्रत्यगात्मविशेषणत्वेन गृह्यताम् । विपक्षे दोषमाह—

परत्रेति ॥ अस्थूलादिवाक्यं परत्र प्रत्यगात्मनोऽन्यत्र स्थूलत्वनिषेधार्थं चेत्स्यात्तदा हि निश्चितं शून्यतावर्णनमेव तत्स्यादात्मनोऽन्यस्य जडत्वात्तस्य च स्थौल्यादिधर्मयोगान्निषेधान्तःपातित्वे सतीश्वरस्येश्वरत्वायोगान्निषेधमात्रपरमेव वाक्यं स्यादित्यर्थः । तस्मादस्थूलादिधर्मकस्यानात्मत्वायोगादीश्वरमभ्युपगच्छतात्मैव सोऽभ्युपगन्तव्य इति भावः ॥ ३ ॥

किंच प्रत्यगात्मनोऽन्यत्र स्थूलत्वादिप्रतिषेधे चाप्राप्तप्रतिषेधो निष्फलश्चापद्येतेति दोषान्तरमाह—

बुभुत्सोर्यदि चान्यत्र प्रत्यगात्मन इष्यते ।
अप्राणो ह्यमनाः शुभ्र इति चानर्थकं वचः ॥ ४ ॥

बुभुत्सोरिति ॥ यदि प्रत्यगात्मनो बुभुत्सोरात्मतत्त्वं बोद्धुमिच्छोः । संसारित्वेनाभिमतादात्मन इतियावत् । तदन्यत्र देहेन्द्रियप्राणमनस्तद्धर्मनिषेध इष्यते तदाऽप्राण इत्यादिवचनमनर्थकं निर्विषयं स्यादन्यत्र प्राणादिप्रसक्त्यभावाप्रतिषेधस्य च दृष्टार्थत्वादित्यर्थः ॥ ४ ॥

इति तृतीयं ईश्वरात्मप्रकरणम् ॥ ३ ॥

---

## तत्त्वज्ञानस्वभावप्रकरणम् ४

ननु यदिदमीश्वराभेदेनात्मनो ज्ञानं मोक्षसाधनमुक्तं तन्नोपपद्यते संचितानेककर्मसद्भावात्कर्मणां च फलावश्यंभावनियमात्तैः प्रतिबन्धसंभवादिति चेत्तत्राह—

अहंप्रत्ययबीजं यदहंप्रत्ययवत्स्थितम् ।
नाहंप्रत्ययवद्दुष्टं कथं कर्म प्ररोहति ॥ १ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहंप्रत्ययेति ॥ अहमिति प्रत्ययोऽहंकारोऽनात्मन्यात्माभिमानि स बीजं कारणं यस्य कर्मणस्तदहंप्रत्ययबीजं अहमिति प्रतीयते आत्म न्तःकरणे साभासे तदहंप्रत्ययवत्तस्मिन्नहंप्रत्ययवति स्थितं संचित जातं तन्नाहं कर्ता भोक्ता, किंतु ब्रह्मैवाहमस्मीति यः प्रमाणजनि स एव वह्निस्तेनोष्टं दग्धं कथं पुनः प्ररोहति फलोन्मुखं जायेतेति तथाच श्रुतिस्मृती 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे'। ' सर्वकर्माणि भस्मसात्कुरुते तथे'ति। ज्ञानोदये नान्तरीयकतया विरोधादेव निवृत्तिसंभवात्तदा तत्कार्यान्तःकरणस्यापि निवृत्ते कर्मस्थित्ययोगात्कुतस्तेन मोक्षप्रतिबन्धशङ्केत्यभिप्रायः ॥ १ ॥

ननु यथा ज्ञानवतोऽपि भिक्षाटनादिकर्म सफलमुपलभ्यते त ष्टफलमपि कर्म सफलं स्यादिति कल्प्यत इति शङ्कते—

दृष्टवच्चेत्प्ररोहः स्यान्नान्यकर्मा स इष्यते।
तन्निरोधे कथं तत्स्यात्पृच्छामो वस्तदुच्यताम् ॥ २

दृष्टवच्चेत्प्ररोहः स्यादिति ॥ परिहरति—नान्यकर्मा स इ नेति निषेधार्थः। स भिक्षाटनादिर्विदुषो व्यापारोऽन्यकर्मा। फलं कर्म कारणं यस्य सोऽन्यकर्मा स इष्यते। ज्ञानाविरोधि कर्मनिबन्धनं हि भिक्षाटनादि नैवंविधलक्षणं तस्य ज्ञानविरोधित्व ननु ज्ञानादज्ञाननिवृत्त्या तन्मूलाहंकारनिवृत्तिद्वारेण तदाश्रय कथमारब्धमपि कर्म सिध्येद्यन्निमित्ता विदुषो भिक्षाटनादिकर्म पृच्छति पूर्ववादी—तन्निरोध इति। कर्माश्रयः प्रथमतच्छब्दार्थः यत्तच्छब्दार्थः ॥ २ ॥

उत्तरमाह—

देहाद्यारम्भसामर्थ्याज्ज्ञानं सद्विषयं त्वयि।
अभिभूय फलं कुर्यात्कर्मान्ते ज्ञानमुद्भवेत् ॥ ३ ॥

देहादीति ॥ सद्विषयं प्रमाणजनितत्वेन प्रबलमपि ब्रह्मात्मवि मभिभूय विदेहकैवल्यरूपात्फलात्प्रच्याव्य कर्म प्रारब्धफल देहाभासजगदाभासरूपं त्वयि ज्ञानवत्यपि कुर्यादेव। कुतः। दे

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

ति समर्थत्वादन्ते प्रारब्धकर्मफलभोगावसाने सति ज्ञानं प्रतिबन्धरहित-
मुद्भवेदुद्भूतं भवति । वर्तमानकार्यसंपादकाविद्यालेशमप्यपबाध्य विद्वांसं
आराज्ये स्थापयेदित्यर्थः ॥ ३ ॥

ननु प्रारब्धकर्मवशाज्ज्ञानिनोऽपि भोगः स्यान्न त्वनारब्धकर्मतत्फलयोस्त-
न्नवस्थितिरिति कथमुपपद्येत, अज्ञानकार्यत्वाविशेषात्सर्वस्याज्ञाननिवृत्तौ
पुनराश्रयाभावेनावस्थानाभावस्य समत्वादित्याशङ्क्य विशेषमाह—

**आरब्धस्य फले ह्येते भोगो ज्ञानं च कर्मणः ।**
**अविरोधस्तयोर्युक्तो वैधर्म्यं चेतरस्य तु ॥ ४ ॥**

आरब्धस्येति ॥ भोगो ज्ञानं चेत्येते हि यस्मादारब्धस्य कर्मणः फलेऽ-
स्तयोरविरोधो युक्त इतरस्य त्वनारब्धफलस्य संचितस्य क्रियमाणस्य वा
र्मणो वैधर्म्यं वैपरीत्यं विरोध एवेत्यक्षरार्थः । अयं भावः—ज्ञानं हि स्व-
रणाज्जायमानं शरीरादिसापेक्षमेव जायते' अशरीरस्यागन्तुकज्ञानासंभ-
त् । शरीरादिकं तु न ज्ञानकारणादुत्पद्यते, अन्यकारणस्यान्यहेतुत्वायो-
त् । अतः कैश्चित्कर्मविशेषैः शरीरविशेषे ज्ञानोत्पत्तियोग्ये स्वफलदाना-
रब्धे सति तमाश्रित्य ज्ञानहेतुकर्माणि ज्ञानमारभन्त इत्यभ्युपगन्तव्यम् ।
थाचारब्धे देहे तद्भोगस्यावश्यंभावित्वाद्भोगप्रदकर्मारब्धशरीरमाश्रित्य स्व-
हेतुसमासादितं ज्ञानं स्वफलमज्ञाननिवृत्तिं कुर्वदपि न सद्यो भोगैकनाश्य-
हारम्भककर्माक्षिप्ताविद्यालेशं निवर्तयत्युपजीव्यविरोधित्वाभावादिति नार-
ब्धफलकर्मज्ञानयोर्विरोधः । अनारब्धफलानां तु कर्मणामकर्त्रात्मतत्त्वज्ञानो-
विरोधादेव कर्तृस्वभावनिवृत्तावाश्रयाभावादभावोपपत्तेर्न ज्ञानसद्भाव-
नमुपपद्यत इत्यस्ति विशेष इति ॥ ४ ॥

ननु ज्ञानिनोऽपि चेद्भोगो देहारम्भककर्मनिबन्धनोऽस्ति तर्हि तस्य
दाचिद्देहात्माभिमानसंभवात्तदुद्भूतदुरितप्रतिबन्धवशान्मोक्षानुपपत्तिरिति
त्याह—

**देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।**
**आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ।**
**ततः सर्वमिदं सिद्धं प्रयोगोऽस्माभिरीरितः ॥ ५ ॥**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देहात्मज्ञानवदिति ॥ यथा विवेकविलक्षणस्य लौकिकस्य दे
प्योऽहमित्यात्मज्ञानं निःसंदिग्धमुपलब्धं तथा मुख्यात्मन्येव दे
पर्यन्तसाक्षिण्यात्मन्येव यस्य देहात्मज्ञानबाधकमहमस्मि परं ब्रह्म
निःसंदिग्धं ज्ञानं भवेत्स यथोक्तज्ञानबलादनर्थराशेरपनीतत्वान्मुमु
न्नपि बलान्मुच्यत एवेत्यर्थः । तथा चाविर्भूतात्मतत्त्वस्य पुनर्देहाभि
भावान्न मोक्षे कोऽपि प्रतिबन्ध इति भावः । तथाच श्रुतिः 'भि
ग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे
इत्याद्या । तथा स्मृतयोऽपि 'बीजान्यग्न्युपदग्धानि न रोहन्ति
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संबध्यते पुनः । यथा पर्वतमादीप्तं
मृगद्विजाः । तद्वद्ब्रह्मविदो दोषा नाश्रयन्ते कदाचन । सद्यौषध
भक्षितं विषम् । तद्वत्सर्वाणि कर्माणि जीर्यन्ते ज्ञानिनः क्षणा दि'ति ।
कर्मणा प्रतिबन्धाभावमुपपादितमुपसंहरति—तत इत्यर्धश्लोकेन
मिति प्रारब्धकर्माविरोधित्वोक्तिः । सिद्धं श्रुत्यादिप्रमाणसि
प्रयोग उपपत्तिः ॥ ५ ॥

॥ इति चतुर्थं तत्त्वज्ञानस्वभावप्रकरणम् ॥ ४ ॥

---

## बुद्ध्यपराधप्रकरणम् ५

यदि प्रागुक्तरीत्या ब्रह्मात्मज्ञानममृतत्वं गमयेत्किमिति तर्हि
सीत्यात्मरूपं न गृह्यते निसर्गत एव सर्वेषां परमपुरुषार्थ
तत्राह—

मूत्राशङ्को यथोदङ्को नाग्रहीदमृतं यथा ।
कर्मनाशभयाज्जन्तोरात्मज्ञानाग्रहस्तथा ॥ १ ॥

मूत्राशङ्क इति ॥ अत्रेयमाख्यायिका—उदङ्को नाम कश्चि
महाविष्णुं तपसा तोषयित्वा देवरक्षितममृतं प्रार्थितवान् । त
देवेन्द्रं प्रत्युक्तममृतमस्मै दीयतामिति । इन्द्रस्तु विष्णोराज्ञां पाल
लघ्वं नीत्वा मातङ्गवेषमास्थाय स्ववस्तिदेशे कलशमुपनिधायोदङ्क

१ इलहंप्रलयप्रकरणमित्यन्यत्र.

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

मेऽसूयया माभवत्वस्यामृतपानमिति मन्यमानः । तदुदङ्कोऽपि चण्डालमूत्रशङ्कया न जग्राहेति । उदङ्को मूत्राशङ्कः सन् यथाभूतमेव प्रत्यक्षोपलब्धममृतं यथा नाग्रहीच्च मदभिलषितममृतमिदमिति न गृहीतवान् जातिनाशभयादिति योजना, तथा जन्तोर्लोकस्य वर्णाश्रमोपाधिविहितकर्मनाशभयादात्मज्ञानस्य यथोक्तस्याऽग्रहस्तस्मिन्ननादर इत्युत्तरार्धयोजना । पदार्थस्वरूपापरिज्ञानं विपरीतज्ञानं च श्रुत्युक्तात्मस्वरूपाग्रहणकारणमिति भावः ॥ १ ॥

ननु दृष्टान्ते देवेन्द्रस्य वेपान्यत्वममृतकलशस्य च मूत्राशयस्थाननिवेशनं जात्यन्तरमूत्रभ्रमोत्पादनेनामृताग्रहणकारणमासीन्न तथात्मनो ब्रह्मभूतस्य भ्रमकारणमस्तीत्यत आह—

बुद्धिस्थश्चलतीवात्मा ध्यायतीव च दृश्यते ।
नौगतस्य यथा वृक्षास्तद्वत्संसारविभ्रमः ॥ २ ॥

बुद्धिस्थ इति ॥ अनाद्यविद्यया स्वात्मान्यध्यस्तबुद्धौ लिङ्गशरीरे अभिमानित्वेन स्थित आत्मा तस्यां बुद्धौ चलन्त्यां चलतीव दृश्यते न वस्तुतश्चलत्यविक्रियत्वात्, तथा तस्यां ध्यायन्त्यां निश्चलीभूतायां ध्यायतीव निश्चल इव दृश्यते प्रतिभासते न वस्तुतो ध्यायति । चलनाभावे तत्प्रतियोगिकस्य निश्चलत्वस्याप्यभावादित्यर्थः । विकारवद्बुद्ध्यविवेकादादावेव संसार्यहमस्मीति विपरीतनिश्चयदोषाच्छ्रुत्यादिभिरीर्यमाणमप्यात्मनो ब्रह्मत्वं न गृह्णाति लोक इत्यभिप्रायः । अविवेकादन्यथाप्रतिपत्तौ दृष्टान्तमाह—नौगतस्येति । तद्वदिति दार्ष्टान्तिकोक्तिः ॥ २ ॥

उक्तमेव प्रपञ्चयति—

नौस्थस्य प्रातिलोम्येन नगानां गमनं यथा ।
आत्मनः संसृतिस्तद्वद्ध्यायतीवेति हि श्रुतिः ॥ ३ ॥

नौस्थस्येति ॥ जलस्थायां चलन्त्यां नावि स्थितस्य जनस्य यथा नौगमनादिवैपरीत्येन जलाशयतीरस्थानां नगानां वृक्षादीनां गमनं विभाव्यते बुद्ध्युपाध्यविवेकात् तद्वदसंसारिणोऽप्यात्मनः संसृतिरनुभूयत इत्यर्थः । उक्तार्थानुवादिनीं श्रुतिं पठति—ध्यायतीवेति हि श्रुतिरिति । 'स समानः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीवे'ति श्रूयत इत्यर्थः ॥

प्रपञ्चितदृष्टान्तानुगुण्येन दार्ष्टान्तिकं प्रपञ्चयन्नुदाहृतश्रुत्यर्थमाह—

चैतन्यप्रतिबिम्बेन व्याप्तो बोधो हि जायते ।
बुद्धेः शब्दादिभिर्भासस्तेन मोमुह्यते जगत् ॥ ४ ॥

चैतन्यप्रतिबिम्बेनेति ॥ चैतन्यप्रतिबिम्बश्चिदाभासस्तेन व्याप्तो यस्माद्बुद्धेर्बोधो विषयाकारा बुद्धिर्जायते, अतः स्वाभासाविवेकाच्छब्दादिभिर्बुद्धिवृत्तिव्याप्तविषयैः । इत्थंभावे तृतीया । विषयभूतदेहाद्यात्मत्वेनावभासनं स्फुरणमात्मनो भवतीति शेषः । यदि शब्दादिनिर्भास इति पाठो लभ्यते तदा बोधविशेषणम् । शब्दादेर्विषयस्य निर्भासो यस्मिन्निति सुगमम् । येनैवमेकस्यां बुद्धिवृत्तौ देहादिविषयचैतन्ययोः संश्लेष इव भवति तेनान्योन्याविवेकनिमित्तेन जगज्जनोऽतिशयेन मुह्यतीत्यर्थः । यथा नौस्थः पुरुषो नावश्चलनं नानुभवति अचलत्सु च वृक्षेषु चलनमनुभवतीत्येवमविवेकसामर्थ्यादिदं बुद्धिस्थदेहाद्यात्मभावमिवापन्न आत्मा तदीयं व्यापारं स्वात्मनि पश्यन्निव भवति तदाभासाविवेकात्तु चिदात्मनि विकारमारोपयन्ननुभवति । तदेतद्ध्यायतीवेत्यादिश्रुत्योच्यते । अत उपाधिसामर्थ्यात्संसारित्वविभ्रम इत्यभिप्रायः ॥ ४ ॥

एवमविवेकाधीने संसाराध्यासे विविक्तपदार्थस्य वाक्यादहं ब्रह्मेति बुद्धिवृत्त्युदये मुक्तिः फलिष्यत्यतः पदार्थविवेकवता भाव्यं मुमुक्षुणेति प्रेत्याह—

चैतन्यभास्यताहमस्तादर्थ्यं च तदस्य यत् ।
इदमंशप्रहाणे न परः सोऽनुभवो भवेत् ॥ ५ ॥

चैतन्यभास्यतेति ॥ अहमोऽहंकारस्य चिदचिद्ग्रन्थिरूपस्य यच्चैतन्यभास्यता दृश्यता यच्च तादर्थ्यं चिदात्मनो विषयोपस्थापकत्वेन तच्छेषत्वं तदुभयमस्याहंकारस्य संबन्धि तस्मिन्निदमंशस्य प्रहाणे विवेके सति परो न भवेन्न स्यादिति योजना । तत्र योऽनुभवः साक्षी परिशिष्टः स परमात्मा वाक्यार्थभूतो भवेदित्यर्थः । यद्वा अस्याहमोऽहंकारस्य चैतन्यभास्यता जडता तादर्थ्यं च तच्छेषत्वं च यद्यस्मादस्ति तत्तस्मादयमहं

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...ति वेद्यांशप्रहाणेन तस्मिन्नसदर्थत्वाभिमानत्यागेन योऽनुभवः स पर...त्मेति निश्चयवान्भवेदिति योजना । अथवा स वाक्यार्थविषयः परः ...न्तरोऽनुभवोऽहमोऽहंकारस्येदमंशप्रहाणेन पृथक्करणेन भवेदिति संबन्धः । ...इमनिदमात्मकस्याहंकारस्य संबन्धी य इदमंशस्तस्य साक्षिसाक्ष्यान्वयव्य...रेकागमापायितदवध्यन्वयव्यतिरेकालोचनरूपेण मननेनापबाधे सति ...वशिष्टांशोऽनपोह्य आत्मेत्यनुभवो भवेदित्यर्थः । नन्वहमित्यवभासे इदमंश...श न चकास्ति यस्य प्रहाणेन परोऽनुभवो भवेदित्याशङ्कायामाह—चैतन्य...स्यतेति । तादर्थ्यं चेति च । सुषुप्त्यादावात्मनि भासमानेऽप्यहंकारस्या...भासादनात्मत्वे निश्चिते सति जागरितादावागन्तुकचैतन्यभास्यता तस्य ...द्धा । अतः प्रतिभासते । इदमंशाभावेऽपि चैतन्यभास्यत्वेन लक्षणेनात्मी...राकारतेत्यर्थः । तथा तादर्थ्यमप्यस्ति आत्मनि कर्तृत्वभोक्तृत्वादिव्यवहार...वाहकतया आत्मशेषत्वमस्ति यद्यस्मादेवं तत्तस्मादप्यनात्मत्वलक्षण इद...शो विद्यते अतस्तत्प्रहाणेन ब्रह्मात्मानुभवो भवेदिति सर्वं समञ्जसम् ॥५॥

इति पञ्चमं [१]बुद्ध्यपराधप्रकरणम् ॥ ५ ॥

---

## विशेषापोहप्रकरणम् ६

पदार्थविवेकवतो वाक्यादहंब्रह्मेति ज्ञानं भवतीत्युक्तम्, तत्राहमित्यत्रेद...मंशप्रहाणेन साक्षितत्त्वस्य शोधनप्रकारः सूक्ष्मोपायो निर्दिष्टः, तत्रासमर्थ...मुमुक्षुं स्थूलोपायेन पदार्थशोधनप्रकारमुपदेष्टुं प्रकरणमारभते । तत्र यस्स्वरू...हाणमन्तरेण ज्ञातुं न शक्यते यथाग्नेरौष्ण्यं तस्य स्वरूपत्वादेव न विशे...ता यद्यपि तथापि तथाविधस्य क्वचिद्विशेषणत्वव्यवहारः कल्पितभेदमा...त्येति स्थिते आत्मनि सति सत्ताचैतन्यानन्दानामनपायान्न तेषां विशेष...णं किंतु स्वरूपत्वमेव कृशः स्थूलः कृष्णो गौरोऽहं मनुष्यः श्रोता द्रष्टा वक्ता ...मी क्रोधी ज्ञानी कर्ता भोक्ता सुखी दुःखीत्येवंविधानि विशेषणानि ना...नः सत्तादिवत्स्वरूपभूतानि सत्यप्यात्मनि सुषुप्त्यादौ तेषामभावादित्येव...त्मनः पृथगुद्धृत्य तस्य कूटस्थतावधेयेत्यभिप्रेत्य पृथग्भूतस्य विशेषणत्वाभावे ...न्तमाह—

---

१ मूत्राद्यङ्कप्रकरणमित्यन्यत्र.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशिष्यते।
तथा शिष्टेन सर्वेण येन येन विशेष्यते ॥ १ ॥

छित्त्वा त्यक्तेनेति ॥ यथायं दृष्टान्तस्तथा येन येन मनुष्य विशेष्यते तेन सर्वेण शिष्टेन त्यक्तहस्तातिरिक्तेन पादादिना वा स्वयं विशिष्यते यथा हस्तच्छेदानन्तरं हस्तवानहमिति न विशिष्टप्रत्ययः एवमेव पादादिमान्मनुष्योऽहमित्यादिविशिष्टप्रत्ययो न कार्य इत्यर्थः

देहद्वयसमवायिधर्माणामात्मनि व्यभिचारात्तैरात्मा विशिष्य इत्युक्तमनूद्य फलितमाह—

तस्मात्त्यक्तेन हस्तेन तुल्यं सर्वं विशेषणम्।
अनात्मत्वेन तस्माज्ज्ञो मुक्तः सर्वैर्विशेषणैः ॥ २ ॥

तस्मादिति ॥ अनात्मत्वेन त्यक्तेन हस्तेनेति संबन्धः। वि शेषणानि नात्मस्वभावभूतानि विशेषणत्वात् छित्त्वा त्यक्तहस्तवत् यस्मादेवं तस्मात् ज्ञो ज्ञानवान्विवेकज्ञानवान्सर्वविशेषणैर्मुक्त मात्रात्मक एवावशिष्यत इत्यर्थः ॥ २ ॥

उक्तन्यायेन विशेषणानामनात्मत्वेति नात्मनस्तद्वियोगोऽपि पायाभ्यां संबन्धनैरन्तर्यादित्याशङ्क्याह—

विशेषणमिदं सर्वं साध्वलंकरणं यथा।
अविद्याध्यासतः सर्वं ज्ञात आत्मन्यसद्भवेत् ॥ ३ ॥

विशेषणमिदं सर्वमिति ॥ इदं सर्वं विशेषणं यथालंकरणं संबन्धेऽपि न तत्तादात्म्यतद्धर्मत्वबुद्धिविषयस्तथा साधु शोभनं यावत्। इतरथा आगमापायानुपपत्तेरित्यर्थः। तर्हि कुतो मनुष्योऽहं दौ तादात्म्यावभासस्तत्राह—अविद्याध्यासत इति। मोहादेव इत्यर्थः। यस्मादविद्ययाध्यस्तमेवात्मनीदं सर्वं विशेषणमतो ज्ञाते न्यविद्यानिवृत्तावसत् बाधितं कालत्रयेऽप्यविद्यमानं भवेत्तथा दिति योजना ॥ ३ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

ज्ञात आत्मनीत्युक्ते ज्ञेयत्वमात्मन उक्तमिति शङ्का स्यात् ज्ञेयत्वे च विशेषणादिवदनात्मत्वप्रसङ्ग इत्याशङ्क्याह—

ज्ञातैवात्मा सदा ग्राह्यो ज्ञेयमुत्सृज्य केवलः ।
अहमित्यपि यद्ग्राह्यं व्यपेताङ्गसमं हि तत् ॥ ४ ॥

ज्ञातैवेति ॥ ज्ञेयमुत्सृज्य दृश्यांशापोहं कृत्वा यो ज्ञाता सदा सर्वस्य स एवात्मा न ग्राह्यांश इति ग्राह्योऽध्यवसेयः । किंलक्षणः । केवलो ज्ञातृत्वविशेषणेनापि रहित इत्यर्थः । ज्ञातृत्वाद्युपलक्षितं चिन्मात्रमलुप्तप्रकाशस्वभावतया सर्वानुस्यूतं वस्त्वात्मेति विवेकवतो निश्चितप्रत्ययो भवेदिति भावः । अहमित्यनुभूयमानत्वात्कथं ज्ञातैवात्मेत्युच्यत इत्यत आह—अहमित्यपीति । यदपि इदमहमिति ग्राह्यमात्मरूपं मन्यसे तद्व्यपेताङ्गसमं छिन्नहस्ततुल्यं हि एव तत्सुषुप्त्यादावात्मन्यवभासमानेऽप्यहमित्यनवभासनादहंधर्मो व्यभिचारित्वे सत्यात्मदृश्यतयात्मत्वायोगादित्यर्थः ॥ ४ ॥

आत्मनोऽहंप्रत्ययग्राह्यत्वाभावे चक्षुरादेरप्यविषयस्य कुतः सिद्धिरिति मुग्धशङ्कां दृष्टान्तेनापाकुर्वन्नात्मनोऽन्यनिरपेक्षां स्वतःसिद्धिं साधयति—

यावान्स्यादिदमंशो यः स स्वतोऽन्यो विशेषणम् ।
विशेषप्रक्षयो यत्र सिद्धो ज्ञश्चित्रगुर्यथा ॥ ५ ॥

यावानिति ॥ अहमित्यत्र यावांश्चिदवभास्यस्वलक्षणेनेदमंशो योऽहंकारादिर्यत्र विशेषणं स्याद्यस्मिन्स्वानुगतप्रतिभासे प्रत्यगात्मनि विशेषव्यवहारहेतुः स्यात्स प्रत्यगात्माऽन्यो विशेषणत्वेनाभिमतात्तदहंकारादेः परो विशेषप्रक्षयश्च सर्वेषां विशेषाणां प्रक्षयो व्यावृत्तिर्यस्मिन्निति व्युत्पत्तेर्निर्विशेषश्च ज्ञस्वरूपः स्वतःसिद्धोऽन्यनिरपेक्ष एव सिद्धः स्फुरन्वर्तत इति पदयोजना । यथा देवदत्तो विशेषणभूतायाश्चित्रगोरन्यस्तत्संबन्धात्प्रागेव सिद्धो न चित्रगोः संबन्धं स्वसिद्धिं प्रत्यपेक्षते तथात्माप्यहंकारादिसंबन्धात्प्रागेव स्वमहिम्ना सिद्धो नाहंकारादिकं स्वसिद्धावपेक्षत इति दृष्टान्तदार्ष्टान्तिकसंगतोऽर्थः ॥ ५ ॥

नन्वहमोऽनात्मत्वे कथमहं ब्रह्मेति तादात्म्यश्रुतिरुपपद्येतेत्याशङ्क्याऽध्यस्ताहंकारस्य मूलनिवृत्त्यर्था श्रुतिर्नाहंकारस्यात्मत्वप्रतिपत्त्यर्थेति परिहरति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदमंशोऽहमित्यत्र त्याज्यो नात्मेति पण्डितैः ।
अहंब्रह्मेति शिष्टांशो भूतपूर्वगतेर्भवेत् ॥ ६ ॥

इदमंशोऽहमिति ॥ अहमित्यत्राहंकारावभासे य इदमंशः स दृश्यत्वादिति निश्चित्य पण्डितैस्त्याज्यः । तस्मिन्नात्माभिमानो न इत्यर्थः । तर्हि कथं श्रुतिनिर्देशस्तत्राह—अहमिति । अहंब्रह्मेति निष्ठायां योऽहंकारांशं उल्लिख्यते स भूतपूर्वगतेर्हेतोर्भवेत् । भूता पूर्वं गतिः प्राप्तिस्तस्या इति विग्रहः । अहंकारलक्ष्यं वस्तु तत्साक्षिरूपं श्रुत्योल्लिख्यत इत्यर्थः ॥ ६ ॥

इति षष्ठं विशेषापोहप्रकरणम् ॥ ६ ॥

---

## बुद्ध्यारूढप्रकरणम् ७

एवं कृतान्वयव्यतिरेकस्य परिशोधितपदार्थतत्त्वस्य वाक्यादेव ज्ञानमुपपद्यत इत्युपपत्त्या निर्धारितमर्थं स्वानुभवावष्टम्भेन स्पष्टीकर्तुं प्रकरणान्तरमारभते—

बुद्ध्यारूढं सदा सर्वं दृश्यते यत्र तत्र वा ।
मया तस्मात्परं ब्रह्म सर्वज्ञश्चास्मि सर्वगः ॥ १ ॥

बुद्ध्यारूढमित्यादिना ॥ यस्मान्मया सर्वमध्यात्ममधिभूतमधिदैवमित्यादिलक्षणं यत्र तत्र वा जाग्रत्स्वप्नयोरिहलोकपरलोकयोर्वा स्थितं प्रवाहादितः शाश्वतो वा यदुपलभ्यमस्ति तत्सर्वं बुद्ध्यारूढं बुद्धिवृत्तिविषयं सदा दृश्यते प्रकाश्यते तस्मादहं सर्वदृश्यविलक्षणत्वात्परं प्रपञ्चातीतं ब्रह्मास्मि । सर्वज्ञः सर्वार्थप्रकाशकः सर्वगोऽपरिच्छिन्नश्चास्मीत्यर्थः ॥ १ ॥

ननु कथमेतावता सर्वज्ञत्वं पुरुषान्तरबुद्ध्यारूढेऽर्थे पुरुषान्तरस्य स्मरणयोरसंभवादेकस्यात्मनः सर्वार्थप्रकाशकत्वासिद्धेरित्यत आह—

यथात्मबुद्धिचाराणां साक्षी तद्वत्परेष्वपि ।
नैवापोढुं न वा दातुं शक्यस्तस्मात्परो ह्यहम् ॥ २ ॥

यथात्मेति ॥ आत्मनि सर्वव्यवहारप्रवर्तकतया आत्मसंबन्धिनी

---

१ इति छित्वाप्रकरणमिति वा ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ात्मबुद्धिस्तस्याश्चारः प्रचारो येषु ते आत्मबुद्धिचारा अध्यात्माधिदैवस्थूलसू-
क्ष्मदेहात्मकास्तेषां साक्षी स्फोरकोऽहं यथा तद्वत्तथा परेषु परकीयबुद्धिचारे-
ष्वप्यहं साक्षी । साक्षिभेदे प्रमाणाभावात् 'मय्येव सकलं जातं मयि सर्वं
प्रतिष्ठितम् । मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यह'मित्यादिश्रुतेर्मय्येवैक-
स्मिन्नद्वितीयेऽकरसे आत्मनि सर्वप्रमातृतद्बुद्धितत्प्रचारगोचरस्य प्रपञ्चस्य कल्पित-
त्वावगमाच्च युक्तं मम सर्वज्ञत्वादीत्यर्थः । यस्मादेवमहं सर्वसाक्षित्वेन सर्वा-
धिष्ठानत्वेन च सर्वज्ञः सर्वगतश्च तस्मादपोढुमयमस्य द्रष्टा न भवत्यत्र स
साक्षीति वा निराकर्तुं नैव शक्यः केनचित् । नचैवादातुं ज्ञानेन क्रियया वा
प्रकाशयितुमुत्पादयितुमाक्रष्टुं वा शक्यः । हि यस्मादहं ग्राह्यग्राहकादिप्रपञ्च-
वैलक्षण्यस्तस्मात्परः परमात्मैवेत्युपसंहारः ॥ २ ॥

ननु बुद्ध्यारूढं चेत्सर्वं प्रकाश्यते क्षेत्रज्ञेन तदा दर्शनक्रियायां कर्तृत्वाद्वि-
कारित्वादिदोषप्राप्तेस्तस्यानात्मत्वप्रसङ्ग इति शङ्कां निरस्यति—

**विकारित्वमशुद्धत्वं भौतिकत्वं न चात्मनः ।**
**अशेषबुद्धिसाक्षित्वाद्बुद्धिवच्चाल्पवेदना ॥ ३ ॥**

विकारित्वमिति ॥ आत्मनो न विकारित्वं बुद्धिवत्सावयवत्वाभावा-
त्सर्वविकारसाक्षित्वाच्च । ततएव नात्मनोऽशुद्धत्वं क्रियागुणयोगित्वमस्ति ।
फलगुणक्रियायद्वस्तुसाक्षित्वाच्च । नापि भौतिकत्वमात्मनो रूपादिहीन-
त्वात् । किंच नात्मनो बुद्धिवदल्पवेदना । यथा बुद्धेर्बुद्धितत्संसर्गादिविषया
वेदनास्ति नैवमात्मनोऽशेषबुद्धिसाक्षित्वात् । सर्वबुद्धिस्वरूपतद्विकारादिसा-
क्षित्वादित्यर्थः ॥ ३ ॥

यदि निर्विकार एवात्मा कथं तर्हि स सर्वार्थप्रकाशक इत्युच्यत इत्या-
शङ्क्य लोकप्रसिद्धदृष्टान्तेन निर्विकारस्यैव प्रकाशकत्वमुपपादयति—

**मणौ प्रकाश्यते यद्वद्रक्ताद्याकारतातपे ।**
**मयि संदृश्यते सर्वमातपेनेव तन्मया ॥ ४ ॥**

मणाविति ॥ मणौ स्फटिकादिलक्षणे जपाकुसुमादिरूपा रक्ताद्याकारत-
ातपे सूर्यालोके सत्ये प्रकाश्यते गृह्यते यद्वत्तथा मयि क्षेत्रज्ञे आदित्य-
स्थानीये विद्यमान एव स्फटिकादिस्थानीयायां बुद्धौ जपाकुसुमादिरक्तता-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिस्थानीयं सर्वं विषयजातं संदृश्यते। तत्तस्मादातपेनेव निःप्रकाशं सर्वं प्रकाश्यते न बुद्धिवद्विकारवत्ता नापि बुद्धिरेव द्रष्ट्री। तं बुद्धेरनुपयोग एव, चैतन्यस्य विषयविशेषाकारत्वापादनाय बु द्धिति ॥ ४ ॥

इदानीं प्रत्यगात्मनोऽद्वितीयत्वमुपपादयंस्तस्य च शुद्धत्वं स्पष्टयति

बुद्धौ दृश्यं भवेद्बुद्धौ सत्यां नास्ति विपर्यये।
द्रष्टा यस्मात्सदा द्रष्टा तस्माद्द्वैतं न विद्यते ॥ ५ ॥

बुद्धाविति ॥ जाग्रदादौ बुद्धौ सत्यां स्वाविद्ययाध्यस्तायां बु रूढं सद्दृश्यं द्वैतं भवेद्भवेत्। नास्ति विपर्यये बुद्धावसत्यां स्वा नास्ति। जडस्याज्ञातसत्त्वे प्रमाणाभावादित्यर्थः। द्रष्टा तु साक्षी स स्वप्यवस्थासु द्रष्टैव न दृश्यवत्स्वसत्तां व्यभिचरति। यस्मादेवं स मानस्याव्यभिचारस्तद्व्यभिचारिणश्च सत्त्वानुपपत्तिः यस्माद्द्वैतं न वि नित्यशुद्ध एव प्रत्यगात्मेत्यर्थः ॥ ५ ॥

यद्यपि द्वैतसंसर्गकृतमशुद्धत्वमात्मनो नास्ति द्वैतस्याभावात्तथा विद्याभ्यां संबन्धादशुद्धिर्भविष्यतीत्याशङ्क्य बुद्धेरेव विद्याविद्ये नात्मनः इति शुद्ध एवात्मेत्याह—

अविवेकात्पराभावं यथा बुद्धिरवैत्तथा।
विवेकात्तु परादन्यः स्वयं चापि न विद्यते ॥ ६ ॥

अविवेकादिति ॥ न विद्यते विवेको भेदो भासमानतया सोऽविवेको देहादावात्मबुद्धिः। विपर्ययज्ञानमिति यावत्। तस्माद रस्यासंसारिणः सर्वसाक्षितया विविक्तस्याभावमविद्यमानतां यथा वैद्विदितवती। अत्र बुद्ध्यध्यासादेव चिदात्मनोऽपि भ्रान्तियोगात्म बुद्धिरेवाज्ञानविपर्यासाश्रय इत्यङ्गीकृत्य यथा बुद्धिरवैदित्युक्तमि व्यम्। तथा विवेकात्तु अनात्मापवादेनात्मनः स्वभावनिर्धारणं स्माद्विवेकादूर्ध्वं परादसंसारिणः परमात्मनोऽन्यो जीवः संसारी न स्वयं चापि स्वाभासबुद्धिरपि सनिदाना न विद्यते। तदा प्रत्यगा वैत्येत्यर्थः। तथाच भ्रान्तिसम्यग्ज्ञानयोर्विद्याविद्यारूपयोरपि बुद्धि

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

त्मनोऽशुद्धिगन्धोऽपीति भावः ॥ ६ ॥

इति सप्तमं बुध्यारूढप्रकरणम् ॥ ७ ॥

---

## मतिविलापनप्रकरणम् ८

ननु विद्याविद्ययोर्यदि बुद्धिगतत्वं तर्हि सांख्यसिद्धान्तप्रसङ्गस्ते हि बुद्धिरेव पुरुषस्यापवर्गार्थं भोगार्थं च ज्ञानाज्ञानरूपतामाचरतीति वदन्तीत्याशङ्कामपनुदन्पूर्वं स्वानुभवानुरोधेन साधितमेव ब्रह्मात्मज्ञानमात्मनः संवादात्मकेन प्रकरणान्तरेण द्रढयति—

चितिस्वरूपे स्वत एव मे मते रसादियोगस्तव
मोहकारितः । अतो न किंचित्तव चेष्टितेन मे
फलं भवेत्सर्वविशेषहानतः ॥ १ ॥

चितिस्वरूप इति ॥ रसादियोगो रागादिनिबन्धनो भोक्तृत्वादिसंबन्धः मोहोऽविवेकः । फलितमाह—अतो नेति ॥ १ ॥

यस्मात्सर्वविशेषराहित्यात्तव चेष्टितेन मे ममानाधेयातिशयस्य किमपि फलं नास्ति तस्मात्तवोपशम एव युक्त इत्याह—

विमुच्य मायामयकार्यतामिह प्रशान्तिमायाह्य-
सदीहितात्सदा । अहं परंब्रह्म सदा विमुक्तव-
त्तथाजमेकं द्वयवर्जितं यतः ॥ २ ॥

विमुच्येति ॥ मायामयकार्यतां मिथ्याचेष्टितं विमुच्यासदीहिताच्चिरर्थकप्रयासात्प्रशान्तिं प्रशममिह मयि प्रत्यगात्मन्यायाहि प्राप्नुहि । अत्र मायामयचेष्टितासदीहितशब्दाभ्यामविद्यानिबन्धनत्वस्य सूचितत्वात्सांख्यमतशङ्का निरवकाशीकृता वेदितव्या । ननु किमिति प्रत्यगात्मनि मनसो लय उच्यते सत्यज्ञानादिलक्षणे ब्रह्मण्येव कस्मान्नोच्यत इत्याशङ्क्याह—सदा अहं परंब्रह्मेति । यतः सदैवाहं ब्रह्मैव तथासति सदा विमुक्तवन्मुक्त इवास्मि न तु मे मुक्तिर्बन्धाभावादिति योजना । अजत्वविशेषणं जन्मादिसमस्तविकारप्रति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पेधार्थम्। अत एकं सदैकरूपमित्यर्थः। सजातीयभेदरहितमिति वा
वर्जितं विजातीयभेदहीनमित्यर्थः। अतो यन्मय्येकीभूतं ब्रह्मण्येव
भूतमिति स्थिते न 'परेऽव्यये सर्वे एकीभवन्ती'ति श्रुतिविरो
भावः॥ अपरा योजना—हे मते, असत्सु स्वतः स्वरूपशून्येषु
विषयेषु यदीहितमभिलषितं दृष्टमदृष्टं वा फलं तस्मादसदीहितात्त
दशायामपि प्रशान्तिं प्रशममायाहि। तदर्थं व्यापारं परित्यजेत्यर्थः।
न्तापि त्वं नैवात्मानं धारयेत्याह- विमुच्येति। कार्यतां बुद्धि
रूपतां विमुच्य विहाय मायां कारणरूपमायामय गच्छ तदात्मिका
तर्हि तद्रूपेण स्थित्वा पुनरुद्भविष्यामीति चेत्तत्राह—इहेति। इह
एवान्तरय प्रविश। कार्यकारणरूपतां विहाय तप्तायःपीतोदकवि
पग्रस्ता भवेत्यर्थः। कथमहं मुखान्तःकवलीकृतब्रह्माण्डकोटिर्मेयत
मानेन त्वया ग्रस्ता स्यामिति चेत् नाहं कदापि चालयितुं त्वया श
न्तिमात्रमेतदित्यभिप्रेत्याह—अहं परंब्रह्मेति। यतोऽहं सदा परं
मात्मा ब्रह्मे'ति श्रुतेरिति योज्यम्। विमुक्तवदिति ब्रह्मविशेषण
तद्धितः। विमुक्तं नित्यमुक्तमेवेत्यर्थः। तथा तथा श्रुत्युक्तं
व्याख्यातमन्यत्॥ २॥

नन्वजत्वादिप्रतिपादकशास्त्राद्ब्रह्मणो निर्विशेषतया नित्यमुक्तत्वे
मात्मनो देहादिष्वन्वितस्य निर्विशेषतया ब्रह्मरूपतासंभव इत्यत

सदा च भूतेषु समोऽस्मि केवलो यथा च खं
सर्वगमक्षरं शिवम्। निरन्तरं निष्कलमक्रियं
परं ततो न मेऽस्तीह फलं तवेहितैः॥ ३॥

सदा च भूतेष्विति॥ चशब्दोऽवधारणार्थः। अहं केवल
त्कार्यरूपविशेषणरहितः सर्वेषु भूतेषु सम एवास्मि। उपाधिपरा
रेण मयि विशेषोल्लेखाभावादित्यर्थः। सर्वानुस्यूतस्याप्यसङ्ग
निर्विशेषत्वे दृष्टान्तमाह—यथा च खमिति। आकाशस्यासङ्ग
द्धत्वाच्च तस्मिन् शङ्का कार्येति चशब्दार्थः। सर्वगमित्यादीनि
ब्रह्माकाशयोः समानि। यतः आकाशवत्केवलोऽहं सर्वभूतेषु

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

आकाशस्वभावोपमितं सर्वगमित्यादिविशेषणं परं ब्रह्मैवास्मीति योज्यम् । उपपादिते ब्रह्मात्मैक्ये फलितमाह—तत इति ॥ ३ ॥

ब्रह्मभूतस्य तव मदीहितैः फलाभावेऽपि कथंचिन्मच्चेष्टया त्वत्संबन्धि-त्वांप्रति गुणभूतस्य प्रधानभूतस्य वा कस्यचिदर्थस्य कश्चिदुपयोगो भवि-ष्यतीत्याशङ्क्य सोऽपि मयि दुःसंपाद इत्याह—

अहं ममैको न तदन्यदिष्यते तथा न कस्याप्य-
हमस्म्यसंगतः । असङ्गरूपोऽहमतो न मे त्वया
कृतेन कार्यं तव चाद्वयत्वतः ॥ ४ ॥

अहमिति ॥ एक एवाहं चित्स्वरूपस्य मम परमार्थतः सजातीयविजा-तीयस्वगतभेदे मानाभावात्ततो न मम गुणभूतं किंचिन्मत्तोऽन्यदिष्यते ष्यते । तथा कस्यापि प्रधानभूतस्याहं गुणभूतो नास्मि । कुतः । असङ्गतः निष्पादितातिशयत्वात् । अनाधेयातिशयत्वादित्यर्थः । यतोऽहमसङ्गरूपोऽतो मे त्वया कृतेन किमपि प्रयोजनमस्ति । किंच त्वमेव नासि कुतस्तवेहितं सफलं चेत्याशयेनाह—तव चेति । मत्स्वरूपज्ञानकल्पितायास्तवाधिष्ठानभू-मत्स्वरूपव्यतिरेकाभावादभेदे चोपकार्योपकारकत्वासंभवादलं विकल्पनया शान्तैव भवेत्यर्थः ॥ ४ ॥

इदानीं कृतार्थस्याचार्यस्य स्वानुभवसिद्धार्थाविष्कारकप्रकरणनिर्माणप्र-वृत्तौ निमित्तं दुःखिजनदर्शनसंजातकरुणैव न ख्यात्यादीत्यभिप्रेत्याह—

फले च हेतौ च जनो विपक्तवानिति प्रचिन्त्याह-
मतो विमोक्षणे । जनस्य संवादमिमं प्रक्लृप्तवान्स्व-
रूपतत्त्वार्थविबोधकारणम् ॥ ५ ॥

फले चेति ॥ अयं जनो हेतुफलात्मके संसारे विशेषेणासक्तवानिति चिन्त्य विमृश्य तादृग्जनस्य लोकस्यातः संसाराद्विमोक्षणे मोक्षार्थमहमि-ममध्यात्मसंवादरूपं ग्रन्थं प्रक्लृप्तवान्प्रणीतवानस्मि । किमनेन संवादप्र-णयनेन जनस्य भवेदिति तदर्थं तं विशिनष्टि—स्वरूपेति स्वस्यात्मनो रूपं नित्यचैतन्यस्वभावस्तस्य तत्त्वार्थो ब्रह्मत्वम् । तस्य विस्पष्टबोधकारणमि-त्यर्थः ॥ ५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत एवंविधोऽयं संवादस्तस्मात्साध्यसाधनविपर्यावर्तलक्षणा मुमुक्षुभिरयमनुचिन्तनीय इत्यभिप्रेत्याह—

संवादमेतं यदि चिन्तयन्नरो विमुच्यते ज्ञानमहाभयागमात्। विमुक्तकामश्च तथा जनः सदा चरत्यशोकः सम आत्मवित्सुखी॥ ६॥

संवादमेतमिति॥ अज्ञानकृतान्महाभयागमात्। संसारादि महाभयस्यागमो यस्मात्तन्महाभयागममज्ञानं तस्मादिति विग्रहः स्वज्ञानाद्विमुच्यत इत्यर्थः। कारणनिवृत्त्या कार्यनिवृत्तिमाह—वि श्चेत्यादि। चरति जीवन्नेव बन्धप्रतिभासरहितः सन्ब्रह्मण्येव कृतकृत्यो भवतीत्यर्थः। सुगममन्यत्॥ ६॥

इति अष्टमं मतिविलापनप्रकरणम्॥ ८॥

---

## सूक्ष्मताव्यापिताप्रकरणम् ९

यस्य प्रत्यग्ब्रह्मणो वाक्योत्थज्ञानेनाज्ञाननिवृत्त्या मुक्तिरुक्ता तत्त्वेन निरतिशयसूक्ष्मत्वं व्यापित्वं च यथा च त्वमित्यत्र सूचितं प्रकरणान्तरमारभते—

सूक्ष्मताव्यापिते ज्ञेये गन्धादेरुत्तरोत्तरम्।
प्रत्यगात्मावसानेषु पूर्वपूर्वप्रहाणतः॥ १॥

सूक्ष्मतेत्यादिना॥ गन्धशब्दः पृथिवीशब्दार्थः। पृथिव्या णात्कार्यात्पूर्वस्मात्पूर्वस्मादुत्तरोत्तरं कारणतया स्थितेषु प्रत्यगा सर्वान्तरात्मपर्यन्तेषु पदार्थेषु यथाक्रमं पूर्वपूर्वप्रहाणतः कार्य सूक्ष्मता व्यापिता च विज्ञातव्या। कार्यकारणान्वयव्यतिरे संभावनीयेत्यर्थः। कार्येषु विद्यमानमपि कारणस्वरूपं तत्कार्या ततया न स्वरूपेणावभासत इति सूक्ष्ममुच्यते न पुनः कार्यपरि परिमाणयोगात्। तथा सकलविकारानुगतस्यैवोपादानकारणत्व याधिकदेशवृत्तित्वेन व्यापित्वं च कारणस्य। तथाहि चतुर्विध

---

१ इति चितिस्वरूपप्रकरणमित्यन्यत्र।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

[स्थू]लरूपा पृथिवी तावन्न भूतग्रामेषु गृह्यमाणेषु गृह्यते तन्न तच्छब्दप्रत्यय-[व्य]वहारादर्शनाल्लोकस्य, अतस्तदपेक्षया सूक्ष्मा तद्व्याप्तदेशवर्तित्वाद्व्यापिका [च] । नच तत्तत्कार्योपादानभूताः पृथिव्यंशा भिन्ना इति नोपादानस्य [व्य]ापकतेति वाच्यम् । कार्याकारेण भेदव्यतिरेकेण मृत्स्वरूपभेदे प्रमाणानि-रूपणादन्यथा तटाकान्तःस्थमृन्निर्मितकुसूलस्य गृहाङ्गणदेशे मृदात्मना विल-[य]ाभावप्रसङ्गादुपादानादन्यत्र कार्यलयानुपपत्तेः । तस्मात्स्वकार्यापेक्षया [पृ]थ्वी तावत्सूक्ष्मा व्यापिका च सिद्धा । तथाद्भिर्व्याप्ता पृथिवी 'तद्यदपां शर [आ]सीत्तत्समहन्यत सा पृथिव्यभव'दिति श्रुतौ जलपरिणामविशेषस्य शरश-[ब्द]वाच्यस्य दधिमण्डाकारस्य पृथिव्यात्मत्वश्रवणात्स्वेदप्रस्रवणादेः पर्वता-[दि]शिलायामन्तर्भूमौ च सर्वत्रोपलम्भाद्रसस्य च सलिलासाधारणगुणस्य [पृ]थिव्यां सर्वत्रोपलम्भात्तस्यैकत्वेऽपि कटुतीक्ष्णत्वादिभेदः परिणामविशेषो-[पा]धिनिबन्धन इति । तस्माज्जलव्याप्ता पृथिवी सपरिणामेति जलं पृथिव्या [व्य]ापकं सूक्ष्मं च प्रागुक्तयुक्त्या सिद्धम् । तथा सपृथिवीजलं तेजसा स्वका-[र्य]ेन व्याप्तं सर्वत्रोष्मोपलम्भात्तप्तायोगोलकादौ सूर्यकिरणेषु चोदकस्य [त]द्दर्शनाच्च । तथा चैव तेजसो जलाद्व्यापकत्वं सूक्ष्मत्वं च प्रसिद्धम् । तदपि [वा]युना ग्रस्तं 'यतश्चोदेति सूर्योऽस्तं यत्र च गच्छती'ति 'प्राणाद्वा एष उदेति [प्रा]णेऽस्तमेति' इति श्रुतेः प्राणशब्दवाच्ये वायौ लयश्रवणाज्ज्वालारूपस्य च [वा]य्वधीनप्रवृत्तिनिवृत्तिदर्शनाच्च । वायुश्चाकाशेन ग्रस्त इति प्रसिद्धमे-[व]म् । सूक्ष्मत्वं तु व्याख्यातमेव सर्वत्र । एतत्सर्वं सत्तास्फूर्तिभ्यां व्याप्त-[म]नुभूयत इति सच्चिन्मात्रं सर्वस्योपादानं तस्य चार्थान्तरेणानुगमादर्श-[ना]दुपादानत्वे सिद्धे निरपेक्षव्यापकत्वं प्रागुक्तपरिपाट्या निरतिशय-[सूक्ष्]मत्वं च सिध्यति । तदनेन सच्चिन्मात्रेण सर्वस्य दृश्यराशेर्ग्रस्तत्वान्न ततः [पृथ]क् किमपि वस्तु विद्यत इति तस्य परमसूक्ष्मताव्यापिते निश्चित्य सोऽहम-[स्मि] कूटस्थाद्वयात्मेति सदा भावयेदिति तात्पर्यार्थः ॥ १ ॥

ननु नैतावतात्मन उक्तरूपत्वज्ञानसिद्धिरध्यात्माधिदैवतयोः पृथिव्यादे-[र्भि]न्न प्रथमानत्वादित्यत आह—

**शारीरा पृथिवी तावद्यावद्बाह्या प्रमाणतः ।**
**अम्ब्वादीनि च तत्त्वानि तावज्ज्ञेयानि कृत्स्नशः ॥ २ ॥**

शारीरेति ॥ यावद्बाह्या पृथिवी प्रमाणतः परिमाणतो भवति तावत्ता-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वक्ष्यमाणा शारीरा पृथिवी ज्ञेयेति संबन्धः । तथाम्ब्वादीनि चत्वा कृत्स्नशो निरवशेषतया तावत्तावत्प्रमाणानि ज्ञेयानि यावच्छारीरा पृथिवीति योजना । एतदुक्तं भवति—अध्यात्माधिभूताधिदैवात्म कानां पृथिव्यादीनामेकज्ञानविजृम्भितत्वादेकप्रयत्नेन प्रविला सर्वत्र प्रत्यक्त्वानुगमात्प्रत्यगात्मावसानमेवाध्यात्मादिरूपं तेन ततः पृथगस्तीति प्रत्यक्त्वेऽवधार्यमाणे बाह्याध्यात्मिकादिभेद द्यात्प्रत्यगात्मब्रह्म तावन्मात्रमेव सर्वमवशिष्यत इति भवेदेव प्र स्वज्ञानसिद्धिरिति ॥ २ ॥

नन्वेवं परागर्थस्यासत्त्वे कथमात्मनः प्रत्यक्त्वं सर्वगतत्वमि तस्य पराचीनविकारापेक्षत्वादतः कथं पराचां प्रत्यगात्मावसान चिन्मात्रस्वरूपस्यैवापूर्वादिलक्षणस्य प्रत्यगादिशब्दैर्लक्ष्यत्वाल्लक्ष मारोपितपरागर्थापेक्षायामपि स्वरूपस्यान्यानपेक्षत्वाद्युक्तं सर्व वसानत्वावधारणमिति दृष्टान्तेनोपपादयति—

> वाय्वादीनां यथोत्पत्तेः पूर्वं खं सर्वगं तथा ।
> अहमेकः सदा सर्वश्चिन्मात्रः सर्वगोऽद्वयः ॥ ३ ॥

वाय्वादीनामिति ॥ स्पष्टार्थः ॥ ३ ॥

ननु कथमाकाशवदेक एवात्मा सर्वात्मा भवेत् ब्रह्मादिभेदे त्वस्य विभाव्यमानत्वात्तथा चैतन्यमात्रत्वं चानुपपन्नं रागादिदो ध्येरित्याशङ्क्याह—

> ब्रह्माद्याः स्थावरान्ता ये प्राणिनो मम पूः स्मृताः ।
> कामक्रोधादयो दोषा जायेरन्मे कुतोऽन्यतः ॥ ४ ॥

ब्रह्माद्या इति ॥ ममैव चिदात्मनः सर्वे प्राणिनः पूः पुर स्मृताः । निर्णीता इत्यर्थः । तथा कामक्रोधादयो दोषा आत्मनो विकाः व्यभिचारित्वात्परतोऽपि ते न संभवन्तीत्याह—जायेरन्मे इति । अन्यस्याभावादित्यर्थः ॥ ४ ॥

प्रत्यगात्मनो निर्दोषत्वमसिद्धं संसारदोषस्य प्रत्यक्षत्वादित्य

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

…रण्यंप्रत्यक्षवदात्मनि दोषदृष्टेर्भ्रमत्वान्मैवमित्याह—

भूतदोषैः सदाऽस्पृष्टं सर्वभूतस्थमीश्वरम् ।
नीलं व्योम यथा बालो दुष्टं मां वीक्षते जनः ॥ ५ ॥

भूतदोषैरिति ॥ अस्पृष्टमिति छेदः । सर्वभूतेषु स्थितस्यापि तद्दोषैरस्पृष्टत्वमीश्वरत्वादिति हेत्वर्थं विशेषणमीश्वरमिति । सर्वस्येशितारं कारणप्रकृति यावत् । नहि कारणं कार्यधर्मैः संस्पृश्यत इत्यर्थः । स्पष्टमन्यत् ॥ ५ ॥

यदुक्तं ब्रह्माद्याः स्थावरान्ताः प्राणिन एकस्यात्मनः शरीरभूता इति कथमित्यत आह—

मच्चैतन्यावभास्यत्वात्सर्वप्राणिधियां सदा ।
पूर्मम प्राणिनः सर्वे सर्वज्ञस्य विपाप्मनः ॥ ६ ॥

मच्चैतन्येति ॥ सर्वज्ञस्य सर्वावभासकस्यातएव विपाप्मनो दृश्यदोषसंरहितस्य ममात्मनः सर्वे प्राणिनः पूः शरीरम् । कुतः । सर्वप्राणिधियां सदा मच्चैतन्यावभास्यत्वादिति योजना । 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष' इतिश्रुतेर्बुद्ध्यन्तःसाक्षितया प्रकाशमानस्य चैतन्यज्योतिष सर्वप्राणिष्वात्मत्वावगमात्, तस्य च बुद्धितत्स्थाभासभेदमन्तरेण स्वरूपाऽभेदानिरूपणात्सवितुरिवोदकपात्रतत्स्थाभासव्यतिरेकेणेति सिद्धमेकात्मनः सर्वाणि भूतानि शरीरमिति भावः । तथाच श्रुतिः 'यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत' ॥ ६ ॥

तर्हि भास्यप्राणितद्बुद्धीनां सत्त्वादद्वैतक्षतिरिति तत्राह—

जनिमज्ज्ञानविज्ञेयं स्वप्नज्ञानवदिष्यते ।
नित्यं निर्विषयं ज्ञानं तस्माद्द्वैतं न विद्यते ॥ ७ ॥

जनिमदिति ॥ यज्जनिमच्च ज्ञानविज्ञेयं यत्कार्यं जडं च तन्मिथ्येष्यते स्वप्नज्ञानं तथा जाग्रदपि कार्यं दृश्यं चेति मिथ्येति तत् द्वैतं न विद्यते …त्तस्माज्ज्ञेयस्यासत्त्वात् ज्ञानं नित्यं सदा निर्विषयं विषयनिरूप्यं न …ते । यद्वा नित्यमविनाशि सर्वविनाशसाक्षित्वादिति योजना । नह्यध्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रोपितेन द्वैतेन परमार्थमद्वैतं विहन्यते। नखल्वारोपितेन तोयादि धारभूम्यादि सद्वितीयं दृष्टमिति भावः ॥ ७ ॥

स्वरूपज्ञानस्य निर्विषयत्वं नित्यत्वं चोक्तं श्रुत्योपपादयति—

ज्ञातुर्ज्ञातिर्हि नित्योक्ता सुषुप्ते त्वन्यशून्यतः।
जाग्रज्ज्ञातिस्त्वविद्यातस्तद्ग्राह्यं चासदिष्यताम् ॥ ८ ॥

ज्ञातुर्ज्ञातिरिति ॥ सुषुप्ते त्वन्यस्य ज्ञेयस्यासत्त्वप्रदर्शनपूर्व त्मनो ज्ञातिः स्वरूपभूता ज्ञप्तिर्नित्येति श्रुत्योच्यते हीत्यर्थः। तद 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो नाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्ये' दित्यादि सुषुप्ते निर्विषयं ज्ञानं विषयाभावात्स्वरूपतो नाशशीलत्वाभावाच्च सिद्धं तथाप्यवस्थान्तरे सविषयमुपलभ्यत इति ज्ञातुर्ज्ञातिरनि त्यत आह—जाग्रदिति। यतः श्रुतिसिद्धं नित्यं निर्विषयं ज्ञानं णात् जाग्रज्ज्ञातिर्विषयदर्शनात्मिकाऽविद्याभ्रान्तिरेवात्मनो ज्ञानकर्तृत्वायोगादन्तःकरणस्य च जडत्वादेव ज्ञानाश्रयत्वानुपपत्ते सविषयं ज्ञानं तद्ग्राह्यं च विषयजातमसदपरमार्थमिष्यताम्। त्यर्थः। जागरितादौ विषयाकारबुद्धिवृत्तीनां स्फुरणावगुण्ठित त्पत्तिस्थितिविनाशसाक्षितया स्फुरणस्यैकस्य नित्यस्यान्यस्यावश्य त्वाज्जाग्रत्यप्यात्मचैतन्यं नित्यमेव। तथा विषयाणां वृत्तिसमकाल णाद्विषयव्यभिचारेऽपि स्फुरणाव्यभिचारात्तस्य विषयानिरूप्यत्व च सिद्धमिति भावः ॥ ८ ॥

ननु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासित श्रुत्यैवात्मनो दर्शनादिकर्मत्वोक्तेर्दृश्यत्वाद्रशनाभुजंगादिवदस शङ्क्य, 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वे' त्यादिश्रु पादिहीनस्य दर्शनाद्यविषयत्वाद्द्रष्टव्य इत्यादिश्रुतिरर्थान्तरेण तद्र्थ त्वोपदेशमुखेनानात्मप्रवणतात्याजनार्थेत्याह—

रूपवत्त्वाद्यसत्त्वाच्च दृष्ट्यादेः कर्मता यथा।
एवं विज्ञानकर्मत्वं भूम्नो नास्तीति गम्यते ॥ ९ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपवत्त्वादिति ॥ यथा द्रष्टव्य इत्यादिवशान्न ज्ञानकर्मत्वमेवं 'यत्र न्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे' त्यत्रापि प्रागुपन्य-श्रुतिविरोधात् 'यत्रान्यन्न पश्यत्यात्मानमेव पश्यती'ति स्वात्मदर्शन-धिपरस्वकल्पनायोगाद्ब्रह्मणो ब्रह्मणो विज्ञानकर्मत्वं नास्तीति गम्यते । निश्ची-त इत्यर्थः ॥ ९ ॥

इति नवमं सूक्ष्मताव्यापिताप्रकरणम् ॥ ९ ॥

---

## दृशिस्वरूपपरमार्थदर्शनप्रकरणम् १०

इदानीं पूर्वप्रकरणे युक्त्या व्यवस्थापितमात्मनो निर्विषयज्ञानस्वभा-वं स्वानुभवाभिनयेन प्रकटयन्नविषयत्वेनैवात्मज्ञानं भवतीति द्रढयितुं करणान्तरमारभते—

शिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् ।
लेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्तॐ ॥ १ ॥

दृशिस्वरूपमिति ॥ सकृद्विभातमेकदैव विस्फुरितम् । सदैव स्पष्टं भास-नमिति यावत् । यदेवंविधमक्षरं ब्रह्म तदेवाहं सततं भवामि अतो मुक्तः । ॐइत्यभ्यनुज्ञार्थम् । ॐकार उक्तस्वरूपमोंकारद्वारा मुमुक्षुभि-भिर्व्यक्तं भवतीति सूचयितुं ॐकारनिर्देशः ॥ १ ॥

ननु नाकाशवदलेपकत्वं दृशेः संगच्छते दृश्यसंबन्धादशुद्धिविक्रियादि-प्रसंभवादित्याशङ्क्य दृशेरात्मस्वरूपत्वात्तस्य च नित्यशुद्धत्वादेः श्रुत्यैव धारणान्मैवमित्यभिप्रेत्य श्रुतिसिद्धमर्थं प्रकटयति—

शिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः
स्तिरश्चोर्ध्वमधश्च सर्वतः संपूर्णभूमा त्वज आत्मनि स्थितः २

दृशिस्तु शुद्ध इति ॥ अहं तु दृशिः ज्ञानस्वरूप इत्यन्वयः । अतः मार्थतः शुद्धः । अशुद्ध्यादेर्ज्ञाननिबन्धनत्वात्तस्य चाभासत्वादिति भावः । द्धमपापविद्ध'मिति मन्त्रवर्णात् । यतश्चाविक्रियात्मकः विक्रियात्मकात्प्राणा-न्यः 'अप्राणो ह्यमनाः शुभ्रः' 'अस्थूलमनण्वह्रस्वमदीर्घ'मित्यादिश्रुतेर-

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

त्तोऽपि शुद्ध इत्यर्थः । 'न तदश्नाति किंचन न तदश्नोति कश्चने'... त्मनो विषयसंसर्ग इत्याह—न मेऽस्तीति । स्वभावतः परमार्थ... विक्रियाहेतुविषयाभावादप्यविक्रिय इत्युक्तं भवति । विषयाभा... त्मत्वे भूमवाक्यशेषमर्थतः पठति—पुरस्तिरश्चेति । 'स भगवः क... ष्ठित इति स्वे महिम्नीति यदि वा न महिम्नी'तिस्वरूपावस्थानम... मुपन्यस्य तदुपपादनायेदंकारास्पदं सर्वं पूर्वादिविभागेनाधरोत्त... चोपलभ्यमानं भूमैवेति प्रतिपाद्याऽहंकारास्पदस्य देहादिबुद्धिपर्य... भूम्नो भेद इति शङ्कायामहंबुद्धिग्राह्यमपि भूमैवेति मध्ये निर्दि... मात्मकस्य सर्वस्य भूम्नोऽन्यत्वाभावे भेदकाभावात्प्रत्यगात्मैव भू... सर्वमित्यन्तेन संपूर्णभूमा छान्दोग्ये दर्शित इत्यर्थः । अजोऽहम... र्जितो यत आत्मनि स्वे महिम्नि स्थितो नान्याधीन इत्यर्थः ॥ २ ॥

आत्मनो जन्मजरादिविक्रियाभावेन कूटस्थाद्वयस्वाभाव्यप्रति... श्रुतीः स्वरूपतोऽर्थतश्च पठति—

**अजोऽमरश्चैव तथाऽजरोऽमृतः स्वयंप्रभः सर्वगतोऽहम...**
**न कारणं कार्यमतीव निर्मलः सदैकतृप्तश्च ततो विमुक्त...**

अजोऽमर इति ॥ तथाच श्रुतयः 'अजो नित्यः शाश्वतोऽयं पु...' ... वा एष महाजन आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्मे'ति । 'अत्रा... स्वयंज्योतिः' 'तच्छुभ्रं ज्योतिषां ज्योतिः', 'नित्यं विभुं सर्वगतं ...' 'एको देवः' 'एकमेवाद्वितीय'मिति 'तदेतद्ब्रह्मापूर्वमनपरमनन्तर...' त्यादिश्रुत्यर्थमाह—न कारणं कार्यमिति । निर्मलो निरञ्जनः । ... परमं साम्यमुपैती'ति श्रुतेः । एकतृप्तः एकेन निजानन्देनैव तृप्त... 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' 'आनन्दरूपममृतं ...' इत्यादिश्रुतिभ्यः 'विमुक्तश्च विमुच्यत' इति श्रुतिमाश्रित्याह—... इति । यत एवंलक्षणस्ततो विमुक्त एव । सदेतिपदं सर्वत्रानुष... यदाचार्येणोक्तं मम स्वरूपं तत्तथैवेति शिष्योऽनुमन्यत ... त्यर्थः ॥ ३ ॥

ननु स्थानत्रयेऽन्यथान्यथा प्रथमानस्य कथमविक्रियात्म... आह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

पुप्तजाग्रत्स्वपतश्च दर्शनं न मेऽस्ति किंचित्स्वमिवेह मोहनम् ।
तश्च तेषां परतोऽप्यसत्त्वतस्तुरीय एवास्मि सदादृगद्वयः ॥४॥

सुपुप्तेति ॥ सुपुप्तश्चासौ जाग्रच्च सचासौ स्वपंश्च सुपुप्तजाग्रत्स्वपन् तस्य पुप्तजाग्रत्स्वपतो मे मम स्वमिवात्मीयमिवेह व्यवहारे किंचिद्दर्शनं नास्ति । मिव स्वरूपभूतमिवेति वा, किंतु मोहनमविवेकाविद्याध्यारोपितं जाग्रदा- दर्शनमिति योजना । तत्र हेतुमाह—स्वतश्चेति । तेषां जाग्रत्स्वप्नसुपुप्ति- र्शनानां जाग्रदाद्यवस्थारूपाणां वा स्वतश्च परतोऽप्यसत्त्वतोऽसत्त्वादित्यक्ष- योजना । नहि तेषां स्वतोऽन्यनिरपेक्षं सत्त्वं संभाव्यते चकारात्स्फुरणं च । गमापायित्वेन रज्जुसर्पवदारोपितत्वनिश्चयात् । तथा परतोऽपि न सत्त्वं फुरणं च संभाव्यते परं चैतन्यं स्यात् । नहि तेनात्मना सत्त्वादिकमेषां भवति, प्रत्यक्पराग्भावेन विरुद्धस्वभावयोस्तादात्म्यानुपपत्तेस्तत्कल्पना- श्च भ्रान्तिमात्रत्वादित्यर्थः । प्राज्ञस्तैजसो विश्व इत्येते तत्तदवस्थावत्त्वेन समाना न मम स्वरूपमिति भावः । तर्हि किंस्वरूप आत्मेति तदाह— रीय एवास्मीति । विश्वादित्रयापेक्षया परतो गम्यमानत्वाच्चतुर्थ इत्यर्थः । स्य लक्षणं—सदादृगिति । सर्वावस्थाद्रष्टेत्यर्थः । विश्वादीनां स्वस्वावस्थामा- दृष्टत्वादयं ततो व्यतिरिक्तः, स्थूलसूक्ष्मक्रमेण विविच्यान्वेषणदशायां श्वादिस्थानत्रयापोहेनावसीयमानत्वात्तुरीय इत्युच्यते न पुनर्वस्तुतस्तुरीय- मस्मीति द्योतयत्यद्वय इति । निर्विशेष एव सदाहमस्मीत्यर्थः ॥ ४ ॥

कथमात्मनो निर्विशेषत्वं शरीरादिसंबन्धस्य प्रत्यक्षत्वादित्यत आह—

रीरबुद्धीन्द्रियदुःखसंततेर्न मे न चाहं मम निर्विकारतः ।
सत्त्वहेतोश्च तथैव संततेरसत्त्वमस्याः स्वपतो हि दृश्यवत् ॥५॥

शरीरेति ॥ शरीरादिसंततेर्न मदात्मत्वं मदीयत्वं वा परमार्थतोऽस्ती- र्थः । तत्र हेतुः—मम निर्विकारत इति । नह्यविक्रियं वस्त्वागमापायिशरीरा- त्मना परिणमते संसृज्यते वा येन तत्स्वरूपता तद्धर्मता वा भवेदित्यर्थः । न्तरमाह—असत्त्वहेतोश्च तथैव संततेरिति । कुतोऽसत्त्वमित्यत आह— सत्त्वमस्या इति । स्वपतः स्वप्नावस्थायां यथा दृश्यं मिथ्या तथास्याः ततेर्दृश्यत्वादेवासत्त्वमित्यर्थः । हिशब्दः स्वप्नदृश्यस्य मिथ्यात्वप्रसिद्धिद्यो- नार्थः ॥ ५ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

शरीरादिसंततेर्दृश्यत्वेन चेन्मिथ्यात्वं तर्हि शुद्धस्याविक्रियस्यादेहिनोऽ
स्यान्मिथ्यात्वं किं न स्यादित्यत आह—

इदं तु सत्यं मम नास्ति विक्रिया विकारहेतुर्न हि मेऽद्वय
न पुण्यपापे न च मोक्षबन्धने न चास्ति वर्णाश्रमताऽश

इदं त्विति ॥ मम विक्रिया नास्ति। न च मे विकारहेतुरस्ति
पूर्वनिरूपितादद्वयात् द्वयाभावाद्धेतोः स्वतः परतो वा ममात्मनो
नास्तीति यदिदं तत्सत्यमित्यर्थः । तुशब्दः शङ्काव्यावृत्त्यर्थः। अ
दिना विक्रियाभावाद्युपलक्षितस्वरूपस्याभिप्रेतत्वात्तस्मिंश्च हेत्वसिद्ध
वकाश इत्यर्थः। कर्म वा तत्फलं वा तत्संसो वा कर्मादिसाधनं वा
हेतुर्भविष्यतीति कुतोऽद्वयत्वमित्याशङ्क्याह—न पुण्येति । पुण्
प्रतिज्ञायां हेतुः—अशरीरत इति । अशरीरत्वं तु पूर्वश्लोके प्रति
त्यर्थः ॥ ६ ॥

ननु यद्यपि शरीरोपादनत्वेन तद्धर्मकत्वेन चात्मनः शरीरव
थापि शरीरेणास्ति संबन्ध उपलभ्योपलम्भकभावलक्षण इति कश्चिद
त्याशङ्क्य, नैतावता सशरीरत्वेन कर्मादियोगितेत्यभिप्रेत्य पुण्यापु
न्धवैधुर्यमुक्तमुपपादयति—

अनादितो निर्गुणतो न कर्म मे फलं च तस्मात्परमोऽह
यथा नभः सर्वगतं न लिप्यते तथा ह्यहं देहगतोऽपि सूक्ष्म

अनादित इति ॥ यत्कर्म समवायि तदादिमदृष्टं यथा रथ
नच परमाणुमनसोरनेकान्तो मनस उत्पत्तिश्रवणात्परपरिकल्पित
ङ्गीकाराच्च। यथा यत्कर्म समवायि तत्सगुणं दृष्टम्। यथोक्तमेवा
तथाच सगुणत्वं सादित्वं चाव्यापकं प्रत्यगात्मनो व्यावर्तमान
क्रियावत्त्वं स्वव्याप्यमादाय निवर्तत इति । क्रियावत्त्वाभावात्तत्सा
द्यसंभव इति भावः । कर्म पुण्यादिलक्षणं फलं तत्साध्यं सुख
फलं च न मेऽस्तीत्यन्वयः । तस्मादहं परम उत्तमः संसारिभ्यो
अद्वयो निर्विशेषः क्रियावत्त्वाभावात्तत्साध्यपुण्याद्यसंभव इति वि
पपादयति—यथेति। देहगतो देहप्राप्तः। तत्रोपलभ्यमानोऽपीत्यर्थः

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देहतोऽमूर्तत्वादित्यर्थः । तथाचाह भगवान् 'अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः । शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते । सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते' इति ॥७॥

ननूपलब्ध्यधिष्ठानानां देहादीनां वैषम्यदर्शनात्तत्रोपलभ्यमानस्यात्मनोऽपि तत्कृतवैषम्यसंभवात्कुतः परमात्मत्वं परिपूर्णता चेत्याशङ्क्य अयं तारतम्यप्रतिभासोऽविद्याविलसितो न परमार्थत इत्याह—

सदा च भूतेषु समोऽहमीश्वरः क्षराक्षराभ्यां परमो ह्यथोत्तमः ।
परात्मतत्त्वश्च तथाद्वयोऽपि सन्विपर्ययेणाभिमतस्त्वविद्यया॥८॥

सदा चेति ॥ ईश्वर इत्यनेनोपाधिवश्यत्वाभावं सूचयति। अतो न मे देहादिकृतं वैषम्यमित्यर्थः। ईश्वर इत्युक्ते तस्येशितव्यापेक्षत्वात्सद्वयत्वशङ्का स्यादत आह—क्षराक्षराभ्यामिति । अथवेश्वरत्वमेव साधयति—क्षराक्षराभ्यामिति । हि यस्मात्क्षराक्षराभ्यां परमोऽथ तस्मादहमुत्तम इत्यन्वयः। क्षरति नश्यतीति क्षरः कार्यवर्गः न क्षरतीत्यक्षरं कारणं मायाशबलितं किंचिद्वस्तु ताभ्यां परमो व्यतिरिक्तः कार्यकारणादिभेदकल्पनाधिष्ठानभूत इत्यत उत्तमः । पुरुषोत्तम इत्यर्थः । यत उत्तमोऽतः परेषामात्मनां तत्त्वं स्वरूपमस्मिन्निति परमात्मतत्त्वश्च अहमेव सर्वात्मा चेत्यर्थः। एवंविधश्चेदात्मा कथं तर्हि तत्र विपरीतस्वरूपप्रतिभास इत्यत आह—तथाद्वयोऽपि सन्निति। उक्तोत्तरमेतत् । अविद्याविलसित एव विपर्यय इत्यर्थः। तथाच भगवतोक्तम् 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति ॥ ८ ॥

अविद्यया भावनया च कर्मभिर्विविक्त आत्माऽव्यवधिः सुनिर्मलः
दृगादिशक्तिप्रचितोऽहमद्वयः स्थितः स्वरूपे गगनं यथा चलम् ९

अविद्ययेति ॥ अविद्या मूलाज्ञानं भावना तत्कृतो देहाद्यभिमानः कर्माणि तत्पूर्वकाणि पुण्यपापलक्षणानि तैर्विविक्तस्तत्संस्पर्शशून्यः । कुतो

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

यस्मादव्यवधिर्व्यवधानं वस्त्वन्तरकृतोऽवच्छेदस्तद्रहितोऽव्यवधिः।। ...
शयः। चित्प्रकाशत्वाच्चदात्मेति श्रुतिस्मृतीतिहासपुराणन्यायसिद्धम्। ...
च जडाऽप्रकाशात्मिका। अतस्तयोर्विरुद्धस्वभावयोः परमार्थतः ...
दुर्घट एवेति स्थितेऽनवच्छिन्नचैतन्यमात्रं तावन्नाविद्याश्रय ...
तथासत्यणुमात्रस्यापि प्रकाशानुपपत्तिप्रसङ्गात्। नापि केनचिदवि...
गविशेषम्, अविद्याव्यतिरिक्तस्य तस्य कल्पनाया अनिबन्धनत्वात्। ...
दविद्यातिरिक्तव्यवधानाभावादव्यवधित्वे सति दिवान्धपरिकल्पित...
दात्मन्यविद्यादिकल्पनमिति। अतएव सुनिर्मलः सर्वाशक्ति...
इत्यर्थः। एवंविध आत्मनि कथं द्रष्टा श्रोता मन्ता बोद्धेत्यादिव्यव...
शङ्काऽविद्याव्यस्तान्तःकरणपरिणामरूपदृगादिशक्तिसंबन्धादेव ...
चयप्रतिभासो न परमार्थत इत्याह—दृगादीति। स्पष्टमन्यत्॥ ९॥

एवंविधात्मतत्त्वपरिज्ञानेसति कैवल्यं फलतीत्याह—

**अहं परं ब्रह्म विनिश्चयात्मदृङ् न जायते भूय इति श्रुते...**
**न चैव बीजे त्वसति प्रजायते फलं न जन्मास्ति ततो ह्यमो...**

अहं परं ब्रह्मेति॥ अहं परं ब्रह्मेति निश्चयेनात्मनि दृक् ज्ञा...
तथोक्तः स भूयः पुनर्न जायते शरीरवान्न भवति इति श्रुतेर्व...
इति शेषः। तथाच श्रुतिः 'स तु तत्पदमाप्नोति यस्माद्भूयो न ...
'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः', 'अथ सोऽ...
भवति', 'ब्रह्म वेद ब्रह्मैव भवती'ति च। श्रुतिसिद्धेर्थे युक्तिमप्या...
चेति। उक्तं सामान्यन्यायं प्रकृते योजयति—न जन्मास्तीति। हि...
मोहता प्रागुक्तवर्त्मना मोहराहित्यं ततो हेतोर्न जन्मास्ती...
जना। मोहपदवाच्याऽविद्यामूलत्वाज्जन्मादिविकारस्य तदभावेऽभा...
त्यर्थः॥ १०॥

मोहकार्यत्वात्संसारस्य मोहनिवृत्त्या निवृत्तिरेवेत्युक्तं तत्र कि...
मोहकार्यमित्यपेक्षायां तदाह—

**ममेदमित्थं च तथेदमीदृशं तथाहमेवं न परो न वान्यथा...**
**विमूढतैवं न जनस्य कल्पना सदा समे ब्रह्मणि चाद्वये ...**

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango...

ममेदमिति ॥ प्रथमं देहद्वयेऽहंकारः । ततस्तद्बाह्यार्थकल्पनमिदमिति । तत्र शोभनाद्यध्यास इत्थमिति । ततो ममेदमित्यादिकल्पना तथा परोऽप्येवं नैवमन्यथा वा नास्ति वा अस्ति वा इति विमूढता मम परस्य वा सुज्ञता व । तथाच इत्येवं जनस्य जन्मादियोगिनोऽनाद्यज्ञानतिरोहितात्मस्वभावस्य या एवंविधा कल्पना सा सदा समे ब्रह्मण्यद्वये शिवे परमानन्दरूपे न च । नास्त्येवेत्यर्थः ॥ ११ ॥

एवं विचित्रस्य संसारस्यात्मतत्त्वज्ञानेन तदज्ञाननिवृत्त्या निवृत्तिमुक्तां स्फुटयति—

**यदद्वयं ज्ञानमतीव निर्मलं महात्मनां तत्र न शोकमोहता ।**
**तयोरभावे न हि कर्म जन्म वा भवेदयं वेदविदां विनिश्चयः १२**

यदद्वयमिति ॥ अद्वयमद्वयात्माकारमतीव निर्मलं असंभावनाविपरीतभावनादिप्रतिबन्धरहितं यज्ज्ञानं तत्र तस्मिन्सति महात्मनां ब्रह्मभूतानां शोकमोहता संसारित्वं नास्त्येवेत्यर्थः । तथाच मन्त्रः 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति । तयोः शोकमोहयोरभावे तदुपलक्षितस्य तत्कारणस्याज्ञानस्य निवृत्तौ बीजाभावे फलाभावन्यायेन जन्मादि पुनर्नहि भवेदिति वेदार्थविदां विनिश्चय इत्यर्थः । तथाच श्रुतिः 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति ॥ १२ ॥

एवमुक्तस्यात्मविदः स्वरूपमाह—

**सुपुप्तवज्जाग्रति यो न पश्यति द्वयं तु पश्यन्नपि चाद्वयत्वतः ।**
**तथा च कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः**

सुपुप्तवदिति ॥ जाग्रति विश्वावस्थायां द्वयं द्वैतप्रपञ्चं प्राग्वासनावशात्पश्यन्नप्युल्लिखन्नपि विशेषतो न पश्यति । किंतु सुपुप्तवत्प्रविलीनप्रपञ्चप्रत्यगात्मस्वरूपेणैव पश्यतीति योजना । तत्र हेतुः—अद्वयत्वत इति । द्वैतस्य बाधितत्वादित्यर्थः । तथाच यथा पूर्वं स्नानशौचभिक्षाटनादि कुर्वन्नपि निष्क्रियो निर्विकारोऽकर्त्रात्मस्वभावाविर्भावाच्च एवंविधः स आत्मविद्विक्षेपदशायामप्यप्रच्युतात्मयाथात्म्यदर्शनत्वाद्ब्रह्मविदामुत्तमोऽयमेव नान्यः शास्त्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थज्ञोऽपि । यो व्यवहारकाले ज्ञातृत्वकर्तृत्वाद्यभिमानवानित्यर्थः । इति वेदान्तशास्त्रे विनिश्चयः ॥ १३ ॥

शास्त्रन्यायानुसारेण स्वानुभवं प्रदर्श्येदानीमस्मिन्दर्शने तस्य कृतकृत्यता भवतीति दर्शयन्परानुग्रहाय प्रकरणनिर्माणे प्र सूचयति—

**इतीदमुक्तं परमार्थदर्शनं मया हि वेदान्तविनिश्चितं परम्**
**विमुच्यतेऽस्मिन्यदि निश्चितो भवेन्न लिप्यते व्योम इवेह कर्म**

इतीदमुक्तमिति ॥ वेदान्तविनिश्चितमित्युक्तदर्शनस्य परमार्थ प्रमाणमुक्तम् । व्योम इवेति विसंधिर्वृत्तपूरणार्थः ॥ १४ ॥

इति दशमं दृशिस्वरूपपरमार्थदर्शनप्रकरणम् ॥ १० ॥

---

## ईक्षितृत्वप्रकरणम् ११

ब्रह्मात्मैक्यज्ञानमात्रनिष्ठो मुच्यत इत्युक्तं तन्नोपपद्यते कर्म न्मुक्तेः कर्मसहितज्ञानसाध्यत्वाद्वा । तथा ज्ञानस्य वेदान्तवि मुक्तं तदपि संदिग्धमनुमानादिनाप्युपपत्तेरितीमां शङ्कां परिहर्तुं प्र रमारभते—

**ईक्षितृत्वं स्वतःसिद्धं जन्तूनां च ततोऽन्यता ।**
**अज्ञानादित्यतोऽन्यत्वं सदसीति निवर्त्यते ॥ १ ॥**

ईक्षितृत्वमित्यादिना ॥ तत्रादौ ज्ञानादेव मुक्तिर्ज्ञानं च वे वाक्यादेव नानुमानादिनेत्येतत्साधयति—अन्यत्वं सदसीति निवर् त्वं तत्सच्छब्दलक्षितं ब्रह्मैवासि न संसारीति वाक्योपदेशेनैव स ब्रह्मणोऽन्यत्वं जीवस्य निवर्त्यत इत्यर्थः । संसारिणो जीवस्यासु तद्विपरीतब्रह्मत्वं संभाव्यत इत्यत आह—ईक्षितृत्वमिति । जन्तूनां प्राणिनां चिद्रूपत्वमेवेक्षितृत्वं तत्स्वतःसिद्धं स्वाभाविकं चकारः शङ्कानिवृत्त्यर्थः । कर्तृत्वभोक्तृत्वादेरपि स्वाभाविकत्वशङ्का

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

स्वरूपव्यभिचारादित्यर्थः । कुतो ज्ञानादेवान्यत्वनिवृत्तिरूपा मुक्तिरित्यत आह—अज्ञानादित्यत इति । इति यतोऽन्यतान्यत्वमज्ञाननिबन्धनं न परमार्थत इत्यर्थः । अज्ञानकल्पितत्वाद्ब्रह्मविपरीतरूपत्वस्य स्वतश्चिन्मात्रस्वभावत्वादज्ञाननिवृत्तिलक्षणत्वाच्च मोक्षस्य तस्य च तत्त्वज्ञानमात्रापेक्षणात् । ज्ञानस्य च यथोक्तवाक्यादेवोत्पत्तेर्न मानान्तरं साधनान्तरं चात्र मृग्यत इति भावः ॥ १ ॥

कर्मणो मोक्षहेतुत्वकल्पनं ज्ञानसहायत्वेन नोपपद्यते श्रुतियुक्तिविरोधादित्याह—

एतावद्ध्यमृतत्वं न किंचिदन्यत्सहायकम् ।
ज्ञानस्येति ब्रुवच्छास्त्रं सलिङ्गं कर्म बाधते ॥ २ ॥

एतावद्धीति ॥ 'एतावदरे खल्वमृतत्व'मित्येतदमृतत्वसाधनमात्मज्ञानमेवेत्येतावच्छब्देनावधारयन्ती श्रुतिः शास्त्रमुच्यते । तज्ज्ञानस्य किंचिदन्यन्न सहायभूतमस्तीति ब्रुवत्सलिङ्गं ससाधनं कर्म बाधत इति योजना । अद्वैतात्मज्ञानादूर्ध्वं कर्महेतुजात्याद्यभिमानाभावे कुतः कर्म यज्ज्ञानस्य मोक्षफले सहायभूतं भवेदिति भावः ॥ २ ॥

इदानीमीक्षितृत्वमित्यत्रोक्तं स्वाभाविकं चिद्रूपत्वं प्रपञ्चयन् ज्ञानिनः कर्म न घटत इत्येतदुपपादयति—

सर्वेषां मनसो वृत्तमविशेषेण पश्यतः ।
तस्य मे निर्विकारस्य विशेषः स्यात्कथंचन ॥ ३ ॥

सर्वेषामिति ॥ विशेषः कर्तृत्वादिलक्षणो विहितकर्मसाधनजात्याद्यभिमानलक्षणश्चेत्यर्थः । कथंचनेत्याक्षेपार्थः । न कथंचन मे विकारः स्यादित्यर्थः । कुत इत्यत आह—अविशेषेणेति । अभिमानशून्यतया केवलं साक्षिमात्रेण पश्यत इत्यर्थः ॥ ३ ॥

कथं मनोवृत्तं पश्यत्यविशेषेणात्मेत्यपेक्षायां दृष्टान्तपूर्वकं तदुपपादयंश्चिदेकरसत्वमात्मनो निगमयति—

मनोवृत्तं मनश्चैव स्वप्नवज्जाग्रतीक्षितुः ।
संप्रसादे द्वयासत्त्वाच्चिन्मात्रः सर्वगोऽव्ययः ॥ ४ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनोवृत्तमिति ॥ स्वप्नदशायां सवृत्तिकं मनएव पश्यतः बाह्यविषयाभावात्तथा जाग्रति जागरणदशायां मनोवृत्तं मनःप्रच तदाश्रयं पश्यतः कथं विशेषः स्यादिति पूर्वश्लोकेनान्वयः। जाग्र मपि विषयाकारवृत्तिमन्मनोव्यतिरेकेण नात्मना किमप्युपलभ्य भावः। तर्ह्येवंविधमनोदर्शनमेव स्वाभाविको विशेष इत्यत आह सादे इति। संप्रसादे सुषुप्तिदशायां द्वयस्य सवृत्तिकस्य मनसो तद्दर्शनमपि स्वाभाविकं 'नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्प श्रुतेः। तथाचात्मा चिन्मात्रः सर्वगोऽपरिच्छिन्नोऽव्ययो नित्य इ मित्यर्थः ॥ ४ ॥

ननु यद्येवं तदा बाह्याभ्यन्तरद्वैतस्याभाव एवेति युक्तं स्याच्च प्रत्यक्षादिप्रमाणविरोधाल्लौकिकवैदिकव्यवहारविलोपप्रसङ्गाच्चेति वे

स्वप्नः सत्यो यथाऽऽबोधाद्देहात्मत्वं तथैव च।
प्रत्यक्षादेः प्रमाणत्वं जाग्रत्स्यादात्मवेदनात् ॥ ५ ॥

स्वप्न इति ॥ यथा आबोधात्प्रबोधपर्यन्तं स्वप्नः सत्यो लौकि व्यवहारास्पदतयावभासते तथैव जाग्रज्जाग्रदवस्थायामपि देहात्म क्षादेः प्रमाणत्वं च सर्वव्यवहाराङ्गं स्यात्। कियत्पर्यन्तमित्यत आ त्मवेदनादिति। आ आत्मवेदनादिति पदच्छेदः। आत्मतत्त्वसा त्प्रागेव सर्वो व्यवहाराभाव इष्ट एवेति भावः ॥ ५ ॥

अव्यवहार्यस्वरूपमाविष्करोति—

व्योमवत्सर्वभूतस्थो भूतदोषैर्विवर्जितः।
साक्षी चेताऽगुणः शुद्धो ब्रह्मैवासीति केवलः ॥ ६ ॥

व्योमवदिति द्वाभ्याम् ॥ चेता चिद्रूपः। साक्षीति भूतदो हेतुः। व्योमवत्सर्वभूतस्थ इत्यसंगत्वमुक्तम्। सर्वभूतेष्वहमाकार व्यक्त्यपेक्षया सर्वभूतस्थ इत्युच्यते। एतच्च 'अहं मनुरभवं सूर्यश्च' वात्मस्वाभिनयाभिप्राय इति द्रष्टव्यम्। शुद्धोऽज्ञानरहितः केवलोऽगुण यरहितः ब्रह्मैव पूर्ण एवासीत्यर्थः ॥ ६ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केवलत्वं व्यनक्ति—

नामरूपक्रियाभ्योऽन्यो नित्यमुक्तस्वरूपवान् ।
अहमात्मा परं ब्रह्म चिन्मात्रोऽहं सदाद्वयः ॥ ७ ॥

नामरूपेति ॥ वाच्यवाचकतद्व्यापारात्मकप्रपञ्चविहीन इत्यर्थः । सुगमन्यत् ॥ ७ ॥

कथमद्वयत्वमात्मनः संगच्छते अहं ब्रह्मास्मीतिवदहं कर्तास्मीति चानुभवस्य प्रमाणमूलत्वादिति ज्ञानकर्मसमुच्चयवादिनो भेदाभेदमतानुसारिणस्तात्कुत्सयन्नद्वैतात्ममतं द्रढयति—

अहं ब्रह्मास्मि कर्ता च भोक्ता चास्मीति ये विदुः ।
ते नष्टा ज्ञानकर्मभ्यां नास्तिकाः स्युर्न संशयः ॥ ८ ॥

अहं ब्रह्मास्मीति ॥ विरुद्धार्थप्रतिपादकत्वायोगाच्छास्त्रस्य विरुद्धतत्त्वमवगच्छतां कर्मकाण्डाज्ज्ञानकाण्डाच्च बहिर्मुखत्वान्नास्तिकत्वमेव तेषां फलिष्यतीत्यर्थः ॥ ८ ॥

ननु निन्दामात्रेण कथमद्वैतैकमतसिद्धिस्तत्र प्रमाणस्यासंभवादित्यत आह—

धर्माधर्मफलैर्योग इष्टो दृष्टो यथात्मनः ।
शास्त्राद्ब्रह्मत्वमप्यस्य मोक्षो ज्ञानात्तथेष्यताम् ॥ ९ ॥

धर्माधर्मेति ॥ आत्मनो धर्माधर्मफलैः सुखदुःखादिरूपैर्योगः संबन्धः प्रमाणान्तरैरदृष्टोऽपि यथा शास्त्रादेव 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने'त्यादेरिष्टोऽङ्गीकृतः । शास्त्रार्थविद्भिरिति शेषः । तथास्यात्मनो ब्रह्मत्वं ज्ञानादेव मोक्षश्चेति 'ब्रह्म वेद ब्रह्मैव भवति' 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'त्यादिशास्त्रादिष्यताम् । तथाच भेदकर्मणोर्निन्दितयोः शास्त्रतात्पर्यविषयत्वायोगाच्छास्त्रानुसारिभिर्यथाशास्त्रमर्थः प्रतिपत्तव्य इति भावः ॥ ९ ॥

नन्वात्मनो धर्माधर्मफलयोगः शास्त्रोक्तो मानान्तरविरोधाभावात्तथैवेति युज्यते न तथात्मनो ब्रह्मत्वं प्रत्यक्षदृष्टकर्तृत्वादिविरोधादतः श्रुत्यनुभवयो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रविरोधाय भेदाभेदावादरणीयाविति चेन्मैवम्, कर्तृत्वादिप्रतिभास
च्छ्रुत्युक्ताद्वैतप्रतिपक्षत्वानुपपत्तेरिति सदृष्टान्तमाह—

या माहारजनाद्यास्ता वासनाः स्वप्नदर्शिभिः ।
अनुभूयन्त एवेह ततोऽन्यः केवलो दृशिः ॥ १० ॥

या माहारजनाद्या इति ॥ 'तस्य हैतस्य पुरुषस्य रूपं यथा
वास' इत्यारभ्य 'यथाऽसकृद्विद्युत'मित्यन्तेन श्रुत्युक्ता या वासना
दर्शिभिरनुभूयन्त एव यथेत्यक्षरयोजना । महारजनं हरिद्रा
वस्त्रादि माहारजनं स्वप्नदशायां जाग्रद्वासनावासितस्य मनसो वा
दूषितरसपूर्णनाडीष्वनुगतस्यादृष्टादिसमुद्बोधितानेकवासना तया
र्थाकारेण परिणममानस्य हरिद्रारञ्जितपटादिरूपसदृशतया
द्रष्टृदृश्यदर्शनतत्करणादिभावेन नित्यं स्वप्नद्रष्टोपलभ्यमानत्वात्
महाराजनादिसदृशवासनाभ्यो लिङ्गात्मसहिताभ्यो द्रष्टात्मा
विलक्षणो लक्ष्यते तथा कर्तृत्वादीनां दृश्यत्वादनात्मधर्मत्वमेवेति
वेह जाग्रदवस्थायामपि ततः कर्तृत्वादिधर्मकाल्लिङ्गादन्यः केव
दृशिरात्मेत्यर्थः ॥ १० ॥

आत्मनः स्वप्नावस्थायां दृश्यविलक्षणत्वेन प्रतीतिमेव दृष्टान्तं
यति—

कोशादिव विनिष्कृष्टः कार्यकारणवर्जितः ।
यथासिर्दृश्यते स्वप्ने तद्वद्बोद्धा स्वयंप्रभः ॥ ११ ॥

कोशादिवेति ॥ इवशब्दो यथाशब्दार्थे । असिरिवेति संबन्धः
शब्दो यथावदित्यर्थे । यथासिः खड्गः कोशात्पृथक्कृतः स्वरूपेण
देवं योद्धा आत्मा कार्यकारणविवर्जितः कार्यकारणाकारमनसो
रभूतः स्वप्ने यथावत् दृश्यते । दृश्यत इत्युक्ते विषयवद्दृश्यत्वा
मित्याशङ्क्य विशिनष्टि—स्वयंप्रभ इति । स्वमहिम्नैव प्रथते न
त्यर्थः । यद्वा कथमवगम्यते स्वप्ने कार्यकारणविवर्जित इति वीक्षा
पुरुषः स्वयंज्योति'रिति श्रुतिसामर्थ्यादित्याह—स्वयंप्रभ इति
प्रकाश इति श्रुत्या निर्णीत इत्यर्थः । उपाधेः पृथक्स्वरूपेणावभास

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

ष्टान्त इति न वैषम्यशङ्कावकाश इति द्रष्टव्यम् ॥ ११ ॥

आत्मनः कर्तृत्वादिप्रतिभासस्य स्वप्नप्रतिभासवन्मिथ्यात्वाच्छुद्ध एवात्मा ज्ञेयेति शास्त्रादविरोधेनैव प्रत्येतुं शक्यत्वान्न भेदाभेदकल्पनया मनः खेदनीयमिति सिद्धेऽर्थे सोपक्रमं वाक्यं प्रमाणमाह—

आपेषात्प्रतिबुद्धस्य ज्ञस्य स्वाभाविकं पदम् ।
उक्तं नेत्यादिवाक्येन कल्पितस्यापनेतृणा ॥ १२ ॥

आपेषादिति ॥ 'तं पाणिनापेषं बोधयांचकार स होत्तस्था'विति श्रुतौ पुसपुरुषो बृहत्पाण्डरवासः सोमराजन्नि'त्यादिप्राणनामभिरामन्त्रितो नोत्थितः पाणिना स्वापिष्यमाण उत्थित इति निर्धारितत्वेन प्राणेन्द्रियादिस्वरूपलिङ्गसंघातविलक्षणः स्थूलसंघातादप्यन्य एवात्मेति प्रतिपन्नम् । अतएव जडविलक्षणत्वाज्ज्ञानस्वभावः तस्याऽपेषत्वात्प्रतिबुद्धस्य ज्ञस्य त्वंपदार्थस्य स्वाभाविकं तत्त्वं परब्रह्मलक्षणमुक्तम् । केन । नेत्यादिवाक्येन । 'अथात आदेशो नेतिने' त्यारभ्य 'सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्य' मित्यन्तेन वाक्येनेत्यर्थः । किंविषयेण कल्पितस्याध्यस्तस्य मूर्तामूर्ततद्वासनाश्रयरूपस्यापनेतृणा प्रतिषेधकेन । नेतिनेतीति वीप्सया समस्तकारणकार्यात्मकोपाधिप्रतिषेधद्वाराखण्डे ब्रह्मणि पर्यवसितेनेत्यर्थः ॥ १२ ॥

नेतिनेत्यादिशास्त्रेण निषिध्यमानस्य कल्पितत्वं श्रुत्यैवोपपादितमित्याह—

महाराजादयो लोका मयि यद्वत्प्रकल्पिताः ।
स्वप्ने तद्वद्द्वयं विद्याद्रूपं वासनया सह ॥ १३ ॥

महाराजादय इति ॥ स्वप्ने स्वप्नावस्थायां महाराजादयो लोका यद्वन्मयि दृगात्मनि प्रकल्पितास्तद्वदेव वासनया लिङ्गाश्रितया सह द्वयं रूपं मूर्तं चैवामूर्तं च मयि कल्पितं विद्यात् । तथाच श्रुतिः 'यत्रैष एतत्सुप्तोऽभूद्य विज्ञानमयः पुरुष' इत्युपक्रम्य 'स यत्रैतत्स्वप्नमाचरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छती'ति । शब्देन महाराजत्वादेः स्वप्नदृश्यस्याभासतां मध्ये निर्दिश्य 'एवमेवैष प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इत्युपसंहरन्ती शरीर-

उ. सा. ९

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

मध्य एव प्राणशब्दवाच्यलिङ्गोपाधिमहाराजाद्यात्मतया गृहीत्वा वहरतीति दर्शयति। अतो न स्वप्नोपलब्धं परमार्थमित्यर्थः। नाश्रयलिङ्गशरीरसहितस्य मूर्तामूर्तरूपस्थूलस्यापि दृगात्मनि कल्पित्वादुपपन्नमेवेति तात्पर्यार्थः ॥ १३ ॥

स्वप्नप्रपञ्चवज्जाग्रत्प्रपञ्चस्यापि प्रत्यगात्मनि कल्पितत्वे सिद्धे प्रत्यज्ञस्य कर्मासंभवः सिद्ध इत्याह—

देहलिङ्गात्मना कार्या वासनारूपिणा क्रियाः।
नेतिनेत्यात्मरूपत्वान्न मे कार्या क्रिया क्वचित् ॥ १४ ॥

देहलिङ्गेति ॥ क्रियाः कर्माणि देहलिङ्गात्मना स्थूलसूक्ष्म तदभिमानेन तदात्मतामापन्नेनात्मना कार्या अनुष्ठेयाः न पुन तदभिमानहीनेन। असंभवादित्यर्थः। किंलक्षणेन—वासनारूपि रूपयितुं संचेतुं शीलमस्यास्तीति वासनारूपी तेन। पुनःपुनः कर्म मित्तेनाविच्छिन्नेनेत्यर्थः। इदानीं मे मम नेतिनेत्यादिनोक्तात्मस्व द्वयाभिमानाभावात्क्वचित्स्वप्ने वा जागरे वा न क्रियाः कार्याः स्वभावतो विधितो वेत्यर्थः ॥ १४ ॥

अज्ञानविलसितदेहाभिमानादेव कर्मेति तस्याज्ञानमूलत्वे सिद्धे मोक्षाशा कर्तव्येत्याह—

न ततोऽमृतताशास्ति कर्मणोऽज्ञानहेतुतः।
मोक्षस्य ज्ञानहेतुत्वान्न तदन्यदपेक्षते ॥ १५ ॥

न तत इति ॥ ततस्तस्मात्कर्मणो हेतोरमृतताया मोक्षभावस्या सनं नास्ति। कुतः। अज्ञानहेतुतोऽज्ञानहेतुकत्वात्। अविवेकपूर्वक इत्यर्थः। जडयोरज्ञानकर्मणोर्विरोधाभावान्नाज्ञाननिवृत्तिरूपे मोक्षे कार्या। ब्रह्मात्मनावस्थानरूपस्य च परमानन्दाविर्भावलक्षण चतुर्विधक्रियाफलविलक्षणत्वान्न तत्रापि कर्मापेक्षेति भावः। कर्म मोक्षहेतुत्वाभावेऽपि मोक्षहेतुज्ञानसहायतया तद्धेतुर्भविष्यतीत्या निवृत्तौ ज्ञानमात्रस्य समर्थत्वान्न तत्र कर्मसहायतापेक्षेति नापि स्वतःसिद्धत्वादित्यभिप्रेत्याह—मोक्षस्येति ॥ १५ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

यदि कर्मसाध्यममृतत्वं स्यात्तर्हि स्वर्गादिवत्कृष्यादिफलवच्चानित्यं सभयं च स्यात्तच्चानिष्टम् 'अभयं प्रतिष्ठां विन्दत' इत्यभयरूपत्वश्रुतिविरोधात् अतोऽन्यदार्त'मिति मोक्षस्वरूपादन्यस्यार्तत्वोक्त्या तस्यानार्तत्वपर्यवसानवचनविरोधाच्चेत्यभिप्रेत्याह—

अमृतं चाभयं नार्तं नेतीत्यात्मा प्रियो मम ।
विपरीतमतोऽन्यद्यस्त्यजेत्तत्सक्रियं ततः ॥ १६ ॥

अमृतं चेति ॥ चशब्दस्त्वर्थः । अमृतं त्वभयं नार्तमित्यर्थः । यद्यपि ब्रह्मस्वरूपममृतत्वमुक्तलक्षणमकर्मसाध्यं तथापि जीवोऽन्यस्तत्कर्मणैव लभेत्याशङ्क्य, जीवस्य ब्रह्मणोऽन्यत्वाभावान्नैवमित्याह—नेतीति । यः प्रियो ाथादिः प्रीत्यास्पदतया विभाव्यते स ममात्मा स्वरूपभूतः । 'अनेन जीवेनात्मनानुप्रविश्ये'त्यादिश्रुतेः । स च नेतीत्यपोढाशेषविशेष इति मद्रूपत्वान्न तस्य कर्मप्राप्यममृतत्वमित्यर्थः । अत उक्तादात्मस्वभावाद्यदन्यन्नेदबुद्ध्या गृह्यमाणं विपरीतं दृश्यमनात्मभूतं तत्क्रियासहितं त्यजेत्तदभिमानं परित्यजेत् । ततस्तस्मात्कारणादित्युपसंहारार्थः । नचायमात्मज्ञस्य विधिस्तस्यावेनियोज्यत्वात्तंप्रत्यनुवादमात्रं साधकस्य पुनरुपयुज्यते नियोग इतीह विधित्ययनिर्देश इति द्रष्टव्यम् ॥ १६ ॥

इति एकादशमीक्षितृत्वप्रकरणम् ॥ ११ ॥

---

## प्रकाशप्रकरणम् १२

ननु यदि भोक्ता प्रियशब्दोक्तेर्निर्विशेषब्रह्मस्वरूप एव तर्हि सर्वो लोकोऽमहमित्यात्मानमनुभवन्नपि ब्रह्माहमिति कथं नानुभवतीत्याशङ्कायां पदार्थतत्त्वपरिशोधनाभावापराधादेवेति त्वंपदार्थशोधनप्रधानं प्रकरणमारभमाणः ाभासान्तःकरणाविवेकाद्याथात्म्येन स्वात्मानं न प्रत्येति सर्वो लोक इति थमं सदृष्टान्तमाह—

प्रकाशस्थं यथा देहं सालोकमभिमन्यते ।
द्रष्ट्राभासं तथा चित्तं द्रष्टाहमिति मन्यते ॥ १ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

प्रकाशस्थमिति ॥ यथायं जनः स्फीतालोकमध्यगतं स्थूलं विलक्षणमपि तेनालोकेन व्याप्तत्वात्सालोकमालोकविशिष्टमभिमन्य द्रष्ट्राभासं चित्तं साक्षिचैतन्यव्याप्तमन्तःकरणं सचेतनं मन्यमानो साभासं चित्तमेवात्मानं मन्यते न तद्याथात्म्यं जानातीत्यर्थः । अयं यथा विशेषेण सर्वत्र प्रसृतमालोकं देहसंपर्कात्तदाकाराकारितमिव देहाभेदेन पश्यति लोकस्तथा सदा स्वरूपेणानवच्छिन्नप्रकाशस्वभावो न्तःकरणसंपर्कात्तदाकाराकारित्त इव भासत इत्यहं कर्ता द्रष्टा भोक्ता करणस्वभावविशिष्टमेवात्मानमनुभवति लोको न शुद्धमिति ॥ १ ॥

एवमात्मनः साभासान्तःकरणाविवेकमुक्त्वा तद्द्वारेण देहपर्यन्त दर्शयन्नात्माप्रतिपत्तिमेव लोकस्य द्रढयति—

यदेव दृश्यते लोके तेनाभिन्नत्वमात्मनः ।
प्रपद्यते ततो मूढस्तेनात्मानं न विन्दति ॥ २ ॥

यदेवेति ॥ यदेव साभासचित्ताविविक्ततयाहंकारास्पदं प्राणे देहपर्यन्तं दृश्यतेऽनुभूयते लोके । व्यवहारभूमाविति यावत् । तं देहान्तेनात्मनोऽभिन्नत्वं तादात्म्यं प्रपद्यते । चित्तादिदेहपर्यन्तं वि तीतेस्तदविवेकात्संघातमेवात्मानं मन्यत इत्यर्थः । यतएवं तत देहादेरात्मनश्चान्योन्यमध्यासकर्ता संस्तेन मौढ्येन हेतुनात्मानं विन्दति । न प्रत्येतीत्यर्थः ॥ २ ॥

उक्तमर्थं दृष्टान्तेन साधयति—

दशमस्य नवात्मत्वप्रतिपत्तिवदात्मनः ।
दृश्येषु तद्वदेवायं मूढो लोको न चान्यथा ॥ ३ ॥

दशमस्येति ॥ दश हि माणवकाः क्वचिन्नदीं तीर्त्वा पारं गणयामासुः कति वयं स्म इति । तत्र गणयिता स्वात्मानं गणयतिस्मेति प्रसिद्धिः । तत्र यद्वद्यथा दशमस्यात्मनो माणवकस्य रविवेकान्नवात्मत्वप्रतिपत्तिः, नवभ्योऽन्यमात्मानं न विन्दति । दशमो नास्तीति भ्रान्तिरुपलभ्यत इत्यर्थः । तद्वत्तथैवायं लोको

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्येष्वेवात्मतादात्म्यप्रतिपत्त्या मूढः शास्त्राचार्योपदेशेन हीनः स्वात्मानमन्यथा प्रतिपद्यते। नचान्यथा वैपरीत्येन बुद्ध्याद्यपोहेन ब्रह्मास्मीति स्वरूपयाथात्म्यं न वेत्तीत्यर्थः ॥ ३ ॥

ननु प्रत्यक्षानुभवस्य श्रुतेश्चाविरोधाय प्रत्यगात्मन एव कर्तृत्वादिधर्मवत्त्वं ब्रह्मरूपत्वं चास्तु किमविवेककल्पनया मूढत्वमाश्रीयत इत्यत आह—

त्वं कुरु त्वं तदेवेति प्रत्ययावेककालिकौ ।
एकनीडौ कथं स्यातां विरुद्धौ न्यायतो वद ॥ ४ ॥

त्वं कुर्विति ॥ यद्वा शास्त्राचार्योपदेशहीनो बुद्ध्यादिवैपरीत्येनात्मयाथात्म्यं न जानातीति तस्य पदार्थविवेकाभावान्मोक्षो नोपपद्यत इति सूचितम्। तत्र किं पदार्थविवेकेन कृत्यं शास्त्राद्ब्रह्मत्वे प्रतिपन्ने सति ब्रह्माहमस्मीति प्रसंख्यानादेवात्मयाथात्म्यापरोक्ष्यान्मोक्ष उपपद्यत इति प्रसंख्यानविध्यवसरमाशङ्क्य परिहरति—त्वं कुर्विति। त्वं तदेवेति। एकनीडौ एकस्मिन्विषये विरुद्धौ प्रत्ययौ एककालिकावेकावस्थाभाजौ कथं स्यातामिति न्यायतो युक्तितो वदेत्यन्वयः। तथा चैकस्मिन्नात्मनि कुरु तदेव त्वमिति कर्तृत्वाकर्तृत्वप्रकारकविरुद्धबुद्ध्योः समासमयोर्मध्ये तादृशशीतोष्णबुद्धिवदवश्यमन्यतरबुद्ध्यान्यतरबाध एव युक्तो नोभयोः प्रामाण्यमित्यभिप्रायः ॥ ४ ॥

तर्हि दुःखित्वादिभानेन प्रत्यक्षानुभवेन शाब्दस्य ज्ञानस्य बाध्यत्वोपपत्तेस्तदीयस्थैर्याय प्रसंख्यानविधिः स्यादत आह—

देहाभिमानिनो दुःखं नादेहस्य स्वभावतः ।
स्वापवत्तत्प्रहाणाय तत्त्वमित्युच्यते दृशेः ॥ ५ ॥

देहेति ॥ यदि दुःखित्वादिकमात्मनः स्वाभाविकं स्यात्तदा तत्र ज्ञानाभ्यासशतेनापि निवर्तयितुं शक्यते ज्ञानस्याज्ञानमात्रविरोधित्वात्। तथाच तद्विधिप्रकारोऽनर्थकः। यदा त्वविद्याप्रयुक्तदेहाद्यभिमाननिबन्धनं दुःखित्वादि तदा विद्यानिवृत्त्यैव तन्निवृत्तेरविद्यानिवृत्तेश्च ज्ञानमात्रायत्तत्वान्न कर्मविध्यवकाश इति श्लोकतात्पर्यार्थः। नादेहस्य देहाभिमानरहितस्येत्यर्थः। तत्र हेतुः स्वभावत इति। अदेहत्वमात्मनः स्वाभाविकं रूपमित्यत्र नियामकमाह—स्वापवदिति। यद्वा नादेहस्येत्यनेन देहाभिमानव्यतिरेकेण न

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुःखमस्तीत्युक्तं व्यतिरेकमाह—स्वापवदिति। सुषुप्ताविवेत्यर्थः। तदर्थं स्तत्प्रहाणाय समूलाभिमाननिवृत्तये तत्त्वमिति श्रुत्योच्यते। ऐक्यमात्र न कर्मेत्यक्षरार्थः ॥ ५ ॥

तत्त्वमस्यादिवाक्याद्देहादिव्यतिरिक्तमात्मानमवगच्छतोऽपि दुःखादि प्रतीतेरनुवृत्तेर्नाभिमाननिबन्धनं दुःखमित्याशङ्क्य तद्विशिष्टात्मदर्शन स्वान्मैवमित्याह—

दृशेश्छाया यदारूढा मुखच्छायेन दर्शने ।
पश्यंस्तं प्रत्ययं योगी दृष्ट आत्मेति मन्यते ॥ ६ ॥

दृशेरिति ॥ दर्शयतीति दर्शनं दर्पणादि तस्मिन्मुखच्छाया मुखप्रतिबिम्बरूपा यथा आरूढा भवति तद्वद्दृशेः प्रत्यगात्मनो भासो यदारूढा यस्मिन्संक्रान्तेव भवति तं प्रत्ययं प्रत्याययतीति कारस्तं साभासमन्तःकरणं पश्यन्नहमित्युपलभ्यमानो योगी दियोगवान्पुमानात्मा दृष्ट इति मन्यते। यथा कश्चिद्दर्पणमुख कायथादृष्टं दर्पणदोषमालिन्याल्पत्वादिविशिष्टमेव स्वमुखं मन्य महाजन उपाधिदोषैरास्कन्दितमिव तदविवेकादात्मानं पश्य दुःखीत्यभिमन्यत इत्यर्थः। तथाचाहमिति दर्शनस्य कल्पित दुक्तं दुःखित्वस्याविवेकाभिमाननिबन्धनत्वमिति न सम्यगात्मानं दवगच्छतो दुःखित्वाद्यनुवृत्तिरुपपद्यते, कदाचित्प्रतिभासस्य बाधि मात्रत्वादिति भावः ॥ ६ ॥

यदि साभासाहंकारमात्मानं पश्यन्नसम्यग्दर्शी कस्तर्हि सम्य क्षायामाह—

तं च मूढं च यद्यन्यं प्रत्ययं वेत्ति नो दृशेः ।
स एव योगिनां श्रेष्ठो नेतरः स्यान्न संशयः ॥ ७ ॥

तं चेति ॥ तमुपाधिभूतं प्रत्ययमहंकारं मूढं च मोहात्मक चोपाधिगतमाभासं दुःखादिकं वा यदि वेत्ति साक्ष्यमेवेदं सर्व स्वेनैव जानाति न दृशेरात्मनः साक्षिणः संबन्धीत्येवं न वेत्ति मतिः स एव योगिनां युज्यन्तेऽनेनेति योगिनस्तेषां श्रेष्ठः प्रियतमः

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

इत्यर्थः । नेतरः पूर्वोक्तसाहंकारात्मदर्शी । न संशयः संशयोऽत्र न कर्तव्यः । 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यती'ति भगवद्वचनादित्यर्थः ॥ ७ ॥

सर्वस्य लोकस्यात्मत्वेन भासमानोऽप्यहंकारश्चेदनात्मत्वेन त्यज्यते तदा दुःखादन्यस्य त्वंपदार्थस्यादर्शनात्तत्त्वमस्यादिवाक्यस्य निरालम्बनत्वापत्तिरित्याशङ्क्याहंकारादिविविक्तस्य त्वमर्थस्य श्रुत्यैवोपपादितत्वान्मैवमित्याह—

विज्ञातेर्यस्तु विज्ञाता स त्वमित्युच्यते यतः ।
स स्यादनुभवस्तस्य ततोऽन्योऽनुभवो मृषा ॥ ८ ॥

विज्ञातेरिति ॥ 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते, विज्ञातेर्न विज्ञातारं विजानीया' इति श्रुतौ पञ्चम्यन्तशब्दनिर्दिष्टाया बुद्धिवृत्तिरूपाया विज्ञातेरनित्यायाः विज्ञातारं नित्यविज्ञप्तिरूपेण ज्ञातारं त्वं न विजानीया इति । यस्तु विज्ञातेर्विज्ञातृरूपो विषयभूतः सर्वसाक्षी प्रतिपन्नः स सर्वावभासक एव त्वमिति त्वंशब्देन तत्त्वमसिवाक्ये उच्यते नाहंकारात्मतया । यतो यस्मात्ततस्तमवलम्ब्य तत्त्वमस्यादिवाक्यप्रवृत्तेर्न निरालम्बनत्वशङ्कावकाश इति शेषः । तस्य त्वंपदार्थस्य स एव श्रुत्युक्तप्रकारोऽनुभवः सम्यगनुभवः स्यात्ततोऽन्यो बुद्धितत्स्थाभासविशिष्टरूपतयानुभवो मृषा मिथ्याध्यास इत्यर्थः ॥ ८ ॥

नन्वविषयश्चेदात्मा श्रुत्या निवेद्यते कथं तर्हि तस्यानुभवोऽनुभवरूपत्वादस्य नानुभवापेक्षेतिचेन्न । अन्यत्रानुभाव्यानुभवयोर्भेददर्शनादित्याशङ्क्य जडाजडत्वाभ्यां विशेषोपपत्तेर्मैवमित्याह—

दृशिरूपे सदानित्ये दर्शनादर्शने मयि ।
कथं स्यातां ततो नान्य इष्यतेऽनुभवस्ततः ॥ ९ ॥

दृशिरूपे इति ॥ यस्य स्वसत्तायां प्रकाशाव्यभिचारस्तस्यागन्तुकज्ञानसाक्षित्वात्स्वान्यज्ञानागमापायनिबन्धने दर्शनादर्शने स्यातां, सदा दृशिरूपे ज्ञानस्वरूपे मयि सत्ये नित्येऽन्यनिरपेक्षसत्ताके । स्वरूपतो ज्ञानतश्च नित्ये इति यावत् । दर्शनादर्शने कथं स्याताम् । न कथमपीत्यर्थः । ततस्तस्मात्कारणात्ततः स्वरूपादन्योऽनुभवो नेष्यत इति योजना ॥ ९ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

उक्तमेव नित्यदृग्रूपत्वमात्मनः स्फुटयति—

यत्स्थस्तापो रवेर्देहे दृशेः स विषयो यथा।
सत्त्वस्थस्तद्वदेवेह दृशेः स विषयस्तथा॥ १०॥

यत्स्थस्ताप इति॥ यद्वा सुखदुःखादियुक्तत्वेनात्मनो भाव
दृशिमात्रत्वमित्याशङ्क्याह—यत्स्थस्ताप इति। रवेस्तापो देहे भवन्
देशस्थितो भवति स तापो यथा स्वाश्रयप्रदेशविशिष्ट एव दृशेरा
यस्तद्वदेवेह व्यवहारकाले सत्त्वस्थोऽन्तःकरणस्थ एव भवति सु
रूपस्तापस्तथा स्वाश्रयान्तःकरणसहित एव दृशेर्विषयो न दृग
इत्यर्थः। अतस्तापस्यान्यधर्मत्वेनैवानुभवादात्मा नित्यः चैतन्य
एवेति भावः। अथवा देहे भवन् रवेस्तापो यत्स्थो यस्मिन्देहदे
देह एव तापविशिष्टस्तसोऽहमिति मन्यमानस्य दृशेर्लौकिकस्या
यथा तद्वदेव विषयसंपर्कजनितः सुखदुःखादितापः सत्त्वस्थोऽ
इति सोऽन्तःकरणाख्यः सुखादितापविशिष्टस्तथैव दृशेः साक्षि
इत्यर्थः। तथाच सुख्यहमित्याद्यभिमानस्य देहतापेन तदध्यासात
भिमानवत्स्वदृश्यान्तःकरणाध्यासनिबन्धनत्वाद्विवेकिनो दुःखादि
कदापि न भासत इति भावः॥ १०॥

आत्मनः सुखादियुक्तान्तःकरणसंबन्धाभावं स्फुटयन्निर्विक
संधत्ते—

प्रतिषिद्धे दृगंशोऽज्ञः खमिवैकरसोऽद्वयः।
नित्यमुक्तः सदा शुद्धः सोऽहं ब्रह्मास्मि केवलः॥ ११॥

प्रतिषिद्धे इति॥ स्पष्टार्थः॥ ११॥

यस्मादेवं विचार्यमाणेऽहं ब्रह्मैव तस्मान्न साक्षिरूपस्य भ
स्वरूपभेदोऽस्तीत्यद्वयात्मतत्त्वमाविष्करोति—

विज्ञातुर्नैव विज्ञाता परोऽन्यः संभवत्यतः।
विज्ञाताहं परो मुक्तः सर्वभूतेषु सर्वदा॥ १२॥

विज्ञातुरिति॥ सर्वविज्ञातृरूपादात्मनोऽन्यो यतः परो

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

वेज्ञाता नैव संभवति, अतोऽहमेव परो विज्ञाता सर्वभूतेषु स्थावरजंगमेषु सदा सर्वदा एवं सर्वविज्ञेयतद्धर्मरहितत्वान्मुक्तश्चेत्यर्थः ॥ १२ ॥

एवं श्रुत्युपदेशात्सर्वत्र सर्वदाद्वयमात्मानमनुसंदधानस्यापि ब्रह्मविदहमस्मीत्यभिमानात्स्यात्सविशेषत्वमित्यत आह—

यो वेदालुप्तदृष्टित्वमात्मनोऽकर्तृतां तथा ।
ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः ॥ १३ ॥

यो वेदेति ॥ ब्रह्मवित्त्वं मुक्त्वा ब्रह्मविदहमस्मीत्यभिमानं त्यक्त्वा यथा श्रुत्युक्तं तथात्मनोऽलुप्तचिन्मात्रतया द्रष्टृत्वं तथाऽकर्तृतां च वेद स आत्मज्ञः आत्मतत्त्वब्रह्मविन्न चेतरो योऽभिमानलेशमपि भजत इत्यर्थः ॥ १३ ॥

ननु ब्रह्मात्मज्ञानस्यात्मनि विद्यमानत्वात्कथं ब्रह्मवित्त्वाभिमानत्यागोऽतोऽत्यन्तं निर्विशेष आत्मेत्यत आह—

ज्ञातैवाहमविज्ञेयः शुद्धो मुक्तः सदेत्यपि ।
विवेकी प्रत्ययो बुद्धेर्दृश्यत्वान्नाशवान्यतः ॥ १४ ॥

ज्ञातैवेति ॥ ज्ञातैवाहमित्यादिरूपो यो विवेकी विवेकवान् । विविक्तात्मनिष्ठ इति यावत् । प्रत्ययो बुद्धेर्बोधेद्धो यो वृत्तिरूपः स दृश्यत्वात्साक्षिसाक्ष्यत्वान्नश्यत्येव । यतो यस्मात्तस्मान्नास्ति ब्रह्मविदोऽभिमानलेशस्याप्यवकाश इत्यर्थः । यथा कतकबीजं रजःकलुषिते जले प्रक्षिप्तं जलगतसकलरजो विलापयत्स्वयमपि विलीयमानं सलिलमनाविलं करोति तथा यथोक्तविवेकबुद्धिवृत्तिरपि परे प्रत्यगात्मनि संसिद्धा तद्गतसकलविशेषमुन्मूलयन्ती स्वयमप्युन्मूलिता प्रत्यगात्मानं निरस्तसमस्तविशेषमनाविलमापादयतीति भावः ॥ १४ ॥

नन्वात्मचैतन्यप्रतिभासोऽपि नाशवानात्मप्रकाशत्वात्प्रकृतबुद्धिप्रत्ययवदिति चेन्मैवम्, कारकाधीनात्मलाभत्वस्योपाधित्वादित्याह—

अलुप्ता त्वात्मनो दृष्टिर्नोत्पाद्या कारकैर्यतः ।
दृश्यया चान्यया दृष्ट्या जन्यतायाः प्रकल्पिता ॥ १५ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अलुप्तेति ॥ उपाधेः साधनव्यापकत्वमाशङ्क्य प्रत्याह—यत अस्या आत्मस्वरूपाया दृष्टेर्जन्यता तु दृश्ययान्यया बुद्धिवृत्तिरूपया दृष्टेर्विशेषाकाराभिव्यक्त्युपाधिभूतया प्रकल्पिता आरोपिता घ घटाकाशजन्मवदिति नास्त्यतः साधनव्यापकत्वमित्यर्थः ॥ १५ ॥

तदेवमात्मन्यव्यभिचाराच्चित्प्रकाशस्य नित्यत्वाद्यो वेदानुसार श्रोक्तं नित्यदृष्टिरूपत्वमुपपाद्याकर्तृतां तथेत्युक्तं निर्विकारत्वमुपपाद

देहात्मबुद्ध्यपेक्षत्वादात्मनः कर्तृता मृषा ।
नैव किंचित्करोमीति सत्या बुद्धिः प्रमाणजा ॥ १६

देहात्मबुद्धीति द्वाभ्याम् ॥ देहात्मबुद्धिर्मिथ्याबुद्धिस्तत्पूर्व त्वादिरात्मनो मृषा । नैव किंचित्करोमीत्यकर्त्रात्मबुद्धिः 'निष्कलं शान्त'मित्यादिप्रमाणजा अतः सत्या । देहात्मबुद्धेरप्रमाणजाया त्यर्थः ॥ १६ ॥

इतोऽपि कर्तृत्वमात्मनोऽपरमार्थमित्याह—

कर्तृत्वं कारकापेक्षमकर्तृत्वं स्वभावतः ।
कर्ता भोक्तेति विज्ञानं मृषैवेति सुनिश्चितम् ॥ १७

कर्तृत्वं कारकापेक्षमिति ॥ असङ्गे निरवयवे आत्मनि कार परमार्थतोऽनुपपत्तेरकर्तृत्वस्य स्वाभाविकत्वात्कर्ता भोक्तात्मेति विज्ञा न परमार्थ इति सुनिश्चितम् । नित्यनिर्मल एवात्मेत्यर्थः ॥ १७ ॥

तदेवं परिशोधितपदार्थतत्त्वस्य वाक्यादेवाहं ब्रह्मास्मीति विज्ञाने जाते सति नियोज्योऽहमिति बुद्धेरुन्मूलितत्वान्न प्रसंख्यानवि इत्याह—

एवं शास्त्रानुमानाभ्यां स्वरूपेऽवगते सति ।
नियोज्योऽहमिति ह्येषा सत्या बुद्धिः कथं भवेद् ॥

एवं शास्त्रानुमानाभ्यामिति ॥ शास्त्रं 'विज्ञातेर्यस्तु विज्ञा त्वमित्युच्यते यत' इत्यत्र दर्शितं, 'यस्यस्तापो रवेर्देह' इत्यत्रोक्त ताभ्यामित्यर्थः ॥ १८ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

ब्रह्मविदो नियोज्यत्वादिबुद्धिर्नैव भवतीत्यत्र निर्विकारत्वादिकं हेतुं वदन् प्रकरणार्थमुपसंहरति—

यथा सर्वान्तरं व्योम व्योम्नोऽप्यभ्यन्तरो ह्यहम् ।
निर्विकारोऽचलः शुद्धोऽजरो मुक्तः सदाद्वयः ॥ १९ ॥

यथा सर्वान्तरमिति ॥ स्पष्टम् ॥ १९ ॥

इति द्वादशं प्रकाशप्रकरणम् ॥ १२ ॥

---

## अचाक्षुष्वप्रकरणम् १३

तदेवं पदार्थतत्त्वपरिचयाभावादेव वाक्यार्थाप्रतिपत्तिर्जनस्येति तत्परिचयमात्रादेव वाक्याद्वाक्यार्थयाथात्म्यावभाससंभवे प्रसंख्यानादिविधिरनर्थोऽनुपपन्नश्चेत्युक्तम्, इदानीं पूर्वप्रकरणान्ते 'निर्विकारोऽचलः शुद्ध' इति युक्तमात्मनः शुद्धत्वमचलत्वं च तत्स्फुटीकर्तुं प्रकरणान्तरं प्रस्तौति—

अचक्षुष्ट्वान्न दृष्टिर्मे तथाऽश्रोत्रस्य का श्रुतिः ।
अवाक्त्वान्न तु वक्तिः स्यादमनस्त्वान्मतिः कुतः ॥ १ ॥

अचक्षुष्ट्वादिति ॥ दृष्टिशब्देन चक्षुरिन्द्रियद्वारकबुद्धिवृत्तिर्बहिः प्रसृता रूपादिविषयोपरञ्जिता जानामिक्रियात्मिकोच्यते सा दृष्टिर्न मेऽस्ति । मद्विकारतया मद्धर्मभूता सा न भवतीत्यर्थः । तत्र हेतुरचक्षुष्ट्वादिति । चक्षुर्हि देहदेशाश्रितं भौतिकं करणं न मदाश्रितमित्यन्वयव्यतिरेकाभ्यां निश्चितमिति हेत्वसिद्धिशङ्का । एवं का श्रुतिरित्यादिषु योज्यम् । तथाच तत्तदिन्द्रियद्वारकबुद्धिवृत्तिरूपदृष्ट्यादि क्रियाहीनत्वात्सिद्धमात्मनोऽचलत्वं चेति भावः ॥१॥

तथा कर्तृत्वज्ञातृत्वविकारहेतुप्राणबुद्ध्योरभावादपि शुद्ध इत्याह—

अप्राणस्य न कर्मास्ति बुद्ध्यभावे न वेदिता ।
विद्याविद्ये ततो न स्तश्चिन्मात्रज्योतिषो मम ॥ २ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अप्राणस्येति ॥ चिन्मात्रज्योतिषः सदा प्रकाशमानविदेकात्म विद्ये ज्ञानतदभावौ ज्ञानक्रिये वा न स्तस्तयोरपि बुध्यवस्थाविशेष नश्च बुध्यभावादिति सिद्धा शुद्धतेत्यर्थः ॥ २ ॥

उक्तधर्मजातस्यात्मन्यभावेन शुध्यादिसिद्धावशरीरत्वमेव हेतुं चिन्मात्रज्योतिःस्वरूपं विशेषणैर्विशदयति—

नित्यमुक्तस्य शुद्धस्य कूटस्थस्याविचालिनः ।
अमृतस्याक्षरस्यैवमशरीरस्य सर्वदा ॥ ३ ॥

नित्यमुक्तस्येति ॥ विद्याविद्ये न स्त इति पूर्वेणान्वयः । शुद्ध मुक्तत्वमविचालित्वात्कूटस्थत्वमक्षरत्वादमृतत्वमिति विशेषणानां त्रिष्वपि हेतुरशरीरस्येति । नहि शरीरसंबन्धमन्तरेणात्मनोऽशुद्धि णानि निरूपणपथमवतरन्ति । अतः सर्वदैवाशरीरत्वात्सर्वदा शु योज्यम् ॥ ३ ॥

आत्मनः षडूर्मिसंबन्धाभावादपि सिद्धा शुद्धतेत्याह—

जिघत्सा वा पिपासा वा शोकमोहौ जरामृती ।
न विद्यन्तेऽशरीरत्वाद्व्योमवद्व्यापिनो मम ॥ ४ ॥

जिघत्सेति ॥ खादितुमिच्छा जिघत्सा, पातुमिच्छा पिपासा, द्धमशरीरत्वादित्युपलक्षणम् । अप्राणत्वादमनस्त्वाचेत्यर्थः । तथाचे क्षुत्पिपासे द्वे मनसः शोकमोहकौ । जरामृत्यू शरीरस्य षडूर्मिरहि इति ॥ ४ ॥

इदानीमनुक्तसकलेन्द्रियवृत्तिप्रतिषेधोपलक्षणतया स्पर्शरसनतं पिध्याविर्भावतिरोभावहीनतया विशुद्धचिद्रूपत्वमुक्तमुपसंहरति—

अस्पर्शत्वान्न मे स्पृष्टिर्नाजिह्वत्वाद्रसज्ञता ।
नित्यविज्ञानरूपस्य ज्ञानाज्ञाने न मे सदा ॥ ५ ॥

अस्पर्शत्वादिति ॥ स्पर्शनेन्द्रियरहितत्वादित्यर्थः ॥ ५ ॥

आत्मनो दृष्ट्यादयो न सन्तीत्युक्तेर्थं उपपत्तिमाह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

**या तु स्यान्मानसी वृत्तिश्चाक्षुष्का रूपरञ्जना ।**
**नित्यमेवात्मनो दृष्ट्या नित्यया दृश्यते हि सा ॥ ६ ॥**

या तु स्यादिति ॥ चाक्षुष्का चक्षुर्द्वारजनिता रूपरञ्जना रूपाकाराकारिता । या तु मानसी वृत्तिः स्यात् । स्याच्छब्दो भवतीत्यर्थे । एवंविधा वृत्तिस्ति सात्मरूपया नित्यया दृष्ट्या चैतन्यप्रकाशलक्षणया नित्यमेव दृश्यते प्रकाश्यते । हि प्रसिद्धम् । अनुभवसिद्धमेवैतदित्यर्थः ॥ ६ ॥

तथाच दृष्ट्यादयश्चिदात्मीयास्तद्दृश्यत्वाद्यो येन दृश्यते न स तदीयो यथा रूपादिरिति सिद्धमात्मनो दृष्ट्यादिराहित्येन शुद्धत्वादीत्यभिप्रेत्य चक्षुर्द्वारकवृत्तावुक्तन्यायं वृत्त्यन्तरेष्वतिदिशति—

**तथान्येन्द्रिययुक्ता या वृत्तयो विषयाञ्जनाः ।**
**स्मृती रागादिरूपा च केवलान्तर्मनस्यपि ॥ ७ ॥**

तथेति ॥ विषयाञ्जनविषयोपाधिकाः । विषयाकारा इति यावत् । याच वल्ला चक्षुरादिद्वारनिरपेक्षा अन्तर्मनसि शरीरान्तर्वर्तिनि चित्ते स्मृतिः रागादिरूपा सापि पूर्वोक्तयात्मदृष्ट्या दृश्यत इत्यन्वयः ॥ ७ ॥

किंच स्वप्नावस्थायां विद्यमाना मनःपरिणामरूपा विषयाकारा वृत्तयस्ततो व्यतिरिक्तस्यैव द्रष्टुर्दृश्या यथा संप्रतिपन्नास्तथा जाग्रद्दृश्या अपि दृश्यत्वात्स्वव्यतिरिक्तस्यैव द्रष्टुर्दृश्या इत्याह—

**मानसस्तद्वदन्यस्य दृश्यन्ते स्वप्नवृत्तयः ।**
**द्रष्टुर्दृष्टिस्ततो नित्या शुद्धानन्ता च केवला ॥ ८ ॥**

मानस्य इति ॥ मानस्यः स्वप्नवृत्तयोऽन्यस्य साक्षिणो दृश्यन्ते दृश्यत्वेन परिवर्तन्त इत्यर्थः । तद्वज्जाग्रद्वृत्तय इति शेषः । सर्वदृष्टीनां कूटस्थदृष्टिभास्यत्वे सिद्धे फलितमाह—द्रष्टुरिति ॥ ८ ॥

कूटस्था चेदात्मदृष्टिरिष्टा कथं तत्रान्यथा प्रथेत्याशङ्क्य वृत्तिमदन्तःकरणापेक्षादेवेत्याह—

**अनित्या साऽविशुद्धेति गृह्यतेऽत्राविवेकतः ।**
**सुखी दुःखी तथा चाहं दृश्ययोपाधिभूतया ॥ ९ ॥**

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनित्येति ॥ अविशुद्धेति छेदः । उपाधिभूतया दृश्यया दृ चेकतो विवेकाग्रहादत्र व्यवहारभूमौ सा नित्या शुद्धा चात्मदृष्टिं शुद्धेति च गृह्यत इति योजना । तथाहं सुखी दुःखीति च मन्या श्लोकगतेनान्वयः ॥ ९ ॥

अविवेकनिबन्धना मिथ्याभिमानादेव संसारप्राप्तिरित्युक्तमेव स्प

मूढया मूढ इत्येवं शुद्धया शुद्ध इत्यपि ।
मन्यते सर्वलोकोऽयं येन संसारमृच्छति ॥ १० ॥

मूढयेति स्पष्टम् ॥ १० ॥

कथं तर्हि संसारनिवृत्तिरित्यपेक्षायां तदुपायं ब्रुवन्मुमुक्षुं शिक्ष

अचक्षुष्कादिशास्त्रोक्तं सबाह्याभ्यन्तरं त्वजम् ।
नित्यमुक्तमिहात्मानं मुमुक्षुश्चेत्सदा स्मरेत् ॥ ११ ॥

अचक्षुष्कादीति ॥ इह प्राणिनां मध्ये कश्चिन्मुमुक्षुश्चेत्स्यात् स्मानमुक्तरूपं सदा स्मरेत् श्रुत्याचार्योपदिष्टमनवरतमनुसंद जना ॥ ११ ॥

यदात्मनश्चक्षुरादिराहित्यं प्राक्सिद्धवदुक्तं तत्र प्रमाणमाह—

अचक्षुष्कादिशास्त्राच्च नेन्द्रियाणि सदा मम ।
अप्राणो ह्यमनाः शुभ्र इति चाथर्वणेर्वचः ॥ १२ ॥

अचक्षुष्कादिशास्त्राच्चेति ॥ 'अचक्षुष्कमश्रोत्रमवागमन' बृहदारण्यके यथात्मरूपमुक्तं तथा मुण्डकेऽप्युक्तमित्याह—अप्राण

आत्मनो निर्विशेषत्वे श्रुत्यन्तरमुदाहरति—

शब्दादीनामभावश्च श्रूयते मम काठके ।
अप्राणो ह्यमना यस्मादविकारी सदा ह्यहम् ॥ १३ ॥

शब्दादीनामिति ॥ 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नि वच यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमु काठके श्रूयत इत्यर्थः । उक्तं प्रमाणमनूद्य फलितमाह—अप्राण इ चक्षुष्कादेरप्युपलक्षणम् ॥ १३ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

अविकारित्वनिश्चयफलमाह—

विक्षेपो नास्ति तस्मान्मे न समाधिस्ततो मम।
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥ १४ ॥

विक्षेप इति ॥ तस्मात्। अविकारित्वादित्यर्थः। ततो विक्षेपाभावादित्यर्थः। विक्षेपनिवृत्तिरूपत्वात्समाधेस्तदभावे तदभावः। कस्य तर्हि समाधिविक्षेपावित्यपेक्षायां विकारवत एवेति वदन् अविकारिणस्तदभावं द्रढयति—विक्षेपो वेति ॥ १४ ॥

मनोवद्विकारित्वाद्वा विकारिमनस्तादात्म्याद्वा विक्षेपसमाधी आत्मनि भाव्येताम्, तदुभयाभावात्तौ न स्त इत्याह—

अमनस्कस्य शुद्धस्य कथं तत्स्याद्द्वयं मम।
अमनस्त्वाविकारित्वे विदेहव्यापिनो मम ॥ १५ ॥

अमनस्कस्येति ॥ शुद्धस्य। अविकारिण इत्यर्थः। कथममनस्कत्वमविकारित्वं चेत्यत आह—अमनस्त्वाविकारित्वे इति। विदेहश्चासौ व्यापी चेति विदेहव्यापी तस्येति विग्रहः। विदेहत्वादमनस्कत्वं व्यापित्वादविकारित्वं इत्यर्थः ॥ १५ ॥

कथं तर्हि जिज्ञासावस्थायां समाध्यादिकं कर्तव्यमिति ते बुद्धिरासीदिति आह—

इत्येतद्यावदज्ञानं तावत्कार्यं ममाभवत्।
नित्यमुक्तस्य शुद्धस्य बुद्धस्य च सदा मम ॥ १६ ॥

इत्येतदिति ॥ सदा नित्यमुक्तबुद्धस्यापि मम यावत्पर्यन्तमेतन्नित्यशुद्धादिविषयमज्ञानमासीत्तावत् मम कार्यं समाधानादि कर्तव्यमभवत्, नेदानीं ज्ञानतः कृत्यमस्तीत्यर्थः ॥ १६ ॥

इदानीं कस्मात्समाधानादि न कर्तव्यमित्यपेक्षायां तद्धेत्वभावादित्याह—

समाधिर्वाऽसमाधिर्वा कार्यं चान्यत्कुतो भवेत्।
मां हि ध्यात्वा च बुद्ध्वा च मन्यन्ते कृतकृत्यताम् ॥ १७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समाधिर्वेत्ति ॥ कुतो भवेन्ममेति शेषः । कुतो न भवेदित्यत्र हे
मां हीति । यस्मान्मां प्रत्यगेकरसं ब्रह्म ध्यात्वा विचार्य बुद्ध्वा
कृतकृत्यतां मन्यन्ते मुमुक्षव इति शेषः । तथाच श्रुतिः 'एष नि
ब्राह्मणस्य न कर्मणा वर्धते नो कनीया'निति । 'यस्त्वात्मरतिरेव स्या
श्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते' इति स्मृते
दज्ञानाभावान्नास्तीदानीं किमपि कर्तव्यमित्यर्थः ॥ १७ ॥

ननु यद्यपि यथोक्तात्मविदः समाध्यादि कर्तव्यं नास्ति त
ब्रह्मत्वं संपाद्य प्रपञ्चस्य विलयः कर्तव्योऽवशिष्यत इत्याशङ्क्य
नित्यसिद्धत्वात्प्रपञ्चस्य चाज्ञानमात्रविलसितस्य तन्निवृत्तिसमय ए
नात्मना विलीनत्वाच्च तदनुष्ठेयमवशिष्यत इत्यभिप्रेत्याह—

अहं ब्रह्मास्मि सर्वोऽस्मि शुद्धो बुद्धोऽस्म्यतः सदा ।
अजः सर्वत एवाहमजरश्चाक्षयोऽमृतः ॥ १८ ॥

अहं ब्रह्मास्मीति ॥ सदेति ब्रह्मास्मीत्यादिषु सर्वेषु विशेषणेषु
अतस्ततो बन्धहीनः सर्वत इति च पदमजोऽक्षय इत्युभयत्र योज
क्षयहेतुरहित इत्यर्थः ॥ १८ ॥

ननु प्रतिदेहं चेतनभेदे भासमाने कथं ब्रह्मास्मीति प्रतीचः
इत्यत आह—

मदन्यः सर्वभूतेषु बोद्धा कश्चिन्न विद्यते ।
कर्माध्यक्षश्च साक्षी च चेता नित्योऽगुणोऽद्वयः ॥

मदन्य इति ॥ उक्तेऽर्थे प्रमाणमाह—कर्माध्यक्ष इति ।
सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभू
साक्षी चेता केवलो निर्गुणश्चे'ति श्रुतावेकस्यैव सर्वभूतान्तरात्मत्वो
दप्रतिभानस्याकाशभेदभानवदुपाधिनिबन्धनत्वान्नात्मान्तराशङ्केति
ब्रह्मात्मानुभवनमित्यर्थः ॥ १९ ॥

अहं ब्रह्मास्मीत्यत्रोक्तमात्मनो ब्रह्मत्वमुपपादितं, सर्वोऽस्मी
बाधायां सामानाधिकरण्याभिप्रायमित्युपपादयति—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

न सच्चाहं न चासच्च नोभयं केवलः शिवः ।
न मे संध्या न रात्रिर्वा नाहर्वा सर्वदा दृशेः ॥ २० ॥

न सच्चाहमिति ॥ सत्प्रत्यक्षयोग्यं पृथिव्यप्तेजोरूपं भूतत्रयम् । असत्प्रत्यक्षायोग्यं त्यच्छब्दनिर्दिष्टं वाय्वाकाशात्मकं भूतद्वयम् । उभयं पञ्चभूतानामात्मकं शरीरसंस्थानं तत्सर्वं नाहमित्युक्ते नेतिनेतीति मय्येवारोप्य पेद्धत्वान्मदन्यत्र मयि चासत्त्वादहमेवेदं सर्वमिति युक्तमेवोक्तमित्यर्थः । ...लः सर्वविशेषशून्यः । शिवो निस्त्रैगुण्यः । संध्यादिकालविशेषयोगात्कथं ...लत्वमित्यत आह—न मे संध्येति । तत्र हेतुः—सर्वदा दृशेरिति । अलु-...काशात्मत्वादित्यर्थः । यद्वा संध्यादिशब्दैः क्रमेण स्वप्नसुषुप्तिजागरणान्यु-...च्यन्ते । सदैवैकरूपेण प्रकाशमानस्य स्वरूपावरणविक्षेपरूपावस्थाः कुतस्त्या ...र्थः ॥ २० ॥

तस्माच्चिदेकतानस्यात्मनो निर्विषयस्य युक्तं ब्रह्मरूपेण पूर्णत्वमिति दृष्टान्तमाह—

सर्वमूर्तिवियुक्तं यद्यथा खं सूक्ष्ममद्वयम् ।
तेनाप्यस्मि विनाभूतं ब्रह्मैवाहं तथाऽद्वयम् ॥ २१ ॥

सर्वमूर्तीति ॥ यथाकाशं सर्वस्मात्परिच्छिन्नाकारादिलक्षणमिति सूक्ष्म-...क्ष्यते तथेदं ब्रह्म परिपूर्णमत्यन्तसूक्ष्मं द्वैताभावोपलक्षितमिष्यते तस्मा-...मोऽद्वितीयत्वादात्मनश्च तदनन्यत्वाद्ब्रह्मैवास्मीत्यर्थः । तर्हि ब्रह्माकाशयो-...रुपमानोपमेयभावेन भेदात्कथं ब्रह्माद्वितीयमित्यत आह—तेनापीति । ...काशेनापि विनाभूतं सिद्धं ब्रह्मास्मि व्यवहारदृष्ट्योपमानादिभेदेऽपि पर-...तस्तद्भावान्नाद्वैतक्षतिरित्यर्थः । एकमद्वयपदमाकाशेन संबध्यते, द्वितीयं ...मेत्यपौनरुक्त्यम् ॥ २१ ॥

...वमाकाशदृष्टान्तेन पूर्णत्वनिरूपणात्परमार्थतः परिच्छेदाशङ्का निराकृता, ...र्हि तेनैव दृष्टान्तेन भेदपरिच्छेदप्रतीतेर्गतिमाह—

ममात्मा स्वत आत्मेति भेदो व्योम्नो यथा भवेत् ।
एकस्य सुषिभेदेन तथा मम विकल्पितः ॥ २२ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ममात्मेति ॥ मम ज्ञातुरात्मा स्वरूपं ब्रह्मेति स्वतः स्व
योऽयमात्मात्मीयभावेन भेदप्रतिभासः स एकस्य ममान्तःकरणवृ
भेदपरिच्छेदापेक्षया विकल्पित आरोपितो भवेत्, यद्वदेकस्य
भेदेन छिद्रभेदेनांशांशिभावरूपो भेदो विकल्पितो भवति तद्वदि

तस्मादविद्यादशायां भेदव्यवहारेऽपीदानीमवगतात्मतत्त्व
नास्तीति सिद्धमित्याह—

भेदोऽभेदस्तथा चैको नाना चेति विकल्पितः।
ज्ञेयं ज्ञाता गतिर्गन्ता मय्येकस्मिन्कुतो भवेत् ॥ २

भेदोऽभेद इति ॥ मय्येवैकस्मिन्पूर्वं भेदोऽभेदश्च विकल्पितो
तथा एको नाना चेति चाहमेव विकल्पितः। ज्ञेयं ज्ञाता गतिः
फलप्राप्तिकर्ता भोक्तेति चाहं विकल्पित इति योजना। एतत्सर्वं
विचार्यमाणे न भवेदेवेत्यर्थः ॥ २३ ॥

ननु तथापि संसारित्वं हेयं ब्रह्मत्वं चोपादेयमिति न निर्वि
इतिचेत्तत्राह—

न मे हेयं न चादेयमविकारी यतो ह्यहम्।
सदा मुक्तस्तथा शुद्धः सदा बुद्धोऽगुणोऽद्वयः ॥ २

न मे हेयमिति ॥ तत्र हेतुमाह—अविकारीति। यतो
विकारी। कुतोऽविकारीत्यपेक्षायां तत्र प्रमाणं हिशब्देन सूच्यते।
यों ऽयमुच्यते' इति स्मृतेरित्यर्थः। फलितमाह—सदा मुक्त
बन्धसंसर्गशून्य इत्यर्थः। तथा शुद्धस्तद्धेत्वविद्यासंबन्धरहितः।
बुद्धः। तर्हि किं बोधगुणः, नेत्याह—अगुणः बोधरूप एवे
बोध्यं किंचिदन्यदस्ति, नेत्याह—अद्वय इति ॥ २४ ॥

तदेवमुक्तलक्षणेनात्मतत्त्वं शास्त्राचार्यप्रसादाच्छ्रवणमननिदि
प्राप्तः सन् सदा मुमुक्षुरहं ब्रह्मास्मीत्यनुसंदध्यादिति मुमुक्षुं प्रो

इत्येवं सर्वदात्मानं विद्यात्सर्वं समाहितः।
विदित्वा मां स्वदेहस्थमृषिर्मुक्तो ध्रुवो भवेत् ॥ २

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

इत्येवमिति ॥ सर्वं पूर्वमुक्तं वेदनफलमाह—विदित्वेति । ऋषिः
वेदर्शी ॥ २५ ॥

उक्ततत्त्वविद उक्तां मुक्तिं प्रपञ्चयति—

**कृतकृत्यश्च सिद्धश्च योगी ब्राह्मण एव च ।**
**य एवं वेद तत्त्वार्थमन्यथा ह्यात्महा भवेत् ॥ २६ ॥**

कृतकृत्यश्चेति ॥ स ब्राह्मण इति श्रुतेर्मुख्यो ब्राह्मण एव च भवेदिति
बन्धः । एवं निष्ठाहीनस्य प्रत्यवायमाह—अन्यथेति । उक्तं श्रीभागवते
गवता 'नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् । मयाऽनु-
लेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महे'ति ॥ २६ ॥

उक्तस्य प्रकरणार्थस्य प्रामाणिकत्वं दर्शयन्प्रतिपत्तिसौकर्यमाह—

**वेदार्थो निश्चितो ह्येष समासेन मयोदितः ।**
**संन्यासिभ्यः प्रवक्तव्यः शान्तेभ्यः शिष्टबुद्धिना ॥ २७ ॥**

वेदार्थ इति ॥ अस्य ग्रहणे मुख्याधिकारिणो दर्शयति—संन्यासिभ्य
इ । न केवलं प्राप्तसंन्यासाश्रममात्रेभ्यः किंतु शान्तेभ्यः । शमादिसाधन-
द्भ्य इत्यर्थः । उपदेष्टारं विशिनष्टि—शिष्टबुद्धिनेति । शास्त्राचार्यानुशिष्ट-
द्धिनेत्यर्थः ॥ २७ ॥

इति त्रयोदशं चक्षुष्प्रकरणम् ॥ १३ ॥

---

## स्वप्नस्मृतिप्रकरणम् १४

पूर्वस्मिन्प्रकरणेऽन्तःकरणाविवेकादात्मनि संसारित्वप्रतीतिर्न स्वत इति
प्रामाण्याद्बाधिताज्ञानतत्कार्यो ब्रह्मरूप एवात्मेति निर्धारितम्, इदानी-
न्तःकरणस्य परोक्षत्वात्संसारप्रतिभासस्य चापरोक्षत्वान्न तत्प्रतिभासो
विवेककृत इत्याशङ्क्यान्तःकरणस्यापरोक्षत्वप्रतिपादनपूर्वकं पूर्वोक्तशास्त्रार्थे
प्रदर्शनपरं प्रकरणं प्रक्रमते—

**स्वप्नस्मृत्योर्घटादेर्हि रूपाभासः प्रदृश्यते ।**
**पुरा नूनं तदाकारा धीर्दृष्टेत्यनुमीयते ॥ १ ॥**

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वप्नस्मृत्योरिति ॥ हि यस्मात्स्वप्ने स्मृतौ च घटादेर्विषय रूपाभास आकारावभासो दृश्यतेऽनुभूयते तस्मात्पुरा पूर्वं जाग्रदनु नुभवावस्थायामपि नूनमवश्यं तदाकारा घटाद्याकारा धीरन्तःकरण साक्षादनुभूतेत्यनुमीयत इत्यर्थः। स्वप्नस्मृत्योर्दृष्टार्थविपयत्वनियमा बाह्यार्थस्य तत्राभावात्स्वप्नस्मृत्योरुपलभ्यमानो विषयोऽर्थाकारवृत्तिमदन्तः करणमेवेति जाग्रत्पूर्वानुभवयोरप्यन्तःकरणमेवार्थाकारवृत्तिमद्दृश्य तमिति कल्प्यते। तस्मात्सर्वास्वप्यवस्थासु वृत्तिमदन्तःकरणस्यापरोक्षेन तच्चिदाभासाविवेकादात्मनः संसारित्वावभासोऽपरोक्षो युक्त इति ॥

एवमन्तःकरणस्यापरोक्षत्वे निरूपिते किमायातमात्मन इत्यपेक्षा दन्तःकरणादिसंघाताद्विवेकसिद्धिरायातेति सदृष्टान्तमाह—

भिक्षामटन्यथा स्वप्ने दृष्टो देहो न स स्वयम्।
जाग्रद्दृश्यात्तथा देहाद्द्रष्टृत्वादन्य एव सः ॥ २ ॥

भिक्षामिति ॥ सुप्तस्य यतेः स्वप्ने भिक्षामटन्दृष्टो यो देहः द्रष्टा न भवति। यथा तद्देहात्मत्वमभिमन्यमानोऽपि तदात्मको न तथा जाग्रद्दृश्यादपि देहात्स आत्मान्य एव द्रष्टृत्वादित्यर्थः। देहग्रह णमिन्द्रियान्तःकरणयोरपि। तथाच प्रयोगः—विमतो देहादिर्नात्मा स्वप्नदृश्यदेहादिवदिति ॥ २ ॥

बुद्धिरेव सर्वावस्थास्वर्थाकारा दृश्यत इत्युक्तमर्थं दृष्टान्तेन स्प

मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा।
रूपादीन्व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥ ३ ॥

मूषेति ॥ मूषान्तःसुषिरास्त्यप्रतिमा यथाग्निसंपर्काद्द्रवीभूतं ता निषिक्तं निक्षिप्तं सत्तन्निभं जायते तत्समानाकृति भवति तथा रूपादीन्विषयान्व्याप्नुवत्तन्निभं दृश्यते। तदाकारं जायत इत्यर्थः।

ननु मूषासिक्तताम्रस्य कठिनमूषाभिघातेन शैत्यापत्तौ तदाका युज्यते, चित्तस्य त्वमूर्तत्वाद्विपयव्याप्तावपि कथं तदाकारापत्तिरि शङ्क्य दृष्टान्तान्तरमाह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यञ्जको वा यथालोको व्यङ्ग्यस्याकारतामियात् ।
सर्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते ॥ ४ ॥

व्यञ्जको वेति ॥ व्यञ्जकोऽग्न्यादिरयःपिण्डादेरालोको वा घटादेः । स्पष्टार्थः ॥ ४ ॥

बुद्धेरन्वयमुखेन स्वप्नस्मृत्योरित्यत्रोपपादितमपरोक्षत्वमनूद्य व्यतिरेकमुखेनोपपादयति—

धीरेवार्थस्वरूपा हि पुंसा दृष्टा पुरापि च ।
न चेत्स्वप्ने कथं पश्येत्स्मरतो वा कृतिः कुतः ॥ ५ ॥

धीरेवेति ॥ स्पष्टम् ॥ ५ ॥

आलोकादिवद्व्यञ्जकत्वाद्बुद्धेर्व्यङ्ग्याकारत्वमुक्तं स्पष्टयति—

व्यञ्जकत्वं तदेवास्या रूपाद्याकारदृश्यता ।
द्रष्टृत्वं च दृशेस्तद्व्याप्तिः स्याद्धिय उद्भवे ॥ ६ ॥

व्यञ्जकत्वमिति ॥ अस्या बुद्धेर्या रूपाद्याकारेण दृश्यता दर्शनयोग्यतात्तित्तदेव विषयव्यञ्जकत्वमित्यर्थः । चैतन्यं हि विषयावभासो विषयश्च न द्धेरन्यत्र स्वातन्त्र्येण स्फुरति । तथाच बुद्धेर्विषयाकारत्वाभावे चैतन्यस्य षयात्मना स्फूर्तिरनुपपन्नेति विषयाभिव्यक्त्यर्थतया तदाकारापत्तिरेव बुद्धेर्व्यञ्जकत्वमित्यभिप्रायः । यथा रूपाद्याकारेणावभासमानत्वमेव धियो रूपाद्व्यञ्जकत्वं तथा दृशेरात्मनो धिय उद्भवे धर्माधर्मवशादुत्पत्तौ सत्यां तद्यास्तदात्मना स्फुरणमेव द्रष्टृत्वं न परिणाम इत्याह—द्रष्टृत्वं चेति । यद्यपि यो विषयव्याप्तिः परिणाममन्तरेण न भवति विषयदेशे तस्याः प्रागेवासात्, तथापि चैतन्यात्मनो धीवृत्तिव्याप्तौ न परिणामापेक्षा चिदात्मन्येव प्रकाशकवलितायां एव धियः सदोत्पत्तेरिति भावः ॥ ६ ॥

बुद्धितद्वृत्तिसाक्षित्वेन चिदात्मनः परिणामाभावेऽपि न तस्य ब्रह्मरूपैकत्वं युक्तं, प्रतिदेहं तत्तद्बुद्धिसाक्षिभेदादित्याशङ्क्य प्रमाणाभावान्नैवत्याह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

चिन्मात्रज्योतिषा सर्वाः सर्वदेहेषु बुद्धयः ।
मया यस्मात्प्रकाश्यन्ते सर्वस्यात्मा ततो ह्यहम् ॥ ७ ॥

चिन्मात्रेति ॥ यथैकस्मिञ्छरीरे बुद्ध्यवभासो विकृतचिद्धा सर्वशरीरगतबुद्ध्यवभास इति भास्यबुद्धिभेदेऽपि न तदवभास प्रमाणपथमवतरति । भेदस्यापि साक्ष्यत्वेन साक्षिधर्मत्वाभावात् दाशङ्कावकाश इत्यर्थः ॥ ७ ॥

चैतन्यस्य सर्वत्रैकत्वेऽपि दृश्यस्य बुद्ध्यादेरनेकत्वान्नाद्वयब्रह्म रित्याशङ्क्य सकलदृश्यस्यानाद्यनिर्वाच्याविद्याविलासबुद्धिमात्रत्वा यब्रह्मत्वमविरुद्धमित्युपपादयति—

करणं कर्म कर्ता च क्रिया स्वप्ने फलं च धीः ।
जाग्रत्येवं यतो दृष्टा द्रष्टा तस्मात्ततोऽन्यथा ॥ ८ ॥

करणमिति ॥ यथा क्रियाकारकफलानि स्वप्ने धीरेव बाह्य तत्राभावादिति निश्चितम् । एवमेव जाग्रति जाग्रदवस्थायां च क्रियाकारकफलरूपा दृष्टा तथैव बहिः पदार्थसत्त्वमवगतम् । सुषुप्तावपि तदाकारविशेषस्फुरणं कदाचित्स्यात् । तस्माद्विषयैः बुद्धेरध्यस्तत्वात्तस्याश्चाद्यन्तवत्त्वेन मिथ्यात्वाद्द्रष्टात्मा ततो बुद्धेरन्य सत्योऽखण्डैकरस इत्यर्थः ॥ ८ ॥

अन्यथेत्युक्तं स्फुटयति—

बुद्ध्यादीनामनात्मत्वं हेयोपादेयरूपतः ।
हानोपादानकर्तात्मा न त्याज्यो न च गृह्यते ॥ ९ ॥

बुद्ध्यादीनामिति ॥ बुद्ध्यादयो नात्मस्वरूपधर्मा आगमापायि दिवदित्युक्ते चिदात्मनि व्यभिचारमाशङ्क्य परिहरति—हानो बुद्ध्यादेर्हानोपादानयोर्लयविक्षेपयोः कर्तात्मा तदधिष्ठानमात्रेण कर्ता स न केनचित्त्याज्यो न विलाप्यो नच गृह्यते न विक्षिप्यते सर्वाधिष्ठानत्वात्तस्य चाधिष्ठानान्तराभावादित्यर्थः ॥ ९ ॥

आत्मनः स्वरूपेणाहेयानुपादेयत्वेऽपि तत्संबन्धित्वेन प्रास

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

रखाभरणादेरान्तरस्य च पापादेर्हेयत्वमान्तरस्य च योगध्यानादेरुपादेयत्वं भविष्यतीति न विशुद्धिरात्मन इत्याशङ्क्याह—

सबाह्याभ्यन्तरे शुद्धे प्रज्ञानैकरसे घने ।
बाह्यमाभ्यन्तरं चान्यत्कथं हेयं प्रकल्प्यते ॥ १० ॥

सबाह्येति ॥ बाह्याभ्यन्तरसहिते बाह्यमाभ्यन्तरं चात्मैव न ततः पृथगित्यर्थः । यतः शुद्धः केवलोऽतो बाह्याभावः । यतश्च प्रज्ञानैकरसोऽतो नान्तरमपि पृथगस्ति । एकरसत्वं स्पष्टयति—घन इति । सैन्धवघनवद्विज्ञानघन इत्यर्थः । हेयमित्युपलक्षणम् । एवंभूते आत्मनि कथं हेयमुपादेयं वा कल्प्यत इत्यर्थः । सत्तास्फूर्त्यनालिङ्गितस्य बाह्यस्याभ्यन्तरस्य चोल्लिखितुमशक्यत्वात् तयोश्चात्मस्वरूपत्वान्न ततो बहिरन्तर्वा किमप्यस्ति । परमार्थतो यदुपादेयं हेयं वा भवेदिति नात्मनो विशुद्धिसंकोचावकाश इति भावः ॥ १० ॥

वस्तुस्वभावानुसारेण विचार्यमाणे नात्मनि हेयाद्यस्तीत्युक्तम्, इदानीं विद्वदनुभवेनाप्ययमर्थोऽवगम्यत इत्याह—

य आत्मा नेतिनेतीति परापोहेन शेषितः ।
स चेद्ब्रह्मविदात्मेष्टो यतेतातः परं कथम् ॥ ११ ॥

य आत्मेति ॥ ब्रह्मविदो ज्ञानिनः । आत्मा स्वरूपम् । कथं यतेत कृतकृत्यत्वादित्यर्थः ॥ ११ ॥

एवंविधमात्मतत्त्वं न परानुभवगम्यमिति स्वयमेवात्मविदा शास्त्राचार्योपदेशानुसारेण विवेक्तव्यमित्याह—

अशनायाद्यतिक्रान्तं ब्रह्मैवास्मि निरन्तरम् ।
कार्यवान्स्यां कथं चाहं विमृशेदेवमञ्जसा ॥ १२ ॥

अशनायादीति ॥ षडूर्मिरहितमित्यर्थः ॥ १२ ॥

एवं विमर्शे प्राप्तं प्रापणीयमितिकर्तव्यबुद्धिरेव न भवेदिति दृष्टान्तेनाह—

पारगस्तु यथा नद्यास्तत्स्थः पारं यियासति ।
आत्मज्ञश्चेत्तथा कार्यं कर्तुमन्यदिहेच्छति ॥ १३ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

पारग इति ॥ नद्याः पारं परतीरं गतो यथा तत्स्थः पुनर्मा तमेव पारं यियासति यातुं प्राप्तुमिच्छति चेदित्यन्वयः । तथा ज्ञानी नोऽन्यत्कार्यं कर्तुमिह श्रेयोमार्गं इच्छतीति योजना । नैव विद्वांस्ती च्छति चेत्यर्थः ॥ १३ ॥

यः पुनरात्मज्ञोऽपि कार्यवान्स्यात्स न सम्यग्दर्शीति तं निन्दति—

आत्मज्ञस्यापि यस्य स्याद्धानोपादानता यदि ।
न मोक्षार्हः स विज्ञेयो वान्तोऽसौ ब्रह्मणा ध्रुवम् ॥

आत्मज्ञस्यापीति ॥ स्पष्टार्थः ॥ १४ ॥

'अनागतां तु ये पूर्वामनक्षत्रां तु पश्चिमाम् । संध्यां नोपासते कथं ब्राह्मणाः स्मृता' इति स्मृतेर्ब्रह्मविदोऽपि विप्रस्य संध्यावन्दन मित्याशङ्क्य कैमुतिकन्यायेन निराकरोति—

सादित्यं हि जगत्प्राणस्तस्मान्नाहर्निशैव वा ।
प्राणज्ञस्यापि न स्यातां कुतो ब्रह्मविदोऽद्वये ॥ १५ ॥

सादित्यमिति ॥ आदित्यः सूर्यस्तत्सहितमिदं जगत्सर्वं हि हिरण्यगर्भस्तस्मात् 'प्राणज्ञस्यापि प्राणोऽहमस्मीति' प्राणात्मभाव स्युपासकस्येति यावत् । अहर्निशैव वा न स्याताम् । उदयास्तम रूपत्वात्तस्याहोरात्रे न स्यातामित्यर्थः । तथाच श्रुतिः 'न ह वा अ न निम्लोचति सकृद्दिवा हैवास्मै भवती'ति । तथाच प्राणज्ञस्या दोऽपि भेददर्शिनो यद्यहर्निशे न स्यातां तदास्य ब्रह्मविदो मुख्य द्वये सर्वद्वैताभासरहिते स्वरूपे सति ते कुतः स्यातां, न कुतोऽपि दर्शनाभावादेव तन्निमित्तकर्तव्याभाव इत्यर्थः ॥ १५ ॥

ब्रह्मविदो बाह्यक्रियाभावेऽपि 'संध्यं समाधावात्मन्याचरे स्वात्मनि विस्मृतिं परित्यज्य मोक्षाय स्मृतिः कर्तव्येत्यत आह—

न स्मरत्यात्मनो ह्यात्मा विस्मरेद्वाप्यलुप्तचित् ।
मनोऽपि स्मरतीत्येतज्ज्ञानमज्ञानहेतुजम् ॥ १६ ॥

न स्मरतीति ॥ स्मरतियोगात्षष्ठी द्वितीयार्थे । स्मरणविस्म हेतुः—अलुप्तचिदिति । यद्यशक्यत्वादात्मनः स्मरणं विधातुं

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

आविर्भावतिरोभावादिविकारशान्तये मन एवात्मानं स्मरेदिति विधिः स्यादित्यत आह—मनोऽपीति। मनसोऽचेतनत्वात्स्मर्तृत्वानुपपत्तेर्मनः स्मरतीति ज्ञानमप्यज्ञानहेतुजम्, अविवेकविलसितमित्यर्थः। तथाचासम्यग्ब्रह्मविद आत्मव्यतिरेकेण मनः पश्यतः संध्यं समाधाविति विधिर्न सम्यग्ब्रह्मविद इति भावः ॥ १६ ॥

यद्यप्यात्माऽलुप्तचिद्रूपत्वान्नात्मानं स्मरति तथापि परमात्मानं स्मरेदेवेत्याशङ्क्याह—

**ज्ञातुर्ज्ञेयः परो ह्यात्मा सोऽविद्याकल्पितः स्मृतः।**
**अपोढे विद्यया तस्मिन्रज्ज्वां सर्प इवाद्वयः ॥ १७ ॥**

ज्ञातुरिति ॥ यदि पर आत्मा ज्ञातुर्ज्ञेयो विषयः स्यात्तदा सोऽविद्याकल्पितः स्वाज्ञानकल्पितो हि निश्चितं स्मृतो ज्ञातो विद्वद्भिः। ज्ञानविषयस्य रज्जुसर्पवदविद्याकल्पितत्वनियमात्स आत्मैव न भवतीत्यर्थः। तथाच तस्मिन्नात्मनः परत्वज्ञेयत्वादिके विद्यया आत्मविद्ययाऽपोढे बाधिते सति ज्ञातृज्ञेयविभागाभावादद्वय एवात्मा भवतीत्यर्थः। तत्र दृष्टान्तो रज्ज्वां सर्प इवेति। यथा रज्जुविद्यया सर्पे बाधिते रज्जुरेवावशिष्यते तद्वदित्यर्थः ॥ १७ ॥

प्रत्यगात्मनो वस्तुतोऽद्वितीयत्वेऽपि तस्मिन्ममाहमित्यादिसंसारप्रतिभासातन्निवृत्तये किमपि कर्तव्यं भविष्यतीत्यत आह—

**कर्तृकर्मफलाभावात्सबाह्याभ्यन्तरं ह्यजम्।**
**ममाहं वेत्ति यो भावस्तस्मिन्कस्य कुतो भवेत् ॥ १८ ॥**

कर्तृकर्मेति ॥ कर्तृकर्मफलभेदाभावात्सबाह्याभ्यन्तरमजमेवात्मस्वरूपं हि यतः तस्मिन्नात्मनि ममाहमित्यादिरूपो यो भावः प्रतिभासः स कस्य भवेत्कुतो वा हेतोर्भवेत्। न भवेदेवेति योजना। तस्मात्तज्ज्ञानोत्पत्तेः प्रागेव सर्वकर्तव्यता नोर्ध्वमिति भावः ॥ १८ ॥

आत्मविदो देहादावहंकारममकाराभावे हेतुमाह—

**आत्मा ह्यात्मीय इत्येष भावोऽविद्याप्रकल्पितः।**
**आत्मैकत्वे ह्यसौ नास्ति बीजाभावे कुतः फलम् ॥ १९ ॥**

आत्मा ह्यात्मीय इति ॥ आत्मैकत्वे ज्ञाते सतीति शेषः ॥ १९ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

केन प्रमाणेन तदात्मकत्वं ज्ञातुं शक्यमित्यपेक्षायां वेदान्तवाक्य बलादित्याह—

द्रष्टृ श्रोतृ तथा मन्तृ विज्ञात्रेव तदक्षरम् ।
द्रष्ट्राद्यन्यन्न तद्यस्मात्तस्माद्द्रष्टाऽहमक्षरम् ॥ २० ॥

द्रष्टृश्रोत्रिति द्वाभ्याम् ॥ यद्द्रष्टृ श्रोतृ मन्तृ विज्ञातृ प्रसिद्धं तदक्षरमेव सर्वाधिष्ठानं ब्रह्मैवेति योजना । तथाच श्रुतिरक्षरं प्रकृ द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञात्रि'ति । तथा 'नान्यदतोऽस्ति द्र दतोऽस्ति श्रोतृ नान्यदतोऽस्ति विज्ञात्रि'त्युत्तरवाक्यार्थमाह—द्र तत् द्रष्ट्रादिप्रत्यक्स्वरूपं तस्मादक्षरादन्यन्न भवतीत्यर्थः । यस्मादेव तमेवाद्वयमात्मतत्त्वं श्रुतिसिद्धं तस्माद्द्रष्टाहमक्षरमित्युपसंहारः ॥ २

प्रत्यगात्मनोऽक्षरब्रह्मात्मत्वेऽपि कथमद्वयात्मत्वसिद्धिरित्याशङ्क खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'ति श्रुत्यर्थं वदन्नद्वयात्मत्वं सा

स्थावरं जंगमं चैव द्रष्टृत्वादिक्रियायुतम् ।
सर्वमक्षरमेवातः सर्वस्यात्माक्षरं त्वहम् ॥ २१ ॥

स्थावरमिति ॥ उपाधिरुपहितमुपाध्याधारश्चेति सर्वमक्षरमेव ऽहमक्षरं सर्वस्यात्मा स्वरूपं न मदन्यत्किमप्यस्तीत्यर्थः ॥ २१ ॥

स्थावरादिसर्वमक्षरमित्युक्ते सप्रपञ्चमेवाक्षरमात्मेति प्रतिभासत आगमिकमात्मज्ञानं स्फुटयति—

अकार्यशेषमात्मानमक्रियात्म क्रियाफलम् ।
निर्ममं निरहंकारं यः पश्यति स पश्यति ॥ २२ ॥

अकार्यशेषमिति ॥ अकार्यशेषत्वमकर्तृत्वम् । तत्र हेतुः—अक्रि क्रियास्वरूपतत्फलविलक्षणमित्यर्थः । क्रियातत्फलसंसर्गशून्यमिति व यतो निर्ममम् । तदपि कुतः, यतो निरहंकारम् । एवंविधमात्मानं क पश्यति स एव तत्त्वदर्शीत्यर्थः ॥ २२ ॥

आत्मविदोऽहंकाराद्यभावादकर्मशेषत्वमुक्तं प्रपञ्चयंस्तस्य कृतकृत्य

ममाहंकारयत्नेच्छाः शून्या एव स्वभावतः ।
आत्मनीति यदि ज्ञातमाध्वं स्वस्थाः किमीहितैः ॥ २

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

ममाहंकारेति ॥ आत्मनि स्वभावतः शून्या एवाविद्याप्रयुक्तदेहाद्यभिमानं विना न सन्तीत्यर्थः । हे मुमुक्षवः, यद्येवं ज्ञातं तर्हि स्वस्था निर्व्यग्राः सन्तः आध्वं तिष्ठत । किमीहितैः कर्मभिः कृत्यं, ज्ञानेनैव कृतकृत्यत्वात्कर्मणां चानधिकृतकृतानां विफलत्वाच्चेत्यर्थः ॥ २३ ॥

देहाद्यतिरिक्तात्मज्ञानवतः सर्वेषु पारलौकिककर्मस्वधिकाराभ्युपगमाद्-...त्यात्मविदोऽपि सफलं कर्मेत्याशङ्क्य तस्यात्मतत्त्वविच्वमेव नास्तीत्याह—

योऽहंकर्तारमात्मानं तथा वेत्तारमेव च ।
वेत्ति नात्मज्ञ एवासौ योऽन्यथाज्ञः स आत्मवित् ॥ २४ ॥

योऽहंकर्तारमिति ॥ कस्तर्ह्यात्मविदित्यत आह—योऽन्यथाज्ञ इति । ...योऽकर्तारमज्ञातारमभोक्तारं चात्मानं जानाति स आत्मतत्त्वविदित्यर्थः ॥२४॥

किमिति कर्तास्मीति जानतो नात्मवित्त्वमात्मन्येव कर्तृत्वादिप्रतिभासादि-...त्याशङ्क्य, कर्त्रविवेकनिबन्धनोऽयं भ्रम इत्यभिप्रेत्याह—

यथान्यत्वेऽपि तादात्म्यं देहादिष्वात्मनो मतम् ।
तथाऽकर्तुरविज्ञानात्फलकर्मात्मतात्मनः ॥ २५ ॥

यथान्यत्वेऽपीति ॥ यथा परमार्थतो देहादिभ्योऽन्यत्वेऽप्यात्मनस्तेषु ...तादात्म्यमाध्यासिकं मतमिष्टं तथाऽकर्तुरभोक्तुरविज्ञानादात्मनः फलकर्मात्मता ...ता । यथा स्थूलदेहात्मनोरभेदाध्यासान्मनुष्यत्वाद्यभिमानस्तथाहंकारप्रधा-...लिङ्गदेहाविवेकात्कर्तृत्वाद्यभिमानो मिथ्याबुद्धिरित्यर्थः ॥ २५ ॥

नन्वहंकारस्यैवात्मत्वात्कथमहंकारात्मनोरविवेक इत्युच्यत इत्यत आह—

दृष्टिः श्रुतिर्मतिर्ज्ञातिः स्वप्ने दृष्टा जनैः सदा ।
तासामात्मस्वरूपत्वादतः प्रत्यक्षतात्मनः ॥ २६ ॥

दृष्टिरिति ॥ दृष्ट्यादिशब्दैश्चक्षुरादिद्वारकान्तःकरणवृत्तयो निर्दिश्यन्ते । ...तास्तु सदैव स्वप्ने जनैर्दृष्टाः । सवृत्तिकस्यान्तःकरणस्य स्वप्ने वेद्याकारत्वात्तद्वे-...तान्यः साक्षी सिद्ध इत्यभिप्रायः । किंच तासां दृष्ट्यादीनामात्मस्वरूपत्वा-...दिति । अयमर्थः—सुषुप्ते सवृत्तिकस्यान्तःकरणस्याविद्यामात्रतयात्मन्यस्तम-...यादात्मनश्चानस्तमयात्स्वतस्तस्याद्वितीयापरोक्षचिन्मात्रतयावभासमानत्वाद्यु-...अन्तःकरणादहंकारादिरूपादात्मनो व्यतिरेकसिद्धिरिति । यत्त एवमत

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

आत्मनः प्रत्यक्षता साक्षिमात्रेण स्वयं प्रकाशमानतया नित्यापरोक्ष सिद्धेत्यर्थः ॥ २६ ॥

एवमशेषप्रमातृसाक्षिभूततया प्रत्यगात्मनो ब्रह्मत्वापादने सार्वं ऽन्यथा ज्ञः स आत्मविदित्यत्रोक्तमात्मवित्त्वं स्पष्टीकरोति—

परलोकभयं यस्य नास्ति मृत्युभयं तथा।
तस्यात्मज्ञस्य शोच्याः स्युः सब्रह्मेन्द्रा अपीश्वराः॥

परलोकभयमिति ॥ यस्य परलोकभयं परलोकनिमित्तं भयं साधु नाकरवं किमहं पापमकरव'मित्यादिरूपं नास्ति 'नैनं कृता इति श्रुतेः। तथा यस्य मृत्युभयं मरणभयं नास्ति 'न जीवो म्रि श्रुतेः। आत्मव्यतिरिक्तस्य द्वितीयस्यादर्शनात्। द्वितीयदर्शननिमि 'द्वितीयाद्वै भयं भवती'ति श्रुतेः। तस्यात्मज्ञस्य ब्रह्मेन्द्राद्या अपि संपन्नतया ईश्वरा अपि शोच्याः शोचनीयाः स्युरहो एते ऐ व्यग्राः कथं स्वस्थाः स्युरिति। तस्माद्यः परलोकमरणनिमित्तभयप्र रादिशून्यतया ब्रह्मनिष्ठः स एवात्मविन्न विपरीत इति सिद्धम् ॥ २

ब्रह्मेन्द्रादिभावस्य सर्वैः प्रार्थ्यमानत्वात्कथं शोच्यतेत्याशङ्क्य ब्रह्म ऊर्ध्वं न किमपि प्रार्थ्यमस्तीत्याशयेनाह—

ईश्वरत्वेन किं तस्य ब्रह्मेन्द्रत्वेन वा पुनः।
तृष्णा चेत्सर्वतश्छिन्ना सर्वदैन्योद्भवाऽशुभा ॥ २८ ॥

ईश्वरत्वेनेति ॥ सर्वत्र दैन्यस्योद्भवो यस्याः सा तथा अतएवाति प्रवृत्तिद्वारत्वात्सा तृष्णा चेत्सर्वतः सर्वात्मना सहमूलेन छिन्नेत्यर्थः श्रुतिः 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ म भवत्यत्र ब्रह्म समश्नुत' इति ॥ २८ ॥

'निर्ममं निरहंकारं यः पश्यति स पश्यती'त्युक्तं स्पष्टयन्नात्मज्ञ माह—

अहमित्यात्मधीर्या च ममेत्यात्मीयधीरपि।
अर्थशून्ये यदा यस्य स आत्मज्ञो भवेत्तदा ॥ २९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

अहमितीति ॥ यस्य शास्त्राचार्यानुगृहीतस्य पदार्थद्वयविवेकवतोऽहंम-
मेति चात्मात्मीयविषयधियावर्थशून्ये प्रयोजनशून्ये यदा स्याताम् । तत्प्र-
युक्तव्यवहारहीनः पुमान्यदा स्यादित्यर्थः । तदा स आत्मविद्भवेत् । देहादौ
तदनुबन्धे च व्यवहारकालेऽपि पूर्ववद्वस्तुत्वोल्लेखरहिततया आत्ममात्रदर्शी
सम्यगात्मविदित्यर्थः ॥ २९ ॥

यदैवमात्मज्ञानं वाक्याद्भवति तदा कृतकृत्यत्वान्न तस्य कार्यशेषता संभ-
वतीति प्रागुक्तमकार्यशेषत्वं प्रपञ्चयति—

बुद्ध्यादौ सत्युपाधौ च तथासत्यविशेषता ।
यस्य चेदात्मनो ज्ञाता तस्य कार्यं कथं भवेत् ॥ ३० ॥

बुद्ध्यादाविति ॥ जाग्रत्स्वप्नयोर्बुद्ध्यादावुपाधौ सति तथा सुषुप्तावसति
यस्यात्मनोऽविशेषता चेज्ज्ञाता । चेच्छब्दोऽसंदेहेऽपि संदेहवचनो वेदा-
श्चेत्प्रमाणमितिवत् । तस्याविशेषात्मज्ञस्य कार्यं कथं भवेत् । न कथंचिदि-
त्यर्थः ॥ ३० ॥

आत्मविदो नास्ति कार्यमित्यत्र हेत्वन्तरमाह—

प्रसन्ने विमले व्योम्नि प्रज्ञानैकरसेऽद्वये ।
उत्पन्नात्मधियो ब्रूत किमन्यत्कार्यमिष्यते ॥ ३१ ॥

प्रसन्न इति ॥ व्योम्नि व्योमसदृशे प्रसन्ने स्वतो दोषरहिते विमले
आगन्तुकमलवर्जिते । उक्तविशेषणद्वयसाधकं क्रमेण विशेषणद्वयं प्रज्ञानैक-
रसेऽद्वय इति । एतस्मिन्ब्रह्मण्युत्पन्ना आत्मधीरात्मेति मतिरेवंविधं ब्रह्मैवा-
हमिति बुद्धिर्यस्य तस्यात्मस्वरूपज्ञानादन्यत्किं कार्यमिष्यते तद्ब्रूत । न किम-
पीत्यर्थः ॥ ३१ ॥

ननु शास्त्राचार्यप्रसादादेवं तत्त्वेऽवगम्यमानेऽपि श्रेयोमार्गप्राप्तिप्रतिबन्ध-
कस्य शत्रोः संभवात्तत्परिहारार्थं किमप्यनुष्ठेयं स्यादिति चेन्नेत्याह—

आत्मानं सर्वभूतस्थममित्रं चात्मनोऽपि यः ।
पश्यन्निच्छत्यसौ नूनं शीतीकर्तुं विभावसुम् ॥ ३२ ॥

आत्मानमिति ॥ यथोष्णस्वभावस्य विभावसोः शीतस्वभावतापादनं न

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

संभाव्यते । तथा सर्वभूतात्मभूतस्य शत्रुमित्रादिसंभावना दुःसंपादे
ध्येयकल्पनावसर इत्यर्थः ॥ ३२ ॥

आत्मनः कर्मशेषत्वं किं सोपाधिकस्येष्यते निरुपाधिकस्य वेति
धमङ्गीकृत्य द्वितीयं दूषयति—

प्रज्ञाप्राणानुकार्यात्मा छायेवाक्षादिगोचरः ।
ध्यायतीवेति चोक्तो हि शुद्धो मुक्तः स्वतो हि सः ॥

प्रज्ञेति ॥ प्रज्ञा बुद्धिः । प्रज्ञाप्राणावनुकर्तुं शीलमस्तीति प्र
कारी । प्रज्ञाप्राणोपाधिक इत्यर्थः । छायेव सूर्यादिप्रतिबिम्बमिव
दिगोचरः इन्द्रियतद्द्वारकवृत्तिषु प्रतिबिम्बित आत्मा तदविवेका
'ध्यायतीव लेलायतीवे'ति श्रुत्योक्तस्तस्यां दशायां कर्मशेषत्व
स्वतःशुद्धो मुक्तश्च हि स आत्मा भवति । उदकानुगतत्वेन सूर्य
मत्तया भासमानत्वेऽपि न परमार्थतः सूर्यः कम्पादिमान्भवति
धिविगमे भेदविपर्यासादिविगमाद्द्वारहीनं कर्मात्मतत्त्वविदं
इत्यर्थः ॥ ३३ ॥

निरुपाधिकस्यात्मनो न कर्मशेषत्वमित्युक्तमुपपादयन् 'प्राणा
रे'हित्यादियतिधर्मविधिशेषतापि नास्यास्तीत्याह—

अप्राणस्यामनस्कस्य तथाऽसंसर्गिणो दृशेः ।
व्योमवद्व्यापिनो ह्यस्य कथं कार्यं भवेन्मम ॥ ३४ ॥

अप्राणस्येति ॥ क्रियाशक्तिप्राणहीनस्य ज्ञानशक्तिमनोहीनस्य
ऽसंसर्गिणोऽसङ्गस्य व्योमवदपरिच्छिन्नस्य स्वतश्चलनशक्तिरहित
दृशेश्चिदेकरसस्यास्यैवंविधस्य मम कथं कार्यं भवेत् । न कथमपीत्य

"तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्यासने यु
ात्मविशुद्धय' इत्यादिभगवद्वचनान्मनःसमाधानानुष्ठानेनात्मशु
ध्यावशिष्यत इत्याशङ्क्य, तस्याः प्रागेव सिद्धत्वान्नेदानीमस्त्यवसर
त्याह—

असमाधिं न पश्यामि निर्विकारस्य सर्वदा ।
ब्रह्मणो मे विशुद्धस्य शोध्यं नान्यद्विपाप्मनः ॥ ३५

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

असमाधिमिति ॥ विकारो ह्यसमाधिर्नाम तद्धेतूपाधिशून्यतया सदा निर्विकारस्य तन्न पश्यामि। ब्रह्मभूतस्यातएव सर्वदा विशुद्धस्य प्रागेव विपाप्मनो नित्यनिवृत्तकल्मषस्य शोध्यं चान्यन्न पश्यामीत्यर्थः ॥ ३५ ॥

नन्वन्यन्न पश्यामीत्ययुक्तं गन्तव्यब्रह्मलोकादेर्गमनसाधनस्यार्चिरादिमार्गस्य च ब्रह्मविदोऽपि ज्ञातव्यत्वादित्याशङ्क्य, सगुणब्रह्मविदस्तत्सत्त्वेऽपि न निर्गुणब्रह्मविदस्तथात्वमिति सहेतुकमाह—

गन्तव्यं च तथा नैव सर्वगस्याचलस्य च।
नोर्ध्वं नाधस्तिरो वापि निष्कलस्यागुणत्वतः ॥ ३६ ॥

गन्तव्यमिति ॥ गन्तव्यमिति भावकर्मणोस्तन्त्रेण ग्रहणम्। तथाच सर्वगत्वेन चलनासामर्थ्याद्गन्तव्यं नैव पश्यामि। गमनधात्वर्थं नैव पश्यामीत्यर्थः। तथा गन्तव्यं गत्वा प्राप्यं देशं स्थानविशेषं न पश्यामि। कुत इत्यत आह—नोर्ध्वमिति। तिर इति पुरस्तात्पश्चाद्दक्षिणं चोत्तरं च नैव पश्यामीत्युपपन्नः। कुतो देशभेदाभाव इत्यत आह—निष्कलस्येति। पूर्णस्येत्यर्थः। कुतो निष्कलत्वं ज्ञानसुखादिगुणात्मकावयवयोगादित्यत आह—अगुणत्वत इति। ज्ञानसुखयोः स्वरूपत्वात्संसर्गिगुणस्य चासङ्गस्यासंभवाद्गुणतोऽपि विभागशून्यस्य न गन्तव्यं प्राप्यं गतिः प्राप्तिर्वा विद्यत इति न तत्साधननिपादनविधानावकाश इत्यर्थः ॥ ३६ ॥

किंचाज्ञानोपाधिं विनात्मनि नित्यमुक्ते कस्यापि विशेषस्योत्प्रेक्षितुमशक्यत्वादज्ञानस्य च ज्ञानस्वभावे वस्तुतोऽसंभाव्यमानत्वान्न कदाप्यात्मनः क्रियायोग्यतेति स्थिते कुत इदानीमज्ञानप्रतिभासस्याप्यभावे कर्मविधिशेषता स्यादित्यभिप्रेत्याह—

चिन्मात्रज्योतिषो नित्यं तमस्तस्मिन्न विद्यते।
कथं कार्यं ममैवाद्य नित्यमुक्तस्य शिष्यते ॥ ३७ ॥

चिन्मात्रेति ॥ तस्मिन्नात्मनि तमः स्वरूपतः प्रतिभासतोऽपि न विद्यते। कुतः चिन्मात्रज्योतिषः। ज्योतिष्ट्व इति भावप्रधानो निर्देशः। सुगममन्यत् ॥ ३७ ॥

किंचाज्ञानाभावे बाह्यान्तःकरण एतत्संसर्गाभावात्तं विना प्रवृत्त्यभावान्न कर्मावसर इत्याह—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अमनस्कस्य का चिन्ता क्रिया वानिन्द्रियस्य का।
अप्राणो ह्यमनाः शुभ्र इति सत्यं श्रुतेर्वचः ॥ ३८॥

अमनस्कस्येति ॥ प्राणमनोविहीनत्वे प्रमाणमाह—अप्राणो हीति श्रुतेर्वचः सत्यं सत्यार्थं निर्दोषतया स्वतःप्रमाणत्वादित्यर्थः ॥ ३८॥

अपराह्णादिकालस्य विविक्तपूतादिदेशस्य प्राच्यादिदिग्विशेषस्य पराहित्यराहूपरागादिनिमित्तस्य च प्रतीक्षाया आत्मचिन्तने कर्तव्ये कार्याभाव इत्याशङ्क्याह—

अकालत्वाददेशत्वाददिक्त्वादनिमित्ततः।
आत्मनो नैव कालादेरपेक्षा ध्यायतः सदा ॥ ३९॥

अकालत्वादिति ॥ सदात्मानं ध्यायतो यतेर्नैव कालादेः योजना। तत्र हेतुरात्मनोऽकालत्वादित्यादिः। आत्मस्वरूपस्य बन्धनत्वान्न तद्ध्याने तदपेक्षेत्यर्थः। तथाचाह भगवान्सूत्रकारः 'तत्राविशेषात्' इति ॥ ३९॥

ब्रह्मविदो देशकालादिसव्यपेक्षे कर्मण्यपेक्षाभावेऽपि प्रयागादितीर्थापेक्षा 'गङ्गातीरे वसेन्नित्यं भिक्षुर्मोक्षपरायणः' इत्यादिस्मृतिविहितत्वादित्याशङ्क्य, ब्रह्मात्मज्ञानरूपे तीर्थे साक्षान्मुक्तिहेतौ स्नातस्यात्मविदो न रापेक्षास्तीत्याह—

यस्मिन्देवाश्च वेदाश्च पवित्रं कृत्स्नमेकताम्।
व्रजेत्तन्मानसं तीर्थं यस्मिन्स्नात्वाऽमृतो भवेत् ॥ ४०॥

यस्मिन्निति ॥ यस्मिन्ब्रह्मात्मस्फूर्तिरूपे देवास्तत्तत्तीर्थस्थानविशेषाधिष्ठातारो माधवविश्वेश्वररामेश्वरत्रिविक्रमादयः पूजादर्शनस्पर्शनस्मरणादिभिः पावनाः प्रसिद्धास्तथा वेदाश्च ऋग्यजुःसामाथर्वाख्या अध्ययनमननानुष्ठानादिभिः पावयन्ति। तथा कृत्स्नं पवित्रं पावनं तीर्थविशेषं मोच्चारणादि, एतत्सर्वमेकत्वं व्रजेत्। यस्मिन्सरित इव सागरे स्यर्थः। सर्वात्मकब्रह्माविर्भावरूपत्वादिति परमो हेतुरत्रानुसंधेयः। मनसि वेदान्तमहावाक्यजनितान्तःकरणवृत्तिरूपे समुल्लसितं संसारपापमूलाविद्यातारकम्। तीर्थत्वं स्पष्टयति—यस्मिन्निति।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

नेमज्योदकराशौ निक्षिप्तोदकविन्दुवत्तदेकतां प्राप्य इत्येतत् अमृतो भवे-
न्निर्विशेषनित्यात्मस्वरूप एव भवेत्। तस्मिंस्तीर्थे नित्यं निमग्नस्य न तीर्था-
न्तरापेक्षेति भावः। तथाच श्रुतिः 'शतं शुक्राणि यत्रैकं भवन्ति सर्वे वेदा
यत्रैकं भवन्ति सर्वे होतारो यत्रैकं भवन्ति स मानसीन आत्मा जनानां'
इति। 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा
भवति गौतमे'ति च ॥ ४० ॥

एवं कृतार्थत्वापादकं ज्ञानतीर्थं केनोपायेन प्राप्यमित्यपेक्षायां पूर्वोक्तः
पदार्थविवेक एव तल्लाभोपाय इति वक्तुं प्रथमं स्थूलदेहान्यत्वमात्मनो
...पादयति—

न चास्ति शब्दादिरनन्यवेदनः परस्परेणापि न चैव दृश्यते ।
...रेण दृश्यास्तु यथा रसादयस्तथैव दृश्यत्वत एव दैहिकाः ॥४१॥

न चास्तीति ॥ शब्दादिर्गन्धान्तो विषयोऽनन्यवेदनो न चास्ति ।
स्वयंप्रकाशस्वभावो नास्तीत्यर्थः। तथा परस्परेणापि शब्देन स्पर्शः स्पर्शेन शब्द
एवं परस्परेणापि न चैव दृश्यते प्रकाश्यते। जडत्वादेवेत्यर्थः। दर्शनम-
न्तरेण व्यवहारानुपपत्तेर्दर्शनस्य स्वतः परस्परतश्चाभावे परिशेषात्परेण स्ववि-
लक्षणेनाजडेन प्रकाश्या एव। तुशब्दोऽवधारणार्थः। तथाच दैहिका अपि
शब्दादयः परेण दृश्याः दृश्यत्वाद्यथा बाह्यरसादयस्तथैवेमे तस्मात्तथेत्य-
र्थः ॥ ४१ ॥

तदेवं पञ्चभूतात्मकात्स्थूलाद्देहात्तद्द्रष्टारमात्मानं विविच्य सूक्ष्मादपि
...त्तं विविनक्ति—

...हंममेत्येषणयत्नविक्रियासुखादयस्तद्वदिह प्रदृश्यतः ।
...यत्वयोगाच्च परस्परेण ते न दृश्यतां यान्ति ततः परो भवान्४२

अहंममेति ॥ अहमहंकारः। एषणयत्नविक्रियासुखादयः कामप्रयत्नकर्तृत्व-
भोक्तृत्वसुखदुःखमोहद्वेषादयो ममेति निर्दिश्यमाना मनोवृत्तयस्तद्वच्छब्दा-
दिवन्नान्यवेदनाः। कुतः। इह व्यवहारभूमौ प्रदृश्यतो दर्शनकर्मत्वात्ते परस्प-
रेणापि दृश्यतां न यान्ति न प्राप्नुवन्ति। दृश्यत्वयोगादेव परिशेषात्तेषां द्रष्टा
...स्तेभ्योऽहंकारादिभ्यः। तत्संघातरूपाल्लिङ्गदेहादिति यावत्। भवानात्मा
...ऽन्य इति योजना ॥ ४२ ॥



C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

यद्यप्येवं देहद्वयग्राहकत्वात्तदतिरिक्त एवात्मा तथापि तत्संबन्धे
न नित्यमुक्तरूपतेत्याशङ्क्याह—

अहंक्रियाद्या हि समस्तविक्रिया सकर्तृका कर्मफलेन
चितिस्वरूपेण समन्ततोऽर्कवत्प्रकाश्यमानाऽसिततात्मनो

अहंक्रियेति ॥ अहंक्रियाहंकरणमहंममेत्येवमाद्या समस्तविक्रि
स्वरूपेण चैतन्यप्रकाशात्मनाऽर्कवदर्केणेव समन्ततः प्रकाश्यमाना
आत्मनोऽसितताऽबद्धता सिद्धा । विक्रियासंबन्धस्यापि दृश्यत
नुपपत्तेर्न मुक्तिविरोध इत्यर्थः ॥ ४३ ॥

एवं देहद्वयाविविक्तस्याप्यात्मनः प्रतिदेहं परिच्छिन्नत्वात्
पूर्णता सिध्येदित्याशङ्क्याह—

दृशिस्वरूपेण हि सर्वदेहिनां वियद्यथा व्याप्य मनांसि
अतो न तस्मादपरोऽस्ति वेदिता परोऽपि तस्मादत ए

दृशिस्वरूपेण हीति ॥ हि यतः आत्मा सर्वदेहिनां मनांसि
पेणैव व्याप्य घटादीनि वियदिवावस्थितो न परिच्छिन्नरूपेण ।
त्मनश्चितिस्वरूपादपरो जीवो वेदिता नास्ति । तथा पर ईश्वरो
दन्यो वेदिता नास्ति, चितिस्वभावत्वाविशेषत्वात् तस्मादेक
आत्मा न स्वरूपभेदवानुपाधिपरामर्शमन्तरेणाविभाव्यमानभेद
दिति भावः ॥ ४४ ॥

देहद्वयसाक्षी ब्रह्मस्वभावश्चेदात्मा कथं तर्हि तस्य नास्तिता
दित्याशङ्क्य स्वदोषवशादेवेत्यभिप्रेत्याह—

शरीरबुद्ध्योर्यदि चान्यदृश्यता निरात्मवादाः सुनिरा
परश्च शुद्धो ह्यविशुद्धिकर्मतः सुनिर्मलः सर्वगतोऽसित

शरीरेति ॥ शरीरबुद्ध्योः स्थूलसूक्ष्मदेहयोर्यद्यन्येन नित्यस
पूर्वोक्तन्यायेन सिद्धा तदा निरात्मवादाः शून्यक्षणिकाद्यात्मवा
कृता एवेत्यर्थः । तथाच अविशुद्धिकरात्कर्मतो धर्माधर्मादि
परो व्यतिरिक्तस्तत्साक्षित्वादतश्च शुद्धोऽकर्ताऽतश्च सुनिर्मलः कर्म

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

क्लेशेनापि रहितः सर्वगतोऽपरिच्छिन्नोऽत एवासितो बन्धनशून्यश्चेत्यर्थः॥४५॥

भवेदेतदेवं यदि शरीरबुद्ध्योरात्मदृश्यता सिध्येत्सा तु न संप्रतिपन्नेत्याशङ्क्य तयोरात्मदृश्यत्वाभावे बाधकमाह—

घटादिरूपं यदि तेन गृह्यते मनः प्रवृत्तं बहुधा स्ववृत्तिभिः।
अशुद्ध्यचिद्रूपविकारदोषता मतेर्यथा वारयितुं न पार्यते॥४६॥

घटादीति॥ यदि ते तव मते स्ववृत्तिभिर्बहुधा प्रवृत्तं घटादिरूपं विषयाकारं मनोऽन्येनात्मना न गृह्यते न प्रकाश्यते तदात्मनो मनोन्यत्वासिद्धावशुद्ध्यचिद्रूपविकारदोषदुष्टता यथा मतेर्बुद्धेस्तथा वारयितुं न शक्यते। अस्य साक्षित्वानभ्युपगमे सति मतिदोषाणां तस्मिन्नवश्यंभावात्तथाचानिर्मोक्षप्रसङ्ग इत्यर्थः। अथवा यद्यपि शरीरद्वयग्राहकतया तदन्य आत्मा नित्यशुद्धरूपस्तथापि दृश्यसंसर्गकृतदोषो न परिहर्तुं शक्यते। स्वचैतन्याभेदेन हि दृश्यमवभासयन्द्रष्टा भवति। अन्यथा दृश्यस्यापरोक्षानुपपत्तेरतो विशुद्धत्वानुपपन्नमिति शङ्कते—घटादिरूपमिति। स्ववृत्तिभिर्बहुधा प्रवृत्तं घटाद्याकारं मनो यदि तेन चेतनात्मना गृह्यते तदा तस्य दृश्यसंबन्धादशुद्ध्यादिदोषता वारयितुं न पार्यते। यथा मतेश्चैतन्यसंसर्गाच्चिच्छायतां वारयितुं न पार्यते तद्वदित्यर्थः॥ ४६॥

स्यादेतदेवं यदि मतिवत्सावयवं परिच्छिन्नं परिणामि चात्मस्वरूपं स्यान्नचात्मस्वरूपमतो नास्याशुद्ध्यादिशङ्कावकाश इति दृष्टान्तेनोपपादयन्नुत्तरमाह—

यथा विशुद्धं गगनं निरन्तरं न सज्जते नापि च लिप्यते तथा।
समस्तभूतेषु सदैव तेष्वयं समः सदात्मा ह्यजरोऽमरोऽभयः ४७

यथा विशुद्धमिति॥ विशुद्धं परिणामविक्रियामलरहितं निरन्तरमपरिच्छिन्नमतएव निरवयवं चेति द्रष्टव्यम्। एवंविधं यथा गगनं न सज्जते काष्ठेन जतुवन्न संलग्नं भवति। नापि लिप्यते भल्लातकरसेनेव वस्त्रादि। तथात्मापि शुद्धो निरन्तरो निरवयवश्च शास्त्रान्निश्चितो न बुद्ध्यादिषु सज्जते नापि दोषेण लिप्यत इत्यर्थः। अत्र शास्त्रप्रसिद्धिं हिशब्देन द्योतयन्हेतुमाह—समस्तभूतेष्विति। तत्तदभिमानिदेवतासहितेष्वपि समस्तभूतेषु अयमात्मा सदा समो हि यस्मात्तस्मादजरोऽमरोऽभयो नित्यशुद्ध इत्यर्थः। तथाच शास्त्रं यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मा
न्यमृत' इति । 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् । विनश्यत्स्वविनश्यन्तं
यः पश्यति स पश्यति' । 'न लिप्यते लोकदुःखेन बाह्य' इत्यादि।

किंच दृश्यस्य बाधितत्वादपि न तत्कृतदोषसंबन्ध आत्मनः
नहि मिथ्यार्थेन सत्यं वस्तु संसृज्यते । कथं बाधितत्वमिति चेत्
निषिध्यमानत्वाद्रज्जुसर्पादिवदित्यभिप्रेत्याह—

अमूर्तमूर्तानि च कर्मवासना दृशिस्वरूपस्य बहिः प्रकल्पिताः ।
अविद्यया ह्यात्मनि मूढदृष्टिभिरपोह्य नेतीत्यवशेषितो दृशिः ॥

अमूर्तेति ॥ अमूर्तं च मूर्तानि च अमूर्तमूर्तानि पञ्चमहा
स्थूलानि 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चे'ति श्रुतौ दृशिस्व
संबन्धीनि श्रुतानि । च अपरं कर्मवासनाश्रयं लिङ्गमिति या
'तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वास' इत्यत्रोक्तं,
रणं मूढबुद्धिभिरविद्यया मोहरूपया आत्मनि दृशिस्वरूपे प्रत्यगा
प्रकल्पितं, वासनाप्रकल्पिताऽमूर्तमूर्तानि प्रकल्पितानीति योजना
दविद्ययाध्यस्तमात्मनि सप्रपञ्चत्वं तस्मान्नेतिनेतीति वीप्सया
बहिरपोह्यात्मविशेषणतारूपं बाधित्वा केवलं दृशिश्चिन्मात्र
'सत्यस्य सत्यम्' इतिश्रुत्येति योजना । 'यदा प्रकल्पिता' इति
पाठस्तदैवं योजना—अविद्यया मूढदृष्टिभिरात्मनि प्रत्यग्रूपे प्रकल्
पिताः कर्मवासना अमूर्तमूर्तानि च भूतानि दृशिस्वरूपस्य
ब्रह्मणो बहिर्नेतिनेतीत्यपोह्य दृशिरेवावशेषितो निषेधावधिभूत
यस्मात्तस्मान्नास्यात्मनि दोषसंसर्ग इति ॥ ४८ ॥

स्थूलसूक्ष्मप्रपञ्चस्य श्रुत्या बाधमुक्त्वा दृश्यत्वादिति युक्त्यापि

प्रबोधरूपं मनसोऽर्थयोगजं स्मृतौ च सुप्तस्य च दृश्यते
तथैव देहप्रतिमानतः पृथग्दृशेः शरीरं च मनश्च दृश्यतः

प्रबोधेति ॥ अर्थयोगाद्विषयसंबन्धाज्जातं मनसः प्रबोधरूपं
वृत्तिरूपं यत्तत्स्मृतौ स्मृत्यवस्थायां सुप्तस्य पुंसः स्वप्नावस्थायां
कारमेव दृश्यते । तथथा स्वप्नस्मृत्योरर्थाभावेऽप्यर्थाकारं दृश्य

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

...पृथगेव नात्मविशेषणं तद्दृश्यत्वात्तथैव दृश्यतो दृश्यत्वहेतोः शरीरं मनश्च ...त्वद्देहप्रतिमानतो देहप्रतिमानं च। तसेः सार्वविभक्तिकत्वाङ्गीकारात्प्रथमार्थः ...दि। र इह गृह्यते। देहद्वयवासनारूपं च दृशेरात्मनः पृथक् न दृशिविशेषणमिति ...योजना। अत आत्मन्येव दृश्यस्यात्मनि निषेधान्मिथ्यात्वं शुक्तिरूप्यादिव-...सिद्धमिति भावः॥ ४९॥

ननु श्रुत्या यद्यध्यस्तनिषेधेनात्मा प्रतिपाद्यते तदा निवृत्तसंसारत्वविशेष...योगाद्विक्रियावत्त्वेनानित्यत्वादिदोषप्रसङ्ग इति चेन्नेत्याह—

**स्वभावशुद्धे गगने घनादिके मलेऽपयाते सति चाविशेषता।**
**यथाच तद्वच्छ्रुतिवारितद्वये सदाऽविशेषो गगनोपमे दृशौ॥५०॥**

स्वभावेति॥ यथा स्वभावशुद्धे शुद्धस्वभावे गगने अधिष्ठाने घनादिके ...ले सति तस्मिन्नपयाते वाऽविशेषता न विशेषः कश्चिदस्ति। अविक्रियमेव ...दा गगनमित्यर्थः। तद्वद्दृशावात्मन्यधिष्ठाने गगनोपमे स्वभावशुद्धे श्रुत्या ...रितं बाधितं द्वयं यस्मिंस्तस्मिन्सदैवाविशेषः कूटस्थतेति योजना। तथा ...संसारनिवृत्तेर्मिथ्यार्थप्रतियोगिकाया अधिष्ठानदृगात्मव्यतिरेकेणानिरूपणाच्च ...ऽपि विशेष इति भावः॥ ५०॥

इति चतुर्दशं स्वप्नस्मृतिप्रकरणम्॥ १४॥

---

## नान्यदन्यत्प्रकरणम् १५

ननु स्वभावशुद्ध आत्मा तथा सति साधनवैयर्थ्यात्किंतु संसारिस्वभाव ...व सन् ज्ञानध्यानादिसाधनानुष्ठानेन स्वभावशुद्धब्रह्मस्वरूपो भविष्यतीति ...चिदेकदेशीयाः प्रतिपेदिरे तन्न श्रद्धेयं मुमुक्षुभिस्तस्य श्रुतियुक्तिबाधितत्वा-...दित्याह—

**नान्यदन्यद्भवेद्यस्मान्नान्यत्किंचिद्विचिन्तयेत्।**
**अन्यस्यान्यत्वभावे हि नाशस्तस्य ध्रुवो भवेत्॥ १॥**

नान्यदिति॥ जीवब्रह्मणोरत्यन्तं भेद इष्यते किंवा भेदाभेदौ। नान्त्यौ। ...रुद्धस्वभावतया ब्रह्माहमित्येकरूपध्यानज्ञानयोरसंभवात्तदसंभवे चासंसा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रिब्रह्मभावफलानिष्पत्तेरिति मनसि निधायाद्ये दोषमाह—नान्य स्मादिति । यस्मादन्यज्जीवरूपं स्थितं सदन्यद्ब्रह्म न भवेत् विरोधात् । तथा तदेव ब्रह्मणोऽन्यज्जीवरूपं वस्तु नष्टं सदन्यद् नष्टत्वादेव तस्य ब्रह्मभावं प्राप्तुरभावादिति योजना । 'ब्रह्मैव स ती'ति श्रुतिविरोधः स्फुट एवेति नात्रोदाहृतः । यस्मादेवं श्रुति मिदं मतं तस्मात्किंचिदीपन्मात्रमप्यन्यद्ब्रह्मेति न विचिन्तयेन्मुमुक्षुः किं त्वहमेव ब्रह्म ब्रह्मैवाहमिति भेदोपमर्देनैकरूपमेवात्मवस्तु स्यर्थः । नन्वन्यस्याप्यन्यात्मता दृष्टा साधनविशेषसाध्या यथा गात्ताम्रादेरपि सुवर्णात्मता तद्वदिहापि स्यादित्याशङ्क्याह—भेदं जीवस्य स्वविरुद्धस्वभावस्यान्यब्रह्मण्येकीभावे तप्तायोगोलकप्रविष्ट वत्तस्य नाशो ध्रुवो भवेत् । तथाच न ब्रह्मभावः पुरुषार्थः किंत्व दित्यर्थः । दृष्टान्तोऽसंप्रतिपन्नो वस्त्ररूपाभिभावकनील्यादिवद् ताम्ररूपाभिभावकमात्रत्वात्कालान्तरे सुवर्णाकारतापगमदर्शनाच्च स्ततश्च भ्रममात्रं तदित्यभिप्रायः ॥ १ ॥

नन्नु यद्येवमन्यत्र ध्येयं स्वात्मनि च ध्यानं न संभवत्येकस्मिन् भावायोगात्कथं तर्हि निदिध्यासनविधिरिति चेदन्यथैवोपपत्तेर्न आस्थेय इत्याह—

स्मरतो दृश्यते दृष्टं पटे चित्रमिवार्पितम् ।
यत्र येन च तौ ज्ञेयौ सत्त्वक्षेत्रज्ञसंज्ञकौ ॥ २ ॥

स्मरत इति ॥ दृष्टं नीलपीतादि स्मरतः पुंसो यत्रान्तःकरणे रूपं पटेऽर्पितं चित्रमिव दृश्यते येन च चैतन्यात्मना दृश्यते तौ सत्त्वक्षेत्रज्ञसंज्ञकौ यत्र दृश्येते तत्सत्त्वं येन दृश्यते स क्षेत्रज्ञ तथाचात्मा निदिध्यासितव्य इति विधिना नैरन्तर्येण त्वंपदार्थ दनमेव कर्तव्यतयोच्यते विविक्तत्वमर्थस्यैव ब्रह्मत्वादहंब्रह्मास्मीति भवसंभवात्संसारनिवृत्तिफलसिद्धिः । अन्यभावनायां तु प्रागुक्त स्यान्यात्मतायोगात्संसारानिवृत्तेर्निष्फलो विधिः स्यादिति भावः ॥ २ ॥

अन्तःकरणस्याप्रत्यक्षत्वात्कथं स्मृत्यवस्थायां तस्मिन्नीलपीत दृश्यत आह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

फलान्तं चानुभूतं यद्युतं कर्त्रादिकारकैः ।
स्मर्यमाणं हि कर्मस्थं पूर्वं कर्मैव तच्चितः ॥ ३ ॥

फलान्तमिति ॥ फलान्तं सुखादिफलावसानं कर्त्रादिकारकैर्युतं यद्वृत्तं पूर्वमनुभूतं तदिदानीं स्मर्यमाणं कर्मस्थं दृश्यनिष्ठं दृश्यते न द्रष्टृनिष्ठम्, हि यस्मात्तस्मात्पूर्वमपि तत्स्मर्यमाणस्याधिकरणमन्तःकरणं चित आत्मनः कर्मैव । दृश्यमेवेत्यर्थः । अयं भावः—पूर्वानुभूतविषयाकारा हि वृत्तिरन्तःकरणपरिणामात्मिका स्मृतिरित्युच्यते । तस्यां हि विषयो भासमानः साश्रयो भासते । नहि तदा साक्षिणानुभूयमानस्य विषयस्य बहिराश्रयेऽवस्थानमस्ति । तथाचेदं स्मरामीति परामर्शयोग्यतया दृश्यस्थतयानुभवस्यावश्यंभावात्तदा चित्तमेव स्मर्यमाणाधिकरणतया दृश्यत इति सिद्धमन्तःकरणस्य साक्षिप्रत्यक्षत्वमिति ॥ ३ ॥

आत्मैव द्रष्टा दृश्यं चेति भाट्टा मेनिरे, अतः स्वगतमेव वासनारूपमात्मा पश्यतीतीदं स्मरामीत्यनुभवस्यान्यथासिद्धत्वान्नान्तःकरणस्य साक्षिप्रत्यक्षतेत्याशङ्क्याह—

द्रष्टुश्चान्यद्भवेद्दृश्यं दृश्यत्वाद्घटवत्सदा ।
दृश्याद्द्रष्टा सजातीयो न धीवत्साक्षितान्यथा ॥ ४ ॥

द्रष्टुश्चेति ॥ विमतं दृश्यं द्रष्टुरत्यन्तं भिन्नं दृश्यत्वाद्घटवदित्युक्ते द्रष्टृदृश्ययोर्भेदेऽपि परिणामत्वेन साजात्यसंभवाद्द्रष्टुः सजातीयमेतद्दृश्यमित्याशङ्क्याह—दृश्यादिति । द्रष्टा सदैव दृश्यासजातीयो दृश्यांशस्याचेतनत्वादात्मत्वानुपपत्तेरित्यर्थः । विपक्षे दोषमाह—न धीवदिति । अन्यथा द्रष्टृदृश्ययोरसजातीयत्वानङ्गीकारे द्रष्टुः परिणामित्वाद्धीवत्साक्षिता आत्मनो न स्यादित्यर्थः ॥ ४ ॥

ननु भवत्येवात्मा साक्षी तस्य ब्राह्मण्यादिजातिमत्तया सविशेषत्वात्कर्माधिकारित्वेन परिणामित्वोपपत्तेरित्याशङ्क्याह—

स्वात्मबुद्धिमपेक्ष्यासौ विधीनां स्यात्प्रयोजकः ।
जात्यादिः शववत्तेन तद्भानात्मतान्यथा ॥ ५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वात्मेति ॥ असौ जात्यादिर्ब्राह्मणत्वादिः । आदिशब्दा
गृह्यते । स्वात्मबुद्धिं स्वस्मिन्नात्मीयाभिमानलक्षणां मिथ्यादृष्टिमपे
प्रयोजकः प्रवर्तकः स्यान्नान्यथा । यथा शव उत्क्रान्तप्राणो देहो न
मम पिता वेत्यध्यासानुसारेण संस्कारप्रयोजको दृश्यते तद्वत्
इति योजना । तेन हेतुना तद्वच्छववदेव जात्यादिरात्मधर्मो न भ
अन्यथा जात्यादिमत्त्वे स्वात्मनो घटादिवदनात्मता प्रसज्येतेति बो
तस्मात्साक्ष्येवात्मा न कर्माधिकारितया परिणामीति भावः ॥ ५ ॥

ननु नाध्यासनिबन्धनं कर्तृत्वं विदुषोऽपि मोक्षाय क्रियानु
श्रेत्याह—

न प्रियाप्रिय इत्युक्तेर्नादेहत्वं क्रियाफलम् ।
देहयोगः क्रियाहेतुस्तस्माद्विद्वान्क्रियास्त्यजेत् ॥ ६ ॥

न प्रियेति ॥ अदेहत्वमशरीरत्वं हि मोक्षस्तत्र क्रियाफलं
प्रसिद्धे । ते तु नाशरीरस्य दृष्टे श्रुते वा । 'अशरीरं वाव सन्तं न
स्पृशतः' इत्युक्तेः । श्रुत्यैवमुक्तत्वादित्यर्थः । क्रिया हेतुर्यस्य सः क्रि
योगः, क्रियया देहसंबन्ध एव साध्यो न मोक्ष इत्यर्थः । यस्मा
द्विद्वांश्च कर्मसाध्या मुक्तिः किंतु ज्ञानैकसाध्येति जानन् क्रि
साहंकाराणि कर्माणि त्यजेत्, संन्यस्य श्रवणादिनिष्ठो भवेदित्यर्थः ।

ननु सर्वेषां कर्मणामात्मकर्तव्यत्वप्रतीतेर्न विद्वान्क्रियास्त्यक्तुं
चेन्नेत्याह—

कर्मस्वात्मा स्वतन्त्रश्चेन्निवृत्तं च तथेष्यताम् ।
अदेहत्वे फलेऽकार्ये ज्ञाते कुर्यात्कथं क्रियाः ॥ ७ ॥

कर्मस्विति ॥ आत्मा चेत्कर्मसु स्वतन्त्रः कर्ता तर्हि निवृत्तं च
रूपं च तथेष्यताम् । यथा रागादिमान् प्रवृत्तिलक्षणे कर्मणि
विशुद्धसत्त्वो वीतरागस्तत्त्यागेऽपि स्वतन्त्र इष्यतां, कर्मसाध्यफला
भावे कर्मत्यागस्यार्थप्राप्तत्वादित्यर्थः । एतदेव स्पष्टयति—अदेह
देहसंबन्धशून्ये फले मोक्षलक्षणे अकार्ये केनापि कर्मणाऽसाध्ये
ज्ञाते सति क्रियाः कथं कुर्यान्न कुर्यादेव, ताभिः प्रयोजनाभावा

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

किं क्रियापरित्यागमात्रेणाकार्यं विदेहकैवल्यं प्राप्यते नेत्याह—

जात्यादीन्संपरित्यज्य निमित्तं कर्मणां बुधः ।
कर्म हेतुविरुद्धं यत्स्वरूपं शास्त्रतः स्मरेत् ॥ ८ ॥

जात्यादीनिति ॥ बुधः पण्डितो बुद्धिमान् कर्मणां निमित्तभूताञ्जात्यादीन्संपरित्यज्य जात्याद्यभिमानं परित्यज्य यत्स्वरूपं कर्म हेतुविरुद्धं कर्मनैमित्तोपमर्दकं शुद्धात्मस्वरूपं तच्छास्त्रतो यथा शास्त्रोक्तं तथा स्मरेत्, अनुचिन्तयेदित्यर्थः ॥ ८ ॥

शास्त्रमेवोदाहरन्स्मर्तव्यमात्मरूपं विशदयति—

आत्मैकः सर्वभूतेषु तानि तस्मिंश्च खे यथा ।
पर्यगाद्व्योमवत्सर्वं शुक्रं दीप्तिमदिष्यते ॥ ९ ॥

आत्मैक इत्यादिना ॥ 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सत' इति मन्त्रार्थः पूर्वार्धेनोच्यते । 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्ध'मिति मन्त्रार्थं सार्धश्लोकेनाह—पर्यगादिति । एषाक्षरयोजना । सर्वभूतेष्वहमेक एवात्मा न चेतनभेदोऽस्ति, तर्हि किं भूतान्यधिकरणमात्मनो नेत्याह—तानीति । तानि च भूतानि तस्मिन्नात्मन्येवाध्यस्तानि न ततः पृथग्वर्तन्ते । तथाच स्वाध्यस्तसकलविकारानुस्यूतसत्तास्फूर्तिरूपो विकारोपमर्देनानुसंधेय इत्यर्थः । खे यथेति । अन्तःसुषिररूपेण बहिरवकाशरूपेण वर्तमाने आकाशे यथा भूतचैतन्यस्तथेत्यर्थः । पर्यगादात्मा व्योमवत्स्वसत्तामात्रेण परि समन्तादगाद्व्यावान् । सर्वमशेषमात्मना न किंचिदव्याप्तमस्तीत्यर्थः । तथाच ब्राह्मणं नैनेन किंचनानावृतं नैनेव किंचनासंवृत'मिति । शुक्रमिति मन्त्रपदं तस्य व्याख्यानं दीप्तिमदिति । प्रकाशस्वभावं शुद्धं तदात्मस्वरूपमिष्यत इत्यर्थः ॥ ९ ॥

'अव्रणमस्नाविरं'इति पदयोरर्थमाह—

व्रणस्नाय्वोरभावेन स्थूलं देहं निवारयेत् ।
शुद्धापापतयालेपं लिङ्गं चाकायमित्युत ॥ १० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्रणेति ॥ क्षतशिराजालनिरासेन स्थूलदेहात्मत्वमात्मनोऽपो 'शुद्धमपापविद्ध'मित्यनयोरर्थमाह—शुद्धेति । शुद्धं रागादि एवापापं पुण्यपापहीनं तस्मात्कारणाभावादेव सुखदुःखादितद्गुण लेपहीनमित्यर्थः । अकायमिति मन्त्रपदेन सूक्ष्मदेहात्मता निरस लिङ्गमिति । निवारयेदिति सर्वत्रानुषङ्गः । स्थूलसूक्ष्मदेहतत्कार्य व्यावृत्तः सम एकोऽपरिच्छिन्न आत्मेति सदा चिन्तयेदित्यर्थः ॥

य एवं यथोक्तमात्मानं वेत्ति स ब्रह्मविदामुत्तम इत्याह—

वासुदेवो यथाश्वत्थे स्वदेहे चाब्रवीत्समम् ।
तद्वद्वेत्ति य आत्मानं समं स ब्रह्मवित्तमः ॥ ११ ॥

वासुदेव इति ॥ वासुदेवो भगवान्कृष्णोऽश्वत्थे निकृष्टोपा चाविर्भूतविज्ञानैश्वर्यशक्तिमदात्माधिष्ठिते उत्कृष्टोपाधौ च यथा ष्टमात्मानमब्रवीत् 'अश्वत्थः सर्ववृक्षाणा'मिति, 'वृष्णीनां वासु ति च, तद्वद्य आत्मानं सममुपाधिकृतवैषम्यापोहेनैकरूपं वेत्ति स ब्रह्मविदित्यर्थः ॥ ११ ॥

वासुदेवस्य युक्तं सर्वत्र समात्मदर्शनं तस्योपाधिषु ममाहंका स्तु मुमुक्षोस्तस्य तद्वैपरीत्यादित्यत आह—

यथा ह्यन्यशरीरेषु ममाहन्ता न चेष्यते ।
अस्मिंश्चापि तथा देहे धीसाक्षित्वाविशेषतः ॥ १२ ॥

यथा हीति ॥ अन्यशरीरेषु बहिर्दृश्यमानेषु देहेषु यथा ममाहमोभावो न चेष्यते तस्य दृश्यत्वेनानात्मत्वनिश्चयाच्च स्वत्वाभिमते देहे ममाहन्ता नेष्यते । कुतः । धीसाक्षित्वाविशेषत देहाकारपरिणतबुद्धिसाक्षित्वाविशेषादित्यर्थः । तथाचात्मतत्त्वालो कारादेरनवसरत्वाद्वासुदेववत्समात्मदर्शनं युक्तमेवेति भावः ॥ १२ ॥

रागद्वेषभयोपलम्भान्नास्ति मुमुक्षोरभिमानाभाव इति चेन्नेत्याह—

रूपसंस्कारतुल्याधी रागद्वेषौ भयं च यत् ।
गृह्यते धीश्रयं तस्माज्ज्ञाता शुद्धोऽभयः सदा ॥ १३ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

रूपेति ॥ नीलादिरूपसंस्कारेण तुल्यः समान आधिः आश्रयो ययोस्तौ रागद्वेषौ रूपसंस्कारतुल्याधी यच्च भयं तदपि तत्समानाश्रयमिति । संस्कारो नाम स्वाश्रयस्य प्रागुद्भूतावस्थासमानावस्थान्तरापादकोऽतीन्द्रियो धर्मः । तत्रायमर्थः—रूपाद्याकारपरिणतान्तःकरणे हि रूपादिसंस्कारः पुनरपि रूपाद्याकारपरिणामहेतुर्विद्यते । तत्रैव च रागद्वेषौ रूपादिदर्शननिमित्तौ । तन्निमित्तकं च भयं तत्रैव । 'कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे'ति श्रुतेः । यस्माद्धीश्रयं बुद्धिसंश्रयमेव रागद्वेषौ भयं चेति त्रयमात्मना गृह्यते नात्मसंश्रयं तस्माज्ज्ञाता शुद्धो रागादिरहितोऽभयश्च सदेति ॥ १३ ॥

ननु सदा शुद्ध आत्मा किंतु 'यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति श्रुतेः 'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावित'इति स्मृतेश्च पूर्वमशुद्धोऽपि पुरुषो ब्रह्मभावनया शुद्धः पश्चाद्ब्रह्म भविष्यतीत्याशङ्क्याह—

यन्मनास्तन्मयोऽन्यत्वे नात्मत्वाप्तौ क्रियात्मनि ।
आत्मत्वे चानपेक्षत्वात्सापेक्षं हि न तत्स्वयम् ॥ १४ ॥

यन्मना इति ॥ यस्मिन्ध्येये देवादौ मनो यस्य स यन्मना ध्यायी रूपः स तन्मयो ध्येयदेवादिमयो भवति । ध्यातृध्येययोरन्यत्वेसति ध्यानक्रियायास्तत्रार्थवत्त्वसंभवादित्यर्थः । न पुनरात्मत्वाप्तौ आत्मस्वरूपावस्थानरूपार्थमात्मनि क्रिया ध्यानादिरूपापेक्ष्यत इत्यर्थः । तत्र हेतुः—आत्मत्वेति । मोक्षरूपस्य ब्रह्मण आत्मत्वे सति तस्य चतुर्विधक्रियाफलविलक्षणत्वात्क्रियाया अनपेक्षत्वादित्यर्थः । मोहमात्रव्यवधानाच्चात्र न क्रियापेक्षेति प्रकारार्थः । विपक्षे दोषमाह—सापेक्षं हीति । यदि क्रियासापेक्षं कैवल्यं स्याच्चेत्तर्हि तत्स्वयमात्मरूपं न स्यात् । क्रियासाध्यस्यानात्मत्वादनित्यत्वाच्चेत्यर्थः । तस्मात्सदा शुद्ध एवात्मा तस्मिन्नशुद्ध्याभासो मिथ्याध्यास इति भावः ॥ १४ ॥

विभागादिमलाभावाच्चिदेकरसत्वाच्चात्मा सदाशुद्ध एवाभ्युपेय इत्याह—

स्वमिवैकरसा ज्ञप्तिरविभक्ताजराऽमला ।
चक्षुराद्युपधानात्सा विपरीता विभाव्यते ॥ १५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वमिवेति ॥ यद्येवंस्वभावैषा ज्ञप्तिस्तर्हि तस्यां जन्मविनाशभेद
कथमित्याशङ्क्य चक्षुराद्युपाधिसंसर्गदोषादित्याह—चक्षुरादीति ॥

आत्मनः प्रतिपादितममलत्वं विशदयति—

दृश्यत्वादहमित्येषो नात्मधर्मो घटादिवत् ।
तथान्ये प्रत्यया ज्ञेया दोषाश्चात्माऽमलो ह्यतः ॥ १

दृश्यत्वादिति ॥ अहमित्येषोऽहमिति प्रत्ययो नात्मधर्मो
दृश्यत्वाद्घटादिवत्तथान्येऽपि प्रत्ययाः परिणामा दोषाः दोषरूप
द्वयोऽनात्मधर्मा ज्ञेयाः । हि यस्मादत आत्माऽमलो हि निर्मल एवेत

अहंकारादीनामात्मधर्मत्वाभावेऽपि नात्मनो विशुद्धिः सिध्यति
त्वात्परिच्छिन्नत्वाच्चेत्याशङ्क्याह—

सर्वप्रत्ययसाक्षित्वादविकारी च सर्वगः ।
विक्रियेत यदि द्रष्टा बुद्ध्यादीवाल्पविद्भवेत् ॥ १७

सर्वप्रत्ययेति ॥ विपक्षे दोषमाह—विक्रियेतेति । विक्रियेत
वा यथात्मा तदाल्पविद्विषयमात्राभासको भवेद्बुद्ध्यादिवद्विषि
त्यक्षरार्थः । बुद्ध्यादिशब्देन तद्गताभासो लक्ष्यते अन्यथा स्व
त्वाद्वेदनयोगवत्त्वेनाल्पवित्त्ववचनमनुपपन्नं स्यात्तत्र बुद्धेः साभास
यावभासनमात्रे उपक्षीणपरिणामाया यथापूर्वापरानुभूतितदवस्था
रानुसंधानाभावो विक्रियावत्त्वात्तथा द्रष्टुरपि विक्रियावत्त्वेऽनुर्ग
प्रसङ्गात्सर्वव्यवहारविलोपप्रसङ्ग इति भावः ॥ १७ ॥

द्रष्टुरात्मनोऽपि बुद्धिवदल्पवित्त्वमेव ज्ञानस्य साधनाधीनत्वा
शवत्त्वादितिचेन्नेत्याह—

न दृष्टिर्लुप्यते द्रष्टुश्चक्षुरादेर्यथैव तत् ।
नहि द्रष्टुरिति ह्युक्तं तस्माद्द्रष्टा सदैकदृक् ॥ १८ ॥

न दृष्टिरिति ॥ यथैव चक्षुरादिद्वारकदृष्टिर्लुप्यते परिणामित्वा
रात्मनो दृष्टिर्लुप्यते अपरिणाम्यात्मस्वरूपत्वात्तस्या इत्यर्थः । श्रु
'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वा'दिति हि श्रुतेः

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

स्मात्प्रमाणसिद्धमिदं तस्मादित्यर्थः । सदैकदृक् एकरूपदृष्टिस्वभाव इत्यर्थः । दैकभुगि'तिपाठे भुङ्क्ते पश्यतीति भुक् साक्षीत्यर्थः ॥ १८ ॥

यस्मादेवमात्मा शुद्धस्वभावोऽपि सत्युपाधिसंबन्धादन्यथा प्रतीयते तस्मा-त्मानं ब्रह्मत्वेन प्रतिपत्तुं पदार्थविवेकं कुर्यान्मुमुक्षुरित्याह—

संघातो वास्मि भूतानां करणानां तथैव च ।
व्यस्तं वान्यतमो वास्मि को वास्मीति विचारयेत् ॥ १९ ॥

संघातो वेति ॥ अयमर्थः—अहमिति तावदात्मावभासते । स भास-नोऽहं मनुष्यः कृशः स्थूल इत्यादौ भूतसंघातात्मकदेहरूपः स्फुरति । दिदमुच्यते–संघातो वास्मि भूतानामिति । तथाहं द्रष्टा श्रोता रसयिता णो बधिर इति करणेष्वप्यहमुल्लेखो दृश्यते अन्तःकरणसंघातो वाहमिति । त्रापि पृथक्पृथगेवाहंकारदर्शनाद्व्यस्तमेकैकं चेन्द्रियमहमस्मि । अथैकस्मि-देहेऽनेकात्मत्वे कदाचिद्विमत्यसंभवाद्भोगव्यवस्थानुपपत्तेरन्यतमो वास्मीन्द्रि-संघातादन्यो वा तदधिष्ठातास्मि । यद्यन्यतमस्तर्हि स को वान्तःकरणप्रा-द्यन्यतमः किं वा तत्साक्षी तद्विलक्षणस्वभाव इति विचारयेत् ॥ १९ ॥

विचारफलं पदार्थविवेकं कथयति—

व्यस्तं नाहं समस्तं वा भूतमिन्द्रियमेव वा ।
ज्ञेयत्वात्करणत्वाच्च ज्ञातान्योऽस्माद्धटादिवत् ॥ २० ॥

व्यस्तं नाहमिति ॥ भूतं चेन्द्रियं नाहं समस्तं व्यस्तं वा नाहमस्मि ज्ञेय-त्वादचेतनत्वाद्धटादिवत्, करणत्वात्कुठारादिवदिति यथायोगं योज्यम् । स्माज्ज्ञाता चेतनोऽन्योऽन्तःकरणप्राणादिभ्योऽप्यचेतनेभ्य इति द्रष्टृदृश्या-न्वयव्यतिरेकालोचनेन विवेकः कार्य इत्यर्थः ॥ २० ॥

इदानीं साक्षिसाक्ष्यान्वयव्यतिरेकालोचनेनावस्थात्रयविवेकद्वारा तत्सा-क्षिणस्तुरीयस्याधिगमप्रकारमाह—

आत्माग्नेरिन्धना बुद्धिरविद्याकामकर्मभिः ।
दीपिता प्रज्वलत्येषा द्वारैः श्रोत्रादिभिः सदा ॥ २१ ॥

आत्माग्नेरित्यादिना ॥ तत्रैवं सतीत्यतः प्राक्तनैः श्लोकैः । आत्मैवाग्नि-स्तस्येन्धना इध्यते प्रकाश्यते व्यवहारयोग्यः क्रियते अनयेतीन्धना बुद्धिः ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

आत्मचैतन्यस्य विशेषाकारतयाभिव्यक्तिकारणभूतेत्यर्थः । साक्षि
भिर्दीपिता उत्तेजिता वायुनेवाग्निस्थमिन्धनमाध्माता सती प्रज्व
ग्रस्ततया प्रकाशमाना जायतेऽभिव्यक्ताग्निना दह्यमानमिन्धन
गवाक्षेभ्यो निःसृतदीर्घप्रभान्यायेन श्रोत्रादिभिर्द्वारैर्निःसृता सती
लत्येपेति योजना । अत्राग्नीन्धनादिरूपकनिर्देशप्रयोजनं व्यवहार
ग्रहणस्य होमत्वभावना तत्फलं च विषये सक्तिनिवृत्तिरिति द्रष्टव्य

एवंविधबुध्यवस्था जागरणं तस्यामात्मा स्थूलपदार्थभुग्भवती

दक्षिणाक्षिप्रधानेषु यदा बुद्धिर्विचेष्टते ।
विषयैर्हविषा दीप्ता ह्यात्माग्निः स्थूलभुक्तदा ॥ २२

दक्षिणाक्षीति ॥ दक्षिणस्याङ्गस्य पुरुषे श्रेष्ठत्वप्रसिद्धेरिदं
दक्षिणमक्षि प्रधानं मुख्यं येषामिन्द्रियाणां तेषु बुद्धिर्यदा विचेष्टते
वती भवति हविःस्थानीयैर्विषयैर्दीप्ता विषयं व्याप्य तदाकारेण
सतीति यावत् । तदात्माग्निः स्थूलभुक् स्थूलविषयाणां भोक्ता
च्यत इत्यर्थः ॥ २२ ॥

रूपकनिरूपणफलं स्पष्टयति—

हूयन्ते तु हवींषीति रूपादिग्रहणे स्मरन् ।
अरागद्वेष आत्माग्नौ जाग्रद्दोषैर्न लिप्यते ॥ २३ ॥

हूयन्त इति ॥ रूपादिग्रहणे विषयग्रहणसमये अरागद्वेषः
अनाध्यासेन रागद्वेषावकुर्वन् हवींषीमान्यात्माग्नौ हूयन्त इति
आत्मा जाग्रद्दोषैर्विषयोपलब्धिनिबन्धनैः पुण्यापुण्यलक्षणैर्न लि
संश्लिष्यत इत्यर्थः ॥ २३ ॥

इदानीं स्वप्नावस्थामाह—

मानसे तु गृहे व्यक्तः सोऽविद्याकर्मवासनाम् ।
पश्यंस्तैजस आत्मोक्तः स्वयंज्योतिः प्रकाशिता ॥ २

मानसे त्विति ॥ मनसः परिणामोपाधिर्मानसं गृहं सः त
आत्माऽविद्याप्रयुक्तकर्मोद्बुद्धा वासनाऽविद्याकर्मवासनेत्युच्यते
कारां पश्यंस्तैजस इत्युक्तो विद्वद्भिः । तेजसि वासनामये विष

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

...दिति व्युत्पत्तेरित्यर्थः । तत्र भासमानकर्मसुखदुःखादीनां मनोमात्रत्वात्तस्य-...द्दश्यत्वेनैव तदावस्थानादात्मन उपाध्यन्तराभावे सति बाह्यस्य चादित्या...ज्योपस्तदानीमुपरमादात्मैव स्वयंज्योतिः सन्प्रकाशिता साक्षी भवतीत्यर्थः । ...थाच श्रुतिः 'दृष्ट्वैव पुण्यं च पापं चे'ति, 'अत्रायं पुरुषः स्वयंज्योतिर्भवतीति' ...॥ २४ ॥

सुषुप्तिमाह—

विषया वासना वापि चोद्यन्ते नैव कर्मभिः ।
यदा बुद्धौ तदा ज्ञेयः प्राज्ञ आत्मा ह्यनन्यदृक् ॥ २५ ॥

विषया इति ॥ यदा बुद्धावन्तःकरणे विषयाः स्थूलाः वासनाश्च सूक्ष्माः स्वप्नदृश्याश्च कर्मभिर्न चोद्यन्ते नोद्भूताः क्रियन्ते तदात्मा प्राज्ञो ज्ञेयस्तत्संज्ञकस्तदा भवतीत्यर्थः । प्रज्ञातिशयात्तदा प्राज्ञ इति व्युत्पत्तिमभिप्रेत्य विशिनष्टि—अनन्यदृगिति । अन्यदात्मव्यतिरिक्तं विषयं वासनां वा न पश्यतीत्यनन्यदृक्, अपरिच्छिन्नप्रज्ञ इत्यर्थः ॥ २५ ॥

एवमवस्थात्रयं तदवस्थं चात्मानं द्रष्टृदृश्यभावेन विविच्येदानीमभिमानसहितावस्थात्रयसाक्षितया विश्वादित्रयापेक्षया तुरीयं प्रत्यञ्चमात्मानं नित्यविज्ञप्तिस्वभावमुपलम्भयति—

मनोबुद्धीन्द्रियाणां या अवस्थाः कर्मचोदिताः ।
चैतन्येनैव भास्यन्ते रविणेव घटादयः ॥ २६ ॥

मनोबुद्धीति ॥ इन्द्रियाणामवस्था जागरणं । मनोवस्था स्वप्नः । बुद्ध्यवस्था कारणवस्था सा सुषुप्तिरिति विभागः । स्पष्टमन्यत् ॥ २६ ॥

ननु यद्यात्मा निर्विकार एव साक्षी कथं तर्हि बुद्ध्यादीनां कर्तोच्यते तत्राह—

तत्रैवंसति बुद्धीर्ज्ञ आत्मभासावभासयन् ।
कर्ता तासां यदर्थास्ता मूढैरेवाभिधीयते ॥ २७ ॥

तत्रैवंसतीति ॥ तत्र तस्मिन्नात्मनि एवंसति अवस्थात्रयेऽध्यस्ते सावस्थाः बुद्धीः आत्मभासा स्वचैतन्याभासेनावभासयन् ज्ञ आत्मा तासां कर्तेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मूढैः शास्त्राचार्योपदेशरहितैरभिधीयते व्यपदिश्यते इति बोद्धा
व्यवहारप्रवृत्तौ निमित्तं सूचयन्बुद्धीर्विशिनष्टि—यदर्थोत्था इति। द्वा
सुखदुःखप्रतिभासार्थोत्था भासयन्निति कर्मोद्भासितबुद्ध्यवस्थानु
भासाविवेकादात्मा दर्शनकर्तेत्युच्यते मूढैरित्यर्थः ॥ २७ ॥

एवमज्ञाने तत्कार्ये च प्रतिबिम्बितस्य चिदात्मनो ज्ञातृत्वमुप
व्युत्पाद्य सर्वज्ञत्वं सर्वकर्तृत्वं च तस्यैव मायोपाधिप्रतिबिम्ब
व्युत्पादयति—

सर्वज्ञोऽप्यत एव स्यात्स्वेन भासावभासयन् ।
सर्वं सर्वक्रियाहेतोः सर्वकृत्त्वं तथात्मनः ॥ २८ ॥

सर्वज्ञोऽपीति ॥ अत एवेत्युक्तमेव विशदयति—स्वेनेति। स
विषयकमायाविवर्तं सर्वं स्वचैतन्येनादित्यप्रकाशवदविकृतेन अ
उच्यते न पुनः सर्वविषयज्ञानकर्तृत्वेनेत्यर्थः। तथा तद्वन्मायाति
त्मनः सर्वकृत्त्वं सर्वकर्तृत्वम्। तदेवाह—सर्वक्रियाहेतोरिति।
मात्रेण भ्रामकवत्सर्वकारकप्रवृत्तिहेतुत्वादित्यर्थः ॥ २८ ॥

तदेवमवस्थात्रयसाक्षितया विविक्तशुद्धचिद्रूपस्यात्मनः कार्य
मायोपाधिवशाज्ज्ञातृत्वकर्तृत्वसर्वज्ञत्वादिव्यवहारास्पदत्वं न स्व
कमर्थमनूद्य किं तत्स्वाभाविकं बिम्बतुल्यमात्मस्वरूपमित्यपेक्षायां

सोपाधिश्चैवमात्मोक्तो निरुपाख्योऽनुपाधिकः ।
निष्कलो निर्गुणः शुद्धस्तं मनो वाक्च नाप्नुतः ॥ २९ ॥

सोपाधिश्चेति ॥ यस्तु निरुपाख्यो विषयतयोल्लेखयोग्यो
सोऽनुपाधिकः। सर्वव्यवहारातीत इत्यर्थः। गुणावयवशून्यत्वाच्छु
इत्यर्थः। निरुपाख्यत्वमुक्तं व्यनक्ति—तमिति ॥ २९ ॥

मनोवागगम्यत्वं साधयति—

चेतनोऽचेतनो वापि कर्ताऽकर्ता गतोऽगतः ।
बद्धो मुक्तस्तथा चैकोऽनेकः शुद्धोऽन्यथेति वा ॥ ३०

चेतन इति ॥ अयमर्थः—अहमिति शब्दप्रत्ययौ तावत्परा

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

…नं प्रत्यक्षमवगाहेते इत्यविवादम् । तौ चेच्छुद्धमेवात्मानं गोचरयेतां …दा प्रत्यक्षोपलब्धे घटादाविव विवादिनां विप्रतिपत्त्यभाव एव स्यात् । प्रतिपद्यन्ते तु ते—देहेन्द्रियमनोबुद्धीनामन्यतमोऽचेतन एव चेतनो वा …त्मेति वेदबाह्याः । तदन्यश्चेतन इति वेदवादिनः । तेष्वपि केचित्कर्तेति …चिदकर्तेति गतो व्यापकोऽगतोऽव्यापकोऽणुपरिमाणो देहपरिमाणो वेति …चिद्बद्धो जीवो मुक्तोऽन्य ईश्वरस्तथा सर्वशरीरेष्वेकोऽनेको वा शुद्धो रागा-गुणरहितोऽन्यथा तद्युक्तश्चेति ॥ ३० ॥

अतो विप्रतिपत्तेरयथाभूतात्ममात्रगोचरत्वादसमर्थौ शब्दप्रत्ययौ शुद्धा-…नीत्याह—

अप्राप्यैव निवर्तन्ते वचोधीभिः सहैव तु ।
निर्गुणत्वात्क्रियाभावाद्विशेषाणामभावतः ॥ ३१ ॥

अप्राप्यैवेति ॥ कथमात्मप्राप्तिर्वाचां धियामिति चेत्परमार्थतः प्रवृत्ति-…जाभावादित्याह—निर्गुणत्वादिति । रूपादिगुणहीनत्वाद्बाह्येन्द्रियद्वारक-…भिस्तावदात्मा न प्राप्यते । मनसश्च बाह्येन्द्रियद्वारोपलब्धविषयातिरे-…स्वतन्त्रस्य विषयानिरूपणात्तदगोचरमात्मानं तत्र प्राप्नोति । क्रियाभा-…द्वात्मनो गोचरत्वाभावः । नहि क्रियाहीनेऽनवच्छिन्ने वस्तुनि क्रियावद्-…गतिमात्रेणापूर्वधर्मोपजनिः संभवति । घटादिनानुगते गगने तददर्शनात् । …आत्ममनःसंयोगजज्ञानासंभवाच्च मनसापि प्राप्य आत्मेत्यर्थः । तथा विशे-…णां गोधनरूपाणां बाह्यानां स्वगतानां वा जात्यादीनां प्रवृत्तिनिमित्तानाम-…भावाच्च शब्दोऽपि प्राप्नोत्यात्मानमित्यर्थः । तथाच श्रुतिः 'यतो वाचो निव-…र्तन्ते अप्राप्य मनसा सहे'ति, 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्त-…र कर्मणा वे'ति च ॥ ३१ ॥

अविषयस्यात्मनः कथं वेदान्तवेदनीयत्वमित्याशङ्क्य लक्षणावर्त्मनेत्यभि-…प्राह—

व्यापकं सर्वतो व्योम मूर्तैः सर्वैर्वियोजितम् ।
यथा तद्वदिहात्मानं विन्द्याच्छुद्धं परं पदम् ॥ ३२ ॥

व्यापकमिति ॥ सर्वैः मूर्तैः सर्वतो वियोजितं परिच्छेदप्रतिभासहेतू-…धिवर्जितं व्यापकं स्वरूपतोऽपरिच्छिन्नं च व्योम यथा, तद्वदेव शुद्धम-



C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्थात्रयोपाधिवियोजितमवस्थात्रयसाक्षितया लक्षितं शुद्ध वेदान्तसमये परं पदं परमात्मानं ब्रह्म विन्द्यादिति योजना ॥ ३२ ॥

एवमात्मतत्त्वेऽवधारिते पुनरवस्थात्रयाभिमानं न कुर्यादित्याह

**दृष्टं हित्वा स्मृतिं तस्मिन्सर्वग्रश्च तमस्त्यजेत् ।**
**सर्वदृग्ज्योतिषा युक्तो दिनकृच्छार्वरं यथा ॥ ३३ ॥**

दृष्टमिति ॥ दृष्टं जागरितं तद्धित्वा द्रष्टा श्रोता मन्तेत्येवमनु रक्ततयात्माभिमानं त्यक्त्वेत्यर्थः । दर्शनाद्यवस्थायामपि निर्विशेषं मन्वीतेति भावः । तस्मिन् दृष्टेऽर्थे स्मृतिं स्वप्नं हित्वा । संस्कारज स्वप्न एवेह स्मृतिरुच्यते । अहं स्वप्ने देवोऽभूवं व्याघ्रो वाभूवमित्यभि मानं हित्वेत्यर्थः । दृश्यस्य सवासनस्य मनसो विकारोऽसौ नात्म गतामात्मनोऽनुसंदधीतेति भावः । तथा तमः सुषुप्तिं त्यजेत् । तद्विशे षणं सर्वग्र इति । सर्वं ग्रसतीति सर्वग्रः । सान्तमिदं पदम् । स्वप्रका भासकतयाऽलुप्तप्रकाशस्वभाव एवात्मा ननु मूढो ज्ञानवानिति त्यर्थः । कोऽसाववस्थात्रयत्यक्तेति तमाह—सर्वदृगिति । सर्वदृक् प्रत्यगात्मा ज्योतिषा युक्तः । 'ज्योतिषां ज्योति'रित्युक्तेन इत्यर्थः । यथा दिनकृत्सविता शर्वर्यां भवं शार्वरं तमः स्वतेजसा निरस्तमस्क एवावतिष्ठते तथाऽवस्थाविकारहेत्वज्ञानं ब्राह्मणविद्य याद्वयानन्दस्वभाव एवावतिष्ठते इत्यर्थः ॥ ३३ ॥

उक्तमेव त्यागप्रकारं प्रकटयति—

**रूपस्मृत्यन्धकारार्थाः प्रत्यया यस्य गोचराः ।**
**स एवात्मा समो द्रष्टा सर्वभूतेषु सर्वगः ॥ ३४ ॥**

रूपस्मृतीति ॥ रूपस्मृत्यन्धकारा जाग्रत्स्वप्नसुषुप्तयोऽर्था येषां प्रत्ययानां ते तथोक्ताः ते यस्य साक्षिणो गोचराः प्रतिभासाः सर्वभूतेषु द्रष्टा । तथापि समो निर्विशेषः । यतः सर्वगः । पूर्णः इत्यर्थः ॥ ३४ ॥

यद्येवमुक्तस्वभाव एवात्मा कुतस्तस्मिन्विचित्रः संसारप्रत्ययोऽ

**आत्मबुद्धिमनश्चक्षुर्विषयालोकसंगमात् ।**
**विचित्रो जायते बुद्धेः प्रत्ययोऽज्ञानलक्षणः ॥ ३५**

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

आत्मबुद्धीति ॥ अज्ञानलक्षणः । अज्ञानोपाधिनिबन्धन इत्यर्थः ॥३५॥

अविद्यातत्कार्योपाधीनामात्मनश्च विवेकानुपलम्भादेव संसारप्रतिभास इति स्थिते मुमुक्षोः कर्तव्यमुपदिशति—

विविच्यास्मात्स्वमात्मानं विन्द्याच्छुद्धं परं पदम् ।
द्रष्टारं सर्वभूतस्थं समं सर्वभयातिगम् ॥ ३६ ॥

विविच्येति ॥ अस्माद्बुद्ध्यादिसंघाताद्विविच्य स्वमात्मानं विन्द्यादिति संबन्धः । स्पष्टमन्यत् ॥ ३६ ॥

वेद्यमेवात्मरूपं पुनर्विशिनष्टि—

समस्तं सर्वगं शान्तं विमलं व्योमवत्स्थितम् ।
निष्कलं निष्क्रियं सर्वं नित्यं द्वन्द्वैर्विवर्जितम् ॥ ३७ ॥

समस्तमिति ॥ समस्तमात्मानं सर्वं परं पदं ब्रह्मेति पृथक् योज्यमपुनरुक्तत्वार्थं । अत्र विधिमुखेन प्रतिषेधमुखेन च ये विशेषा निर्दिष्टास्तानशेषान्साक्षिणि त्वंपदार्थे तत्पदार्थे च ब्रह्मण्यनुसंधायानयोस्तुल्यलक्षणत्वं निश्चित्य तत्त्वमसिवाक्यादहंब्रह्मेति निश्चिनुयादिति तात्पर्यार्थः ॥ ३७ ॥

एवं ब्रह्मात्मरूपेणैव ज्ञातव्यमित्युक्ते पुनर्मुमुक्षुं शिक्षयति—

सर्वप्रत्ययसाक्षी ज्ञः कथं ज्ञेयो मयेत्युत ।
विमृश्यैवं विजानीयाज्ज्ञानकर्म न वेति वा ॥ ३८ ॥

सर्वेति ॥ सर्वप्रत्ययसाक्षी ज्ञानैकस्वभावो य उक्तः स कथं कीदृक्स्वभाव इति विमृशेदिति योजनीयम् । कथंशब्दसूचितं विमर्शमेव विभजते—ज्ञेय इति । मया ज्ञेय उत न ज्ञेय इति शेषः । यदि ज्ञेयस्तदापि ज्ञानं प्रति कर्म वा न वेत्येवं विमृश्य विजानीयात्तत्त्वमात्मन इत्यर्थः ॥ ३८ ॥

एवंविमर्शे ज्ञेयत्वपक्षस्तावन्न संगच्छत इत्याह—

अदृष्टं द्रष्टृविज्ञातं दृष्टमित्यादि शासनात् ।
नैव ज्ञेयं मयान्यैर्वा परं ब्रह्म कथंचन ॥ ३९ ॥

अदृष्टमिति ॥ 'यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूप'मिति ज्ञेयस्याल्पत्वोपदेशाद्ब्रह्मत्वापत्तेरदृष्टमविज्ञातमिति च
सनाच्च ब्रह्मात्मतत्त्वं ज्ञानकर्मत्वेन मया अन्यैर्वा कथंचन ज्ञेयमिति

यद्येवं ज्ञेयत्वं न संभवति कथं तर्ह्यात्मन्येवात्मानं पश्येदि
इत्याशङ्क्य, अविषयत्वेनाविर्भावमात्रमेवात्मतत्त्वज्ञानं न विषयत्वं
मतं तस्य मतं मतं यस्य न वेद सः' इति श्रुतिरिति मन्वानोऽज्ञेय
प्रतिक्षिपति—

स्वरूपाव्यवधानाभ्यां ज्ञानालोकस्वभावतः ।
अन्यज्ञानानपेक्षत्वाज्ज्ञातं चैव सदा मया ॥ ४० ॥

स्वरूपेति ॥ यज्ज्ञानस्वरूपादन्यज्जडं यच्च व्यवहितं ज्ञातुं
न्तुकज्ञानसापेक्षसिद्धिकत्वाज्ज्ञानविषयतया ज्ञेयं भवति न तत्
त्वम् । कथं तर्हि शृणु । ज्ञानालोकस्वभावतो ज्ञानप्रकाशस्वरू
पाव्यवधानाभ्यां हेतुभ्यामन्यज्ञानानपेक्षत्वादविषयत्वेन विज्ञातं
तत्त्वमिति योजना । ज्ञातुरेव ब्रह्मत्वोपदेशाज्ज्ञातुश्च स्वज्ञेयत्वा
ज्ञातत्वाभावाच्च सदा मया ज्ञातं च ब्रह्मात्मतत्त्वमित्यर्थः ॥ ४० ॥

ज्ञानस्वरूपस्य नान्यज्ञानापेक्षेत्येतद्दृष्टान्तेन साधयति—

नान्येन ज्योतिषा कार्यं रवेरात्मप्रकाशने ।
स्वबोधान्नान्यबोधेच्छा बोधस्यात्मप्रकाशने ॥ ४१ ॥

नान्येनेति ॥ स्पष्टार्थः ॥ ४१ ॥

दृष्टान्तस्य दार्ष्टान्तिकस्य च नैरपेक्ष्यमुक्तं साधयति—

न तस्यैवान्यतोऽपेक्षा स्वरूपं यस्य यद्भवेत् ।
प्रकाशान्तरदृश्यो न प्रकाशो ह्यस्ति कश्चन ॥ ४२ ॥

न तस्येति ॥ आत्मा नान्यतो ज्ञानमपेक्ष्यते तत्स्वरूपत्वा
स्वरूपं तन्नान्यतस्तदपेक्षते । यथा प्रकाशरूपः सविता न प्रकाशं
क्षते तथा चायं तस्मादेवमित्यर्थः । किंच नात्मा प्रकाशान्तरदृश्य
रूपत्वादादित्यवदित्याह—प्रकाशान्तरेति ॥ ४२ ॥

नन्वु प्रकाशान्तरदृश्यत्वाभावेऽपि स्वरूपप्रकाशदृश्य एव किं

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सविता घटादि प्रकाशयन्स्वात्मानमपि प्रकाशयत्येव तथात्मापि दृश्यमवभासयन्स्वात्मानमपि भासयेदिति चेन्नेत्याह—

व्यक्तिः स्यादप्रकाशस्य प्रकाशात्मसमागमात् ।
प्रकाशस्त्वर्ककार्यः स्यादिति मिथ्या वचो ह्यतः ॥ ४३ ॥

व्यक्तिः स्यादिति ॥ अप्रकाशस्वरूपतः प्रकाशहीनस्य प्रकाशात्मसमागमात्प्रकाशस्वभावसंसर्गमात्राद्व्यक्तिरभिव्यक्तिस्तमोनिवृत्तिलक्षणा स्यात् । न त्वत्र प्रकाशगुणोदय इत्यर्थः । अतः प्रकाशोऽर्ककार्य इति मृषा व्यपदेशः । प्रकाशावगुण्ठिते वस्तुनि प्रकाशोदयाभावेऽभिव्यक्त्यभावादर्शनादित्यर्थः । तस्माद्भासमानस्वरूपसंसर्ग एव भासस्याभिव्यक्तिरिति प्रकाशस्वभावस्य सवितुर्नान्यप्रकाश्यता स्वप्रकाश्यता वास्तीति न दृष्टान्तत्वसिद्धिरतो न दार्ष्टान्तिकसिद्धिस्त्वत्पक्ष इति भावः ॥ ४३ ॥

घटादिप्रकाशः कस्मादर्ककार्यो न भवतीति चेत्तत्राह—

यतोऽभूत्वा भवेद्यच्च तस्य तत्कार्यमिष्यते ।
स्वरूपत्वादभूत्वा न प्रकाशो जायते रवेः ॥ ४४ ॥

यतोऽभूत्वेति ॥ यत्तु प्रागभूत्वा यतो भवेत्तत्तस्य कार्यमिष्यत इति सम्बन्धः । स्पष्टमन्यत् ॥ ४४ ॥

कथं तर्हि प्रकाशस्वरूपस्यादित्यस्य प्रकाशयितृत्वमात्मनश्च बोधमात्रस्वभावस्य बोद्धृत्वं व्यपदिश्यते तत्राह—

सत्तामात्रे प्रकाशस्य कर्तादित्यादिरिष्यते ।
घटादिव्यक्तितो यद्वत्तद्वद्बोधात्मनीष्यताम् ॥ ४५ ॥

सत्तामात्र इति ॥ प्रकाशस्य संधिसत्तामात्रे सति घटादिव्यक्तितो घटाद्यभिव्यक्तेर्दर्शनादादित्यादिः प्रकाशस्य कर्तेष्यते यद्वत्तद्वद्बोधरूपेऽप्यात्मनि स्वाध्यस्तवस्तुसंधिसत्तामात्रे सति बोद्धृत्वमिष्यतामङ्गीक्रियतामिति योजना ॥ ४५ ॥

स्वगतविकारमन्तरेणैवात्मनोऽर्थप्रकाशकत्वमित्येतदपि रविदृष्टान्तेन स्पष्टयति—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

विलात्सर्पस्य निर्याणे सूर्यो यद्वत्प्रकाशकः ।
प्रयत्नेन विना तद्वज्ज्ञातात्मा बोधरूपतः ॥ ४६ ॥

विलादिति ॥ सर्पस्य बिलद्वारान्निर्गमे ज्ञायमाने यद्वत्सूर्यः विना पूर्वसिद्धेनैव स्वज्योतिषा तं भासयन्प्रकाशको व्यपदिश्यते बोधरूपत्वात्प्रयत्नेन विना विकारमन्तरेण ज्ञाता व्यपदिश्यत इत्य

इदानीमुपाधिभावे ज्ञातृत्वव्यपदेशात्तदभावे तदभावादौपाधि तृत्वमिति दर्शयितुं परमुदाहरणमाह—

दग्धैवमुष्णः सत्तायां तद्वद्बोद्धात्मनीष्यताम् ।
सत्येव यदुपाधौ तु ज्ञाते सर्प इवोत्थिते ॥ ४७ ॥

दग्धैवमिति ॥ यथा दाह्यसंनिधावुष्णस्वरूपस्याग्नेः सत्ताम कत्वं तथा बोधस्वरूपस्याप्यात्मनो बोध्यसंनिधिमात्रेण बोद्धृत्वं यस्मादुपाधौ ज्ञाते सत्येवात्मा ज्ञातोच्यते । यथा बिलादुत्थिते धौ ज्ञाते सत्येव सविता प्रकाशकः कथ्यते न तदभावे । तस्मा एवात्मनो ज्ञातृत्वव्यपदेश इत्यर्थः ॥ ४७ ॥

औपाधिकत्वं ज्ञातृत्वमात्मनो रविदृष्टान्तेन प्रतिपाद्य तेनैव कर्तृत्वमप्यौपाधिकं प्रतिपादयति—

ज्ञाताऽयत्नोऽपि तद्वज्ज्ञः कर्ता भ्रामकवद्भवेत् ।
स्वरूपेण स्वयं नात्मा ज्ञेयोऽज्ञेयोऽथवा ततः ॥ ४८

ज्ञातेति ॥ यद्वदयं ज्ञ आत्मा यत्नरहितोऽपि ज्ञाता व्याख्या तविशेषशून्योऽपि संनिधिमात्रेण कारकाणि प्रवर्तयन्क्रियाणां क दिश्यते भ्रामकवदित्यर्थः । भ्रामयति प्रवर्तयति प्राक्सुसं ज भ्रामकः सूर्यः । यद्वा भ्रामकोऽयस्कान्तः । स यथा स्वयं चलनादि तोऽपि लोहकीलादीनां चालको दृष्टस्तथायमपीत्यर्थः । तदेवं 'व्य प्रकाशस्ते'त्यारभ्योक्तं प्रासङ्गिकमात्मनो ज्ञातृत्वं कर्तृत्वं चौपाधिकं प्रक्रान्तमात्मनो ज्ञानकर्मत्वाकर्मत्वाभ्यामज्ञेयज्ञेयत्वपक्षद्वयसमर्थ रति—स्वरूपेणेति । यतोऽयमात्मा निर्विशेषः स्वभावतोऽलुप्तप्रका

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

ततः स्वयं स्वरूपेणासाधारणस्वभावेन न ज्ञेयो ज्ञानक्रियया व्याप्तो न भवति, तथा नाज्ञेयो व्यवहितवस्तुवन्न ज्ञानप्रकाशरहित इत्यर्थः । अथवेत्यनेन ज्ञाता वान्यस्याज्ञाता वा न भवत्यात्मा निर्विकारत्वाच्चैतन्ययोगाच्च, तथा कर्ता कारकाध्यासाधिष्ठानत्वान्न कर्ता च निर्व्यापारत्वादित्यादिविरुद्धप्रतिभासव्यवस्थोपसंहार उक्तो वेदितव्यः ॥ ४८ ॥

आत्मन उक्ते ज्ञेयत्वाद्यभावे प्रमाणमाह—

विदिताविदिताभ्यां तदन्यदेवेति शासनात् ।
बन्धमोक्षादयो भावास्तद्वदात्मनि कल्पिताः ॥ ४९ ॥

विदिताविदिताभ्यां तदिति ॥ 'अन्यदेव तद्विदितादथो अविदितादधी'ति श्रुत्या विदिताविदिताभ्यां कार्यकारणाभ्यामन्यदात्मत्वं ब्रह्मेति शासनात्कार्यकारणधर्मविलक्षणस्वभाव एवायमात्मेत्यर्थः । तथाच यथात्मनि ज्ञातृत्वं कारणत्वमित्यादि सर्वमविद्यावशादेव कल्पितं तथा बन्धो मोक्षश्छिन्नो भिन्नः सुखी दुःखीत्यादयोऽपि भावा आत्मनि कल्पिता एवेत्याह—बन्धेति ॥ ४९ ॥

बन्धादीनामात्मनि कल्पितत्वे सदृष्टान्तं हेतुमाह—

नाहोरात्रे यथा सूर्ये प्रभारूपाविशेषतः ।
बोधरूपाविशेषान्न बोधाबोधौ तथात्मनि ॥ ५० ॥

नाहोरात्र इति ॥ अबोधनिबन्धनो बन्धो बोधनिबन्धनो मोक्षस्तयोरभावे तत्र तयोरप्यभाव इत्यर्थः ॥ ५० ॥

उक्तेनोपायेनोक्तस्वरूपं ब्रह्म विजानतः फलमाह—

यथोक्तं ब्रह्म यो वेद हानोपादानवर्जितम् ।
यथोक्तेन विधानेन स सत्यं नैव जायते ॥ ५१ ॥

यथोक्तमिति ॥ हानोपादानवर्जितमिति हानोपादानकर्तृत्वं च व्यावर्त्यते । अनेन सर्वविशेषाः प्रतिषिद्धा भवन्ति परिग्रहपरित्यागात्मकत्वात्सर्वविशेषाणामित्यर्थः । यथोक्तविधानं पदार्थपरिशोधनप्रकारः स नैव जायत इति सत्यमिति संबन्धः । 'न स भूयोऽभिजायत' इति स्मृतेरित्यर्थः ॥५१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथोक्तब्रह्मवेदनेन विनापि यथोक्तफलसिद्धेः कृतं ज्ञानेनेत्याशङ्क्य 'नान्यः पन्था विद्यतेऽयनाये'ति श्रुतिविरोधान्नैवमित्याह—

जन्ममृत्युप्रवाहेषु पतितो नैव शक्नुयात् ।
इत उद्धर्तुमात्मानं ज्ञानादन्येन केनचित् ॥ ५२ ॥

जन्मेति ॥ इत एभ्यो जन्ममृत्युप्रवाहेभ्यः । केनचित्साधनान्तरेण ॥ ५२ ॥

उक्तेऽर्थेऽथर्वोपनिषद्वाक्यं प्रमाणयति—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्ट इति श्रुतेः ॥ ५३ ॥

भिद्यत इति ॥ स्पष्टम् ॥ ५३ ॥

प्रकरणार्थं संक्षिप्योपसंहरति—

ममाहमित्येतदपोह्य सर्वतो विमुक्तदेहं पदमम्बरोपमम् ।
सुदृष्टशास्त्रानुमितिभ्य ईरितं विमुच्यतेऽस्मिन्यदि निश्चितो नरः ॥ ५४ ॥

ममाहमिति ॥ सर्वतः सर्वात्मना ममाहमित्येतत्सविषयमपोह्य ... नरो मनुष्योऽस्मिन्यदि निश्चितो निश्चितमतिः स्यात्तदा स विमुच्यते ... योजना । अस्मिन्कस्मिन् विनिश्चित इति तदाह—विमुक्तदेहमिति । ... संबन्धशून्यं प्रत्यक्तत्त्वं पदं ब्रह्माम्बरोपमं निरतिशयं निःप्रपञ्चमिति ... कुत एवंविधं ब्रह्मात्मस्वरूपमित्यपेक्षायां श्रुतियुक्तिभ्यां निर्धारित... संभावना नास्तीत्यभिप्रेत्य तद्विशिनष्टि—सुदृष्टेत्यादि ईरितमिति ... यदेवंविधं सम्यग्विचारितशास्त्रानुमानेभ्योऽस्माभिरीरितमस्मिन्... बन्धः ॥ ५४ ॥

इति पञ्चदशं नान्यदन्यत्प्रकरणम् ॥ १५ ॥

---

## पार्थिवप्रकरणम् १६

पूर्वस्मिन्प्रकरणे एकदेशिमतप्रतिक्षेपमुखेन ब्रह्मैकत्वज्ञानमेव ... स्थानलक्षणमोक्षसाधनं न भेदाभेदज्ञानमिति प्रतिपादितम् । अथ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तार्किकमतप्रतिषेधेन मुमुक्षुं स्वाराज्येऽभिषेक्तुं प्रकरणान्तरमारभमाणः प्रथमं स्थूलशरीरात्मवादिमतं निराकरोति—

पार्थिवः कठिनो धातुर्द्रवो देहे स्मृतोऽम्मयः ।
पक्तिचेष्टावकाशाः स्युर्वह्निवाय्वम्बरोद्भवाः ॥ १ ॥

पार्थिव इति ॥ यः स्थूलदेहे कठिनो धातुर्मांसादिरूपः स पार्थिवः पृथिव्यंशः पृथिवीपरिणामात्मकः स्मृतो ज्ञातो विद्वद्भिरित्यर्थः । एवं द्रवोऽम्मयोऽपां परिणामः । पक्तिः पाकश्चेष्टा स्पन्दनमवकाशोऽन्नपानमनसां संचारमार्गा देहगतसुपयो ये स्युः एते क्रमेण वह्निवाय्वम्बरोद्भवा देहानुगतवह्न्याद्यंशकार्यभूताः स्मृता इत्यक्षरार्थः । देहो नात्मा भूतपरिणामत्वाद्वल्मीकादिवदिति भावः ॥ १ ॥

इन्द्रियात्मवादिनं प्रत्याह—

घ्राणादीनि तदर्थाश्च पृथिव्यादिगुणाः क्रमात् ।
रूपालोकवदिदं हि सजातीयार्थमिन्द्रियम् ॥ २ ॥

घ्राणादीनीति ॥ घ्राणादीनीन्द्रियाणि तदर्थास्तेषां विषयाः गन्धादयश्च क्रमात्पृथिव्यादीनां गुणाः कार्याणीत्यर्थः । गन्धरसरूपस्पर्शशब्दास्तावत्पृथिव्यप्तेजोवाय्वाकाशानां क्रमेण धर्माः प्रसिद्धास्तेषां घ्राणाद्येकैकेन्द्रियग्राह्यतान्वयव्यतिरेकसिद्धा । तथाच यदिन्द्रियं यस्य धर्मं ग्राहयति तदिन्द्रियं तस्य सजातीयं भवितुमर्हति । यथा तैजसस्य रूपस्य प्रकाशको दीपादिस्तैजसो दृष्टस्तथेन्द्रियाण्यपि भौतिकानां प्रकाशकत्वाद्भौतिकान्येवेत्यनुमानमाह—रूपालोकवदिति । एवमिन्द्रियाणां भौतिकत्वे सिद्धे देहवदेषामप्यनात्मत्वमिति भावः ॥ २ ॥

किंचेन्द्रियाणि नात्मनः करणत्वात्कुठारवदित्यनुमानान्तरं सूचयन्कार्यवशादिन्द्रियाणामेकादशत्वनियममाह—

बुद्ध्यर्थान्याहुरेतानि वाक्पाण्यादीनि कर्मणे ।
तद्विकल्पार्थमन्तस्थं मन एकादशं भवेत् ॥ ३ ॥

बुद्ध्यर्थानीति ॥ एतानि घ्राणादीनि बुद्ध्यर्थानि ज्ञानकरणान्याहुः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्पाणिपादपायूपस्थाख्यानीन्द्रियाणि कर्मणे कर्मार्थं वचनादानग मनानन्दार्थं तत्करणान्याहुरित्यर्थः। तेषां दशानामिन्द्रियाणां वि युगपद्विषयसंनिधाने क्रमेण तत्तद्विषयज्ञानादिनियमार्थं यदिन्द्रि उक्तदशापेक्षया एकादशं भवेत्। मनश्चैकं साधारणं करणमवश्य येम्। अन्यथात्मनो युगपदनेकेन्द्रियविषयसंप्रयोगे सति युगपज्ज्ञा नानि जायेरन्। नचैवमस्ति। तथाच तस्यापि मनसः करणत्वात् मिन्द्रियवदिति सिद्धम्॥ ३॥

बुद्धिरपि नात्मा करणविशेषत्वान्मनोवदिति बौद्धमतं निरस्य स्वभावं दर्शयति—

निश्चयार्था भवेद्बुद्धिस्तां सर्वार्थानुभाविनीम्।
ज्ञातात्मोक्तः स्वरूपेण ज्योतिषा व्यञ्जयन्सदा॥ ४॥

निश्चयार्थेति॥ निश्चयोऽर्थपरिच्छेदः सोऽर्थः प्रयोजनं यस्या प्र णवृत्तेः सा निश्चयार्था बुद्धिर्भवेत्। निश्चयकरणं बुद्धिरित्यर्थः। क त्वादपि तस्या अनात्मत्वमित्याह—तामिति। बुद्धिज्ञातुरपि बुद्धि स्वशङ्कां वारयति—स्वरूपेण ज्योतिषेति। तथाच भास्यभासकयो कयोरिव भेदाद्भास्याया बुद्धेरन्यो भासक आत्मेत्यर्थः॥ ४॥

यदि बुद्धेरात्मा भासकस्तर्हि तया संसर्गादशुद्धिरापद्येतेत्याशङ्क्य परिहरन्नाह—

व्यञ्जकस्तु यथालोको व्यङ्ग्यस्याकारतां गतः।
व्यतिकीर्णोऽप्यसंकीर्णस्तद्वज्ज्ञः प्रत्ययैः सदा॥ ५॥

व्यञ्जकस्त्विति॥ यथा आलोको व्यञ्जको दीपालोकादिर्व्यङ्ग्य देराकारतां गतः सन्व्यतिकीर्णोऽपि व्यामिश्रतया भासमानोऽपि स कीर्णो विविक्तस्वभाव एव भवति तद्वदेव ज्ञः आत्मा सदा प्रत्ययै भिरित्यर्थः। अतो नित्यशुद्ध एवात्मेति भावः॥ ५॥

यदि बुद्ध्यादेरत्यन्तविलक्षणो निर्व्यापार आत्मा कथं तर्हि तस्य भासकत्वमित्याशङ्क्य तदपि दृष्टान्तेनाह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

स्थितो दीपो यथायत्नः प्राप्तं सर्वं प्रकाशयेत् ।
शब्दाद्याकारबुद्धीर्ज्ञः प्राप्तास्तद्वत्प्रपश्यति ॥ ६ ॥

स्थित इति ॥ स्पष्टार्थः ॥ ६ ॥

तथापि कथं बुद्धिः सुखित्वादिस्फुरणादित्याशङ्क्याह—

शरीरेन्द्रियसंघात आत्मत्वेन गतां धियम् ।
नित्यात्मज्योतिषा दीप्तां विशिंषन्ति सुखादयः ॥ ७ ॥

शरीरेति ॥ सुखादयः शरीरादिसंघाते आत्मत्वेन प्रवृत्तां धियं बुद्धिं विशिंषन्ति नत्वात्मानम् । किंलक्षणाम् । नित्यात्मज्योतिषा दीप्तां प्रकाशिताम् । तथाच भास्यभासकबुद्ध्यात्मनोरविवेकादात्मा सुखादिमानिति भ्रान्तिरित्यर्थः ॥ ७ ॥

कुत एवं निश्चय इत्यत आह—

शिरोदुःखादिनात्मानं दुःख्यसीति हि पश्यति ।
द्रष्टान्यो दुःखिनो दृश्याद्द्रष्टृत्वाच्च न दुःख्यसौ ॥ ८ ॥

शिर इति ॥ शिरआदिदेहावयवगतेन दुःखेन हि यस्माद्दुःख्यहमस्मीत्यात्मानं पश्यति तस्माद्देहमात्मत्वेन गता बुद्धिरिति योजना । अयमाशयः— आत्मनो विशेषविज्ञानं बुद्ध्यध्यासनिबन्धनमिति हि स्थितिः । तथाच शिरोदुःखेनोदरदुःखेन वा दुःख्यहमस्मीत्यभिमानात्मकबुद्ध्यवस्थापन्नविशेषस्यैव दुःखित्वात्सुखदुःखादयो बुद्धिं विशिंषन्तीति युक्तं वक्तुमिति । द्रष्टा तु दुःखिनो दृश्यादन्यः आत्मत्वेनाभिमन्यमानदेहावयवोपघातादिजनितदुःखाकारसाभासबुद्धेर्दृश्यायाः साक्षी तदन्य एवासौ द्रष्टृत्वादेव न दुःखीत्यर्थः ॥ ८ ॥

द्रष्टृत्वादसौ न दुःखीत्युक्तमेव स्पष्टयति—

दुःखी स्याद्दुःख्यहंमानाद्दुःखिनो दर्शनान्न वा ।
संहतेऽङ्गादिभिर्द्रष्टा दुःखी दुःखस्य नैव सः ॥ ९ ॥

दुःखी स्यादिति ॥ अयमात्मा दुःख्यहंमानाद्दुःखाकारपरिणामवत्यन्तःकरणेऽहमित्यभिमानाद्दुःखी स्यान्नतु दुःखिनो दुःखाकारपरिणामवतोऽदर्शनात्, तथासत्युदासीनानामपि दुःखिनं पश्यतां दुःखित्वप्रसङ्ग इत्यर्थः । प्रकृते किमायातं तदाह—संहत इति । अङ्गादिभिर्हस्ताद्यैश्चक्षुरादीन्द्रियैश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संहते देहे यद्दुःखं तस्य दुःखस्य द्रष्टा य आत्मा साक्षी स नैव सिद्धमिति शेषः ॥ ९ ॥

दुःखिनो द्रष्टृत्वेऽपि दुःखित्वमात्मनो युज्यत इति दृष्टान्तेन शङ्के

चक्षुर्वत्कर्मकर्तृत्वं स्याच्चेन्नानेकमेव तत् ।
संहतं च ततो नात्मा द्रष्टृत्वात्कर्मतां व्रजेत् ॥ १० ॥

चक्षुर्वदिति ॥ यथा चक्षुषो दर्पणादिनिष्ठतया दृश्यत्वं तस्यैव शस्थतया द्रष्टृत्वं च तथात्मनो दुःखसंभिन्नतया दृश्यत्वं, स्वरूपां स्थतया द्रष्टृत्वं चेति कर्मकर्तृत्वं घटत इत्यर्थः । सिद्धान्ती पर नेति । कुत इत्यत आह—अनेकमेव तदिति । तच्चक्षुरनेकमनेक संहतं च भवतीत्यतो घटते तस्य कर्मत्वं कर्तृत्वं चांशभेदोपपत्तेरित्य गोलकांशस्य दर्पणस्थस्य दृश्यत्वं तस्यैव शक्तिमत्त्वांशस्य मुखनिरी त्वमिति युक्तमुभयरूपत्वमिति विवक्षितोऽर्थः । आत्मनस्तु नैवसंभ एकरूपत्वादसंहतत्वाच्चेत्यभिप्रेत्याह—तत इति । चित्प्रकाशैकस्वभ त्मा द्रष्टैव न दृश्यांशसंभिन्नो दृश्यांशस्यानात्मत्वादतो द्रष्टृत्वात्क प्राप्नोतीत्यर्थः ॥ १० ॥

नन्वात्मनोऽपि ज्ञानादिभिरनेकात्मत्वसंभवाच्चक्षुर्वन्द्वास्यभासकत्व त्याशङ्क्य प्रत्याह—

ज्ञानयत्नाद्यनेकत्वमात्मनोऽपि मतं यदि ।
नैकज्ञानगुणत्वात्तु ज्योतिर्वत्तस्य कर्मता ॥ ११ ॥

ज्ञानयत्नादिति ॥ ज्ञानप्रयत्नेच्छाद्वेषादिगुणभेदैरनेकात्मकत्वादा केनचिदंशेन विशिष्टस्य ग्राह्यत्वमंशान्तरेण ग्राहकत्वं च यदि मतमिति ग्रन्थार्थः । तुशब्दः शङ्कानिषेधार्थः । नैवम् । एकज्ञानगुणत्वात् 'कृत्स्न नघन एवे'ति श्रुत्या ज्ञानैकस्वभावत्वावधारणादनेकात्मत्वायोगात् तस्य न कर्मता, ग्राह्यता तस्य न संभवतीति परिहारग्रन्थार्थः ॥ ११ ॥

दृष्टान्तं व्याचष्टे—

ज्योतिषो द्योतकत्वेऽपि यद्वन्नात्मप्रकाशनम् ।
भेदेऽप्येवं समत्वाज्ज्ञ आत्मानं नैव पश्यति ॥ १२ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

ज्योतिष इति ॥ अयमर्थः—यद्यात्मनो ग्राह्यग्राहकांशभेदोऽभ्युपगम्यते तदेदं वक्तव्यं ग्राह्यांशोऽपि चेतनः किं वा जड इति । तत्राद्यं निराकरोति दृष्टान्तेन—ज्योतिष इति । आदित्यादिज्योतिषो द्योतकत्वेऽपि प्रकाशनस्वभावत्वेऽपि नात्मप्रकाशनं ज्योतिःस्वरूपप्रकाशनं तद्वदेवं यथा दृष्टान्तस्तथा भेदेऽप्यंशभेदकल्पनेऽपि ज्ञ आत्मा समत्वाच्चैतन्यस्वभावाविशेषादात्मानं नैव पश्यति । न स्वांशं विषयीकरोतीत्यर्थः । न द्वितीयः । जडाजडयोरंशांशित्वेनाभेदानुपपत्तेर्न ग्राह्यांशस्यात्मत्वमिति नात्मनः स्ववेद्यत्वसिद्धिरिति दूषणं स्फुटमेवेत्युपेक्षितमिति द्रष्टव्यम् ॥ १२ ॥

स्वरूपेणांशद्वारेण वा यद्यप्यात्मात्मानं नैव पश्यति तथापि गुणज्ञानस्य कर्मत्वं गमिष्यतीत्याशङ्क्याह—

यद्धर्मा यः पदार्थो न तस्यैवेयात्स कर्मताम् ।
न ह्यात्मानं दहत्यग्निस्तथा नैव प्रकाशयेत् ॥ १३ ॥

यद्धर्मेति ॥ यः पदार्थो यद्धर्मा येनासाधारणधर्मेण धर्मवान्स तस्यैव धर्मस्य कर्मतां नेयात् । तथाच ज्ञानस्वभाव आत्मा न ज्ञानकर्मतां गन्तुमर्हतीत्यर्थः । दृष्टान्तभागः स्पष्टार्थः । आत्मा न स्वीयधर्मव्याप्यः पदार्थत्वादग्निवदित्यर्थः ॥ १३ ॥

उक्तन्यायेन विज्ञानवादी बौद्धोऽपि निराकृत इत्याह—

एतेनैवात्मनात्मानो ग्रहो बुद्धेर्निराकृतः ।
अंशोऽप्येवं समत्वाद्धि निर्भेदत्वान्न युज्यते ॥ १४ ॥

एतेनैवेति ॥ आत्मन इत्यस्मिन्नात्मान इति छान्दसः प्रयोगः । बुद्धेरात्मनः स्वरूपस्यात्मना स्वेनैव ग्रह इति बौद्धपक्षोऽप्येतेनैवोक्तदृष्टान्तप्रबन्धेन निराकृत इत्यर्थः । स्वरूपस्य स्वरूपेणैव ग्राह्यत्वाभावेऽपि एकेनांशेन ग्राह्यत्वमंशान्तरेण ग्राहकत्वमिति कल्पनाप्यत्र न घटत इत्याह—अंशोऽप्येवमिति । एवं प्रागुक्तवर्त्मना । तदेवाह—समत्वाद्धि निर्भेदत्वादिति ॥ १४ ॥

एवं बुद्धेः स्वग्राह्यत्वनिराकरणेनार्थादन्यग्राह्यत्वमुपक्षिप्तमन्यथा तस्याः क्षणिकत्वाद्यसिद्धेः । तत्र माभूत्तर्हि बुद्धिस्तद्ग्राहकश्चापरः शून्यमेवात्मतत्त्वमस्त्विति वादिनं निराकरोति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शून्यतापि न युक्तं वै बुद्धेरन्येन दृश्यता ।
युक्तातो घटवत्तस्याः प्राक्सिद्धेश्च विकल्पतः ॥ १५

शून्यतापीति ॥ एवंसति शून्यतापि न युक्ता यद्वा यथा ग्रा
ह्यता न युक्ता युक्तिविरोधादेवं शून्यतापि बुद्धेस्तदवभासस्य च
अपरोक्षतया तस्याः प्रतीयमानत्वादित्यर्थः । अतो हेतोर्घटवदन्येन
बुद्धेर्ग्राह्यता युक्ता, साक्षिणि पर्यवसानात्तस्यापि न शून्यताशङ्केत्यर्थं
तस्या बुद्धेर्विकल्पतो विकल्पनात्प्रागेव तत्साक्षिणः सिद्धेर्न शून्यता
त्यर्थः । बुद्धिविकल्पनात्पूर्वमेव सुषुप्तावप्यात्मप्रकाशसद्भावोऽन्य
न्यथा सुषुप्तेरसाक्षिकत्वादवस्थान्तरे परामर्शानुदयप्रसङ्गादिति भाव

किंच यत्कार्यं यदन्वितं दृश्यते तत्तस्य कारणं कार्यविकल्पा
च यथा घटान्विता मृत्तथा बुद्ध्यादेर्विकल्पस्य सदार्थान्वितत्वोप
त्वात्प्राक् सिद्धसत्कारणकत्वमेव युक्तमित्याह—

अविकल्पं तदस्त्येव यत्पूर्वं स्याद्विकल्पतः ।
विकल्पोत्पत्तिहेतुत्वाद्यद्यस्यैव तु कारणम् ॥ १६ ॥

अविकल्पमिति ॥ सर्वविकल्परहितं कूटस्थमित्यर्थः । अकार
तेरनुपपत्तेः कारणसत्त्वमेष्टव्यमन्यथा कार्यविशेषार्थिनां कारणविशे
प्रवृत्तिनियमानुपपत्तिः शून्यस्य सर्वत्र सुलभत्वादिति भावः ॥ १६ ॥

कूटस्थस्य ब्रह्मात्मनः कथं कारणत्वं, व्यापारवद्धि कारणं
रज्जुवत्सर्पस्य विवर्ताधिष्ठानतया तस्य कारणत्वं घटत इत्यभिप्रेत्याह—

अज्ञानं कल्पनामूलं संसारस्य नियामकम् ।
हित्वात्मानं परं ब्रह्म विन्द्यान्मुक्तं सदाभयम् ॥ १७

अज्ञानमिति ॥ अज्ञानमनाद्यविद्याकूटस्थाप्रत्यगात्मनि ब्रह्मणि क
नाया मूलमतद्रूपप्रतिभासहेतुरित्यर्थः । तथाच चिदविद्याविवर्त
सत्तात्मना भासमानतया कारणत्वं कूटस्थस्यापि घटत इति भावः
रस्य नियामकमिति विशेषणेन सर्वविकल्पनाया अज्ञानमूलत्वेऽन्य
रेकाख्यं प्रमाणमनुमानं सूचयति । तदज्ञानविशिष्टमेव किं ब्रह्म प्र

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

नुसंधेयं नेत्याह—हित्वेति । सकार्यमज्ञानं हित्वा साक्ष्यत्वेन तस्य साक्षिधर्मतां बाधित्वात्मानं प्रत्यञ्चं साक्षित्वेनोर्वरितं साक्ष्यबाधया परं ब्रह्म परिपूर्णं मुक्तं कार्यकारणप्रपञ्चसंसर्गरहितमभयमद्वयमहं ब्रह्मास्मीति महावाक्यार्थभूतं सदा विन्द्यात् । अनुसंदध्यादित्यर्थः ॥ १७ ॥

संसारनियामकमज्ञानं हित्वात्मानं ब्रह्म विन्द्यादित्युक्तं तत्र कः संसारः कथं वा तस्याज्ञानं कारणं ततो वा कथमात्मनो विवेकः स्यादित्यपेक्षायामाह—

जाग्रत्स्वप्नं तयोर्बीजं सुषुप्ताख्यं तमोमयम् ।
अन्योन्यस्मिन्नसत्त्वाच्च नास्तीत्येतत्त्रयं त्यजेत् ॥ १८ ॥

जाग्रदिति ॥ जाग्रत्स्वप्नौ स्थूलसूक्ष्मविषयभोगलक्षणौ । संसार इति शेषः । तयोर्बीजं कारणं तमोमयमज्ञानप्रायं सुषुप्ताख्यं सुषुप्तिसंज्ञितम् । तमोबीजमिति वक्तव्ये मयट्प्रयोगादज्ञानस्य स्वातन्त्र्यं वार्यते । साभासं तमोबीजमित्यर्थः । एवं कार्यकारणस्वरूपमुक्त्वा तयोस्त्यागप्रकारमाह— अन्योन्यस्मिन्निति । स्थूलसूक्ष्मकारणावस्थानामन्योन्यस्मिन्नसत्त्वात्सत्त्वव्यभिचाराद्विकाराद्दृश्यत्वाच्च एतत्त्रयं रज्ज्वां दृष्टसर्पधारादिवदात्मनि ततोऽन्यत्र च नास्तीति ज्ञात्वा त्यजेद्विलापयेत् । आत्मानं शोधयेदित्यर्थः ॥ १८ ॥

त्यजेदित्युक्ते कर्तृत्वप्रतीतेः कथमस्यात्मनो ब्रह्मत्वमित्यत आह—

आत्मबुद्धिमनश्चक्षुरालोकार्थादिसंकरात् ।
भ्रान्तिः स्यादात्मकर्मेति क्रियाणां संनिपाततः ॥ १९ ॥

आत्मबुद्धीति ॥ आत्मा देहः अर्थादीत्यादिपदाद्देशकालादिग्रहः । आत्मादीनां संकरान्मिथो गुणप्रधानभावेनाध्यासाद्धेतोः क्रियाणां संनिपाततात्समुद्भवादात्मकर्म आत्मनः कर्म क्रिया इत्यात्मा तदधिष्ठानभूतः कूटस्थोऽपि करोतीति भ्रान्तिः स्यात् । तस्मादात्मनः स्वतो निष्क्रियत्वान्निष्क्रियं ब्रह्मत्वमविरुद्धमित्यर्थः ॥ १९ ॥

अन्यधर्मस्याप्यन्यत्रारोपे दृष्टान्तमाह—

निमीलोन्मीलने स्थाने वायव्ये तेन चक्षुषः ।
प्रकाशत्वान्मनस्येवं बुद्धौ न स्तः प्रकाशतः ॥ २० ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निमीलेति ॥ ये नेत्रगोलकस्थाने निमीलोन्मीलने दृष्टे ते वायोः
कार्ये क्रियात्मकस्य वायोस्तदाश्रयत्वान्न चक्षुरिन्द्रियस्य तस्य प्रकाश
क्रियाश्रयत्वानुपपत्तेस्तथापि चक्षुष्येव ते व्यपदिश्येते अध्यासात्
मनसि बुद्धौ च चलनाचलने न स्तः प्रकाशत्वादेव स्वतो न विद्येते
प्राणव्यापाररूपे ते तयोरारोप्येते चञ्चलं मनः स्थिरा बुद्धिरिति
नादित्यर्थः ॥ २० ॥

मनोबुद्ध्योरसाधारणधर्मकथनपूर्वकं प्रासङ्गिकमुपपादितमुपसंहरति

संकल्पाध्यवसायौ तु मनोबुद्ध्योर्यथा क्रमात् ।
नेतरेतरधर्मत्वं सर्वं चात्मनि कल्पितम् ॥ २१ ॥

संकल्पेति ॥ संकल्पधर्मकं मनोऽध्यवसायधर्मिका बुद्धिरिति
न सांकर्यमित्यर्थः । तस्मात्कूटस्थस्यात्मनः स्वतःकर्तृत्वासंभवात्
जडस्य स्वातन्त्र्येण प्रवृत्त्यसंभवाज्जडाजडयोश्च परमार्थतः संबन्धासि
सहेतुकं संसारबन्धनमात्मनि कल्पितमध्यस्तं न परमार्थत इति
द्वयं ब्रह्मेति सिद्धमित्यर्थः ॥ २१ ॥

पूर्वं देहेन्द्रियमनोबुद्धिशून्यात्मवादनिराकरणेन तद्विलक्षण
चितः । इदानीं देहादिविलक्षणोऽप्यात्मा देहसमपरिमाण इति
त्मनः परिच्छिन्नत्वशङ्कायां न तस्य ब्रह्मत्वमुपपद्यते । नच तत्र
तमिति युज्यते कल्पकाभावादित्याशङ्क्याह—

स्थानावच्छेददृष्टिः स्यादिन्द्रियाणां तदात्मताम् ।
गता धीस्तां हि पश्यञ्ज्ञो देहमात्र इवेक्ष्यते ॥ २२ ॥

स्थानेति ॥ इन्द्रियाणां देहाद्बहिर्वृत्त्यभावाद्देहावयवगोलक
देन दृष्टिरुपलम्भः स्यात् । भवतीत्यर्थे स्याच्छब्दः । तथाच
न्द्रियाणां यथायोगं देहपरिमाणत्वात्तदात्मतां गता धीः
दात्म्यं प्राप्ता बुद्धिः स्यादिति योजना । तां बुद्धिं पश्यन्
आत्मा स्वतोऽपरिच्छिन्नोऽपि देहमात्र इव देहपरिमाणावच्छि
ज्ञायते भ्रान्त्या प्रतिभासते । अन्यथा मध्यमपरिमाणस्य घटादि
त्वेनानित्यत्वापत्तेः पारलौकिकसाधनप्रवृत्त्यसंभवप्रसङ्ग इति दिक् ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धिमन्तरेणात्मनः स्वतःपरिच्छेदानुपलम्भाद्युक्तं तस्य ब्रह्मत्वम् । निरवयवस्य च परमार्थत उपाधिसंसर्गायोगाद्युक्तं तस्मिन्सर्वस्य कल्पितत्वं चेति भावः ॥

दिगम्बरमतनिराकरणेन यदनन्तत्वमात्मन उक्तं तदसृष्यमाणाः शाक्याः प्रत्यवतिष्ठन्ते—

क्षणिकं हि तदत्यर्थं धर्ममात्रं निरन्तरम् ।
सादृश्याद्दीपवत्तद्धीस्तच्छान्तिः पुरुपार्थता ॥ २३ ॥

क्षणिकं हीति ॥ तज्ज्ञानं ज्ञेयं चेत्युभयं क्षणिकं हि निश्चितम् । कतिपयानेकक्षणवर्तित्वशङ्कां वारयति—अत्यर्थमिति । स्वरसभङ्गुरमित्यर्थः । धर्ममात्रं वस्तुमात्रं न स्थायि किंचित्तस्याधिष्ठानमस्तीति मात्रस्यार्थः । तर्हि कथं विच्छेदो नोपलभ्यते तत्राह—निरन्तरमिति । नैरन्तर्येणोत्पद्यमानमित्यर्थः । यदि सर्वं क्षणिकमेव कथं तर्हि तदेवेदमिति सोऽहमिति च दृश्यद्रष्टृविषयं प्रत्यभिज्ञानं घटत इत्याशङ्क्य अतिसादृश्यादित्याह—सादृश्यादिति । तद्धीस्तदेवेदमिति मतिस्तच्छान्तिस्तस्य स्थायित्वप्रतिभासस्य ज्ञानज्ञेयगतस्य तन्मूलस्याविवेकस्य च शान्तिरस्तमयः प्रतिभासनिवृत्तिरेव पुरुपार्थता । मोक्ष इत्यर्थः ॥ २३ ॥

सिद्धान्ती दूषणविभागज्ञानाय बौद्धमतभेदं विविच्य दर्शयति—

स्वाकारान्यावभासं च येषां रूपादि विद्यते ।
येषां नास्ति ततश्चान्यत्पूर्वासंगतिरुच्यते ॥ २४ ॥

स्वाकारेति ॥ स्वाकारस्यान्येन ज्ञानेनावभासोऽस्यास्तीति स्वाकारान्याभासं रूपादि बाह्यं वस्तु येषां बौद्धानां मते विद्यते, येषां च ज्ञानमात्रास्तित्ववादिनां मते ततोऽवभासाज्ज्ञानादन्यद्बाह्यं रूपादि नास्ति, पूर्वार्धगचकाराद्येषां मते विज्ञानमपि नास्ति शून्यमेव सर्वमिति तत्र पूर्वासंगतिर्बाह्यार्थसत्त्ववादस्यासंगतिरघटमानता तावदुच्यत इति प्रतिजानीत इति योजना ॥ २४ ॥

तन्मतस्यासंगतिं प्रतिपादयति—

बाह्याकारत्वतो ज्ञप्तेः स्मृत्यभावः सदा क्षणात् ।
क्षणिकत्वाच्च संस्कारं नैवाधत्ते क्वचित्तु धीः ॥ २५ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाह्येति ॥ ज्ञप्तेर्ज्ञानस्यैव बाह्याकारत्वतो बाह्यवस्त्वाकारत्व
क्षरार्थः । ज्ञेयस्योत्पत्तेः प्राक् तावज्ज्ञानसंबन्धो नास्ति । उत्पन्न
सभङ्गुरत्वात्कर्मकारकतया ज्ञानात्प्रागवस्थानाभावादज्ञानेन सं
णाच्च प्रत्यक्षानुभवविरोधान्नित्यानुमेयत्वकल्पनानुपपत्तेश्च परिशे
वाकारो विषय इति विज्ञानमात्रास्तित्ववादिमतप्रवेश इति भाव
नुभवितुरपि ते मते क्षणिकत्वादन्यानुभूतेऽन्यस्य स्मृत्यदर्शनाद्
स्मृत्यभावश्च प्रसज्येतेत्याह—स्मृत्यभाव इति । क्षणात्क्षणिकत्वात्
भावः प्रसज्येतेत्यर्थः । स्मृतिहेतुसंस्कारोऽपि ते दुर्लभ इत्याह—
दिति । धीः क्वचिदपि संस्कारं नैवाधत्ते न निक्षिपति । सर्वस्य
दित्यर्थः । चशब्दान्न स्वात्मन्यपि स्वस्यापि क्षणिकत्वादित्यर्थः ॥ २

क्वचिदित्युक्तं स्फुटयति—

आधारस्याप्यसत्त्वाच्च तुल्यतानिर्निमित्ततः ।
स्थाने वा क्षणिकत्वस्य हानं स्यान्न तदिष्यते ॥ २६ ॥

आधारस्येति ॥ यत्र संस्कार आधातव्य आत्मन्यन्तःकरणे
स्याधारस्य संस्काराधानकालेऽसत्त्वाच्च स्मृत्यभाव इत्यन्वयः ।
श्यनिबन्धनो भ्रम एव प्रत्यभिज्ञानमिति तद्दूषयति—तुल्यतेति ।
रस्य क्रियमाणं दूषणं क्षणिकविज्ञानमात्रवादेऽपि समानं ज्ञेयम्
निर्निमित्तत इत्येकं पदम् । तुल्यतायाः पूर्वापरक्षणयोः सदृश
त्ताभावादित्यर्थः । गुणैरवयवैर्वापि सामान्यं सादृश्यव्यवहार
ज्ञानानां नास्ति निर्गुणत्वान्निरवयवत्वाच्च । तथा पूर्वोत्तरक्षणयोः
सत्त्वाच्च न सादृश्यसिद्धिः । अतस्तुल्यताया असिद्धेर्न तन्निबन्धनं
ज्ञानमित्यर्थः । अथ पूर्वापरक्षणसादृश्यद्रष्टा स्थायी कश्चिदास्थीयते
स्थाने वेति । तत्क्षणिकत्वहानं नेष्यते त्वयेति शेषः ॥ २६ ॥

यत्तु क्षणिकत्वादिभावनया स्थायित्वादिभ्रान्तिशान्तिर्मुक्तिरिति
तदपि नोपपद्यत इत्याह—

शान्तेश्चाप्रयत्नसिद्धत्वात्साधनोक्तिरनर्थिका ।
एकैकस्मिन्समाप्तत्वाच्छान्तेरन्यानपेक्षता ॥ २७ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शान्तेश्चेति ॥ शान्तेरयत्नसिद्धत्वमेव साधयति—एकैकस्मिन्निति। भावानामेकैकस्मिन्क्षणे समाप्तत्वात्संतानस्य चावस्तुत्वादेकैकस्मिंश्च भ्रान्त्यभावाच्छान्तेरन्यनिरपेक्षता सिद्धा, अतस्तत्साधनविधानोक्तिर्निरवकाशेत्यर्थः॥

किंचास्मिन्मते लोकेऽपि साध्यसाधनभावो न घटत इत्याह—

अपेक्षा यदि भिन्नेऽपि परसंतान इष्यताम्।
सर्वार्थे क्षणिके कस्मिंस्तथाप्यन्यानपेक्षता॥ २८॥

अपेक्षा यदीति ॥ कार्यकारणलक्षणानामत्यन्तविलक्षणत्वाद्भिन्नेऽप्यत्यन्तं व्यावृत्तेऽपि क्षीरे यदि दध्नोऽपेक्षा तथा परसंताने सिकतादावपि दध्नोपेक्षेष्यतां अत्यन्तभेदाऽविशेषात्कथं नेष्यत इत्यर्थः। तथाच सिकताभ्योऽपि दधि जायेतेत्यतिप्रसङ्ग इति भावः। प्रसिध्यवष्टम्भेनातिप्रसङ्गपरिहारशङ्कां तदीयामनूद्य निराकरोति—सर्वार्थ इति। सर्वस्य जनस्यार्थेऽर्थ्यमाने कार्यकारणभावेन स्थिते दधिक्षीरादौ वस्तुनि क्षणिकेऽपि कस्मिंश्चित्क्षीर एव कस्यचिद्दध्नोपेक्षा न सर्वत्रेति लोकप्रसिद्धेर्नातिप्रसङ्ग इति चेदिति शङ्कानुवादार्थः। तथापि प्रसिध्याश्रयणेऽपि क्षणिकपक्षेऽन्यानपेक्षतैवेति परिहारभागार्थः॥ २८॥

तत्र हेतुमाह—

तुल्यकालसमुद्भूतावितरेतरयोगिनौ।
योगाच्च संस्कृतो यस्तु सोऽन्यं हीक्षितुमर्हति॥ २९॥

तुल्यकालेति ॥ यौ भावौ तुल्यकालसमुद्भूतावेककालेन लब्धात्मकौ इतरेतरयोगिनौ परस्परं संबद्धौ च यथा पर्जन्याङ्कुरौ तयोर्मध्ये यस्तु भावोऽङ्कुरलक्षणः पर्जन्ययोगात्संस्कृतश्च लब्धातिशयश्च भवेत्स हि खल्वन्यमुपकारिणमीक्षितुमपेक्षितुमर्हति न क्षणिकस्तथा प्रसिध्यभावात्, अतः क्षणिकानां भिन्नकालतया परस्परसंबन्धाभावेनोपकार्योपकारकत्वायोगान्नापेक्षा घटयितुं शक्यत इति भावः॥ २९॥

तदेवं क्षणिकमतं निराकृत्य शून्यमतं निराकरिष्यन्नादौ स्वमतसामञ्जस्यमुपन्यस्यति—

मृषाध्यासस्तु यत्र स्यात्तन्नाशस्तत्र नो मतः।
सर्वनाशो भवेद्यस्य मोक्षः कस्य फलं वद॥ ३०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मृषेति ॥ यद्वा वेदान्तमतेऽपि ब्रह्मात्मनोऽनाधेयातिशयत्वाच्छू
इव तुल्या मोक्षानुपपत्तिरित्याशङ्क्य परमार्थतोऽतिशयायोगेऽपि
स्फलत्वोपपत्तेर्मैवमित्याह—मृषेति । यत्राधिष्ठाने ब्रह्मात्मनि कर्तृत्वा
राध्यासो मृषा मिथ्या । अथवा मृषाध्यासोऽविद्यानिबन्धनो ब्रह्मा
दिसंसारप्रतिभासो यत्र स्यादिति योजना । तत्राहं ब्रह्मास्मीति विद
तन्नाशोऽध्यस्तनाश इति नो मतः । अस्माकं मतमित्यर्थः । तथाच बो
न्धानुभववांस्तस्य ज्ञानाद्बन्धनिवृत्त्या शुद्धस्वरूपानुभवः पुरुषार्थ इ
न्तिमतं समञ्जसमिति भावः । इदानीं शून्यमते दोषमाह—
इति । अनुभवितुरभावात्कस्य पुरुषार्थः । अधिष्ठानारोप्ययोरभावो
फलाभावात्फलासिद्धेर्मोक्षासिद्धिरिति भावः ॥ ३० ॥

सर्वनाश एव मोक्षो बलादापतति परमार्थस्वभावस्यास्तित्वे
वादित्याशङ्क्याह—

अस्ति तावत्स्वयं नाम ज्ञानं वात्मान्यदेव वा ।
भावाभावज्ञतस्तस्य नाभावस्त्वधिगम्यते ॥ ३१ ॥

अस्तीति ॥ स्वयं नामास्तीत्यविवादं सर्ववादिनाम् । स च
आत्मा वान्यच्छून्यं वेति परं विकल्पस्तस्याभावस्तु नाधिगम्यते
न प्रामाणिकीत्यर्थः । कुत इति तत्राह—भावाभावज्ञत इति ।
हारसिद्धार्थानां भावाभावाभिज्ञत्वादन्यथा स्थिरस्य कस्यचित्
सर्वव्यवहारलोपप्रसङ्ग इत्यर्थः ॥ ३१ ॥

तस्याप्यभावः कस्यचिज्ज्ञातीत्याशङ्क्य यस्य भाति तस्यैव सत्त्वा
त्वशङ्कावकाश इति परिहरति—

येनाधिगम्यतेऽभावस्तत्सत्स्यात्तन्न चेद्भवेत् ।
भावाभावानभिज्ञत्वं लोकस्य स्यान्न चेष्यते ॥ ३२ ॥

येनेति ॥ अथवा उक्तमेवार्थं प्रपञ्चयति—येनेति । येना
म्यते सर्वस्य तत्सदेव स्यात् । विपक्षे दोषमाह—तन्न चेदित्यादि
लोकस्य भावाभावानभिज्ञत्वमिति चेत्तत्राह—न चेष्यत इति

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

सोऽभिज्ञो निराकर्तुं न शक्यते निराकर्तुरेव तत्त्वरूपत्वात्तस्य च सत्त्वात्तस्यापह्नववचनं स्वानुभवविरुद्धमेवेत्यर्थः ॥ ३२ ॥

यद्यपि भावाभावविभागज्ञं किंचिदस्तीत्यवगतं तथापि तत्कीदृशमिति विशेषतो निर्धारणे कारणं नास्तीत्याशङ्क्य तत्स्वरूपमुपपादयति—

सदसत्सदसच्चेति विकल्पात्प्राग्यदिष्यते ।
तदद्वैतं समत्वात्तु नित्यं चान्यद्विकल्पितात् ॥ ३३ ॥

सदसदिति ॥ साक्षिस्वरूपं जगच्च सदसद्रूपमिति च यो विकल्पो विवादस्तस्मात्प्रागेव सिद्धं निरालम्बनविकल्पानुपपत्तेर्यत्स्वरूपमिष्यते तत्त्वद्वैतम् । तत्र हेतुः—समत्वादिति । विकल्पात्प्राग्वैषम्यहेत्वभावादित्यर्थः । द्वैतजडविलक्षणत्वं तत्स्वरूपमभिधायाविनाशित्वं विशेषान्तरमाह—नित्यं चेति । अनृतविलक्षणत्वेन सत्यत्वं च विशेषान्तरमाह—अन्यद्विकल्पितादिति । विकल्पात्प्राग्यदिष्यत इत्यत्र स्वतःसिद्धत्वोक्त्या ज्ञानस्वरूपत्वमुक्तं, अद्वैतमित्यानन्त्यमुक्तम् । नित्यमिति कूटस्थत्वोक्त्या दुःखाभावस्य सूचितत्वात्तदविनाभूतानन्दरूपता ध्वनिता । तथाच सत्यज्ञानानन्तानन्दरूपमात्मतत्त्वमित्यनुभवादेव सिद्धमिति न तत्र कारणान्तरं मृग्यमिति भावः ॥ ३३ ॥

नानाविधे द्वैते प्रतीयमाने कथमद्वैतमात्मतत्त्वमनुभूयत इत्यत आह, यद्वा द्रष्टुः सत्यत्वमुपपाद्य दृश्यस्य विकल्पात्मकतयानृतत्वं प्रतिपादयति—

विकल्पोद्भवतोऽसत्त्वं स्वप्नदृश्यवदिष्यताम् ।
द्वैतस्य प्रागसत्त्वाच्च सदसत्त्वादिकल्पनात् ॥ ३४ ॥

विकल्पोद्भवत इति ॥ द्वैतस्यासत्त्वं परमार्थत्वाभाव इष्यताम् । कुतः । विकल्पोद्भवतो विकल्परूपेणोद्भूतत्वात्स्वप्नदृश्यवदिति योजना । द्वैतं न परमार्थं सत् दृश्यत्वात्स्वप्नदृश्यवदित्यर्थः । हेत्वन्तरमाह—प्रागिति । सदसत्त्वादिविकल्पनात्प्रागसत्त्वाच्च स्वप्नदृश्यवदिति संबन्धः । नहि द्वैतस्याज्ञातसत्त्वे प्रमाणमस्तीति भावः ॥ ३४ ॥

न्यायतो द्वैतमिथ्यात्वमुपपाद्य शास्त्रादपि तन्मिथ्यात्वमुपपन्नमित्याह—

वाचारम्भणशास्त्राच्च विकाराणां ह्यभावता ।
मृत्योः स मृत्युमित्यादेर्मम मायेति च स्मृतेः ॥ ३५ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाचारम्भणेति ॥ 'वाचारम्भणं विकारो नामधेयं' इति श्रु
द्विकाराणामभावता सिद्धेति शेषः । वाचारम्भणशब्दो ह्यनृतत्ववचं
म्यते । मृत्तिकेत्येव सत्यमिति कारणे सत्यत्वावधारणादित्यर्थः । मृ
मृत्युमिति शास्त्रेण द्वैतदर्शनस्य निन्दितत्वात्सत्यत्वे द्वैतस्य तद
नृतत्वं तस्योक्तमित्यर्थः । आदिशब्दात् 'नेह नानास्ति किंचन' त
द्वैतापवादकं शास्त्रं गृह्यते । मम मायेत्यत्र 'मामेव ये प्रपद्यन्ते मा
तरन्ति ते' इति गुणमय्याः सकार्याया मायायाः परमात्मज्ञाननि
भगवतोऽनुशासनात्सत्यत्वे तदनुपपत्तेर्मायिकत्वं द्वैतस्य सिद्धमित्य

तदेवं श्रुतियुक्तिभ्यां द्वैतमिथ्यात्वप्रतिपादनेनात्मनोऽद्वितीयत्वे
सत्त्वशुद्धिकारणाभावात्तस्य विशुद्धिरपि सिध्यतीत्याह—

विशुद्धिश्चात एवास्य विकल्पाच्च विलक्षणः ।
उपादेयो न हेयोऽत आत्मा नान्यैरकल्पितः ॥ ३६ ॥

विशुद्धिरिति ॥ अस्यात्मनो विशुद्धिः धर्माधर्मतत्फलसंसर्ग
अतएव द्वैतस्यानृतत्वादेव । स च यतो विकल्पाद्विलक्षणस्तद्विपरीत
तएवात्मा नोपादेयो हेयो वा भवति । हानोपादाने हि मूर्तविषये
प्रत्यगात्मनि ते संभवत इत्यर्थः । किंचान्यैरकल्पितोऽन्यैः कल्पयि
त्वादपि विशुद्ध एवात्मेत्यर्थः । नहि सर्वकल्पनाधिष्ठानं केनचित्
शक्यते अतो नित्यशुद्ध इति भावः ॥ ३६ ॥

कस्मादात्मा कल्पितो न भवतीत्याशङ्क्य कल्पनाहेतोरज्ञानस्य
आत्मन्यभावादित्याह—

अप्रकाशो यथादित्ये नास्ति ज्योतिःस्वभावतः ।
नित्यबोधस्वरूपत्वान्नाज्ञानं तद्वदात्मनि ॥ ३७ ॥

अप्रकाश इति ॥ अनात्मनोऽज्ञानकल्पितत्वादेव तत्र तद्व
द्रष्टव्यम् ॥ ३७ ॥

यथा नित्यबोधस्वरूपत्वादज्ञानमात्मनि वस्तुतो नास्ति तथा सर्व
रहितस्वभावत्वादवस्थान्तरं कूटस्थताप्रच्युतिरूपं तस्य नास्तीत्याह—

तथाऽविक्रियरूपत्वान्नावस्थान्तरमात्मनः ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवस्थान्तरवत्त्वे हि नाशोऽस्य स्यान्न संशयः ॥ ३८ ॥

तथाविक्रियेति ॥ विपक्षे दोषमाह—अवस्थान्तरवत्त्वे हीति ॥ ३८ ॥

मोक्षस्यावस्थान्तरत्वात्कथमवस्थान्तराभाव इति तत्राह—

मोक्षोऽवस्थान्तरं यस्य कृतकः स चलो ह्यतः ।
न संयोगो वियोगो वा मोक्षो युक्तः कथंचन ॥ ३९ ॥

मोक्ष इति ॥ यस्य वादिनो मते मोक्षोऽवस्थान्तरमात्मनः स्यात्तस्य मते कृतको मोक्षः स्यात्प्रागवस्थायोगित्वानुपपत्तेः, अतः स मोक्षश्चलोऽनित्य एव स्यादित्यपुरुषार्थतापत्तिरित्यर्थः । माभूदवस्थान्तरं मोक्षस्तथापि ब्रह्मणः संयोगो वा प्रकृतेर्वियोगो वा मोक्षो भविष्यतीति मतान्तरमाशङ्क्य प्रत्याह—न संयोग इति ॥ ३९ ॥

अयुक्तत्वे हेतुमाह—

संयोगस्याप्यनित्यत्वाद्वियोगस्य तथैव च ।
गमनागमने चैव स्वरूपं तु न हीयते ॥ ४० ॥

संयोगस्येति ॥ कृतकस्यानित्यस्य नियमादित्यर्थः । ननु जीवस्य संसारदेशात्परमात्मनो वा स्वोपासकानुग्रहाय तं प्रत्यागमनं मोक्ष इत्याशङ्क्याह—गमनागमने चेति । न मोक्षो युक्त इति पूर्वेणानुषङ्गः । जीवपरयोर्द्वयोरप्यविक्रियत्वाद्गमनागमनायोगादित्यर्थः । परमते दोषमुक्त्वा स्वमते निर्दोषतामाह—स्वरूपं त्विति । न हीयते न विनश्यति, अत आत्मस्वरूपमेव मोक्षो युक्त इत्यर्थः ॥ ४० ॥

आत्मस्वरूपमोक्षस्य नित्यत्वेऽकार्यत्वे हेतुमाह—

स्वरूपस्यानिमित्तत्वात्सनिमित्ता हि चापरे ।
अनुपात्तं स्वरूपं हि स्वेनात्यक्तं तथैव च ॥ ४१ ॥

स्वरूपस्येति ॥ नास्ति निमित्तं कारणं यस्य तदनिमित्तं तस्य भावोऽनिमित्तत्वं तस्मात् । अकार्यत्वादित्यर्थः । अपरे अवस्थान्तरादयः सनिमित्ता हीत्यतोऽनित्याः स्युरित्यर्थः । स्वरूपस्यानिमित्तत्वं तल्लक्षणोक्त्या साधयति—अनुपात्तमिति । स्वरूपं हि नाम तत्स्वेनान्येन वा नोपात्तमुपार्जितं न भवति । तथा स्वेनान्येन वा त्यक्तमिति न भवति । ननुपा-

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देयं वा वस्त्रादेः स्वरूपत्वं दृष्टम्। अतो नागन्तुकं वस्तुतत्त्वं
नित्यमेवेत्यर्थः ॥ ४१ ॥

उक्तं स्वरूपलक्षणमात्मनि लक्ष्ये योजयति—

स्वरूपत्वान्न सर्वस्य त्यक्तुं शक्यो ह्यनन्यतः।
गृहीतुं वा ततो नित्योऽविषयत्वात्पृथक्त्ववतः ॥ ४२ ॥

स्वरूपत्वादिति ॥ सर्वस्याकाशादेः स्वरूपत्वादारोपितसर्पादे
वत्सर्वस्यात्मभूतत्वात्त्यक्तुं गृहीतुं वा न शक्य आत्मा। कुतः। ह्
दनन्यतो भेदाभावादित्यर्थः। हेयोपादेयत्वाभावे सिद्धे फलि
गृहीतुमिति। आत्मन उपादानहानयोरयोगे पुनरपि क्रमे हे
ह—अविषयत्वात्पृथक्त्ववत इति। नह्यविषय उपादीयते स्वरूपं वा
इति युज्यत इत्यर्थः ॥ ४२ ॥

आत्मनो नित्यत्वे हेत्वन्तरमाह—

आत्मार्थत्वाच्च सर्वस्य नित्य आत्मैव केवलः।
त्यजेत्तस्मात्क्रियाः सर्वाः साधनैः सह मोक्षवित् ॥ ४३ ॥

आत्मार्थत्वाच्चेति ॥ सर्वस्यागमापायिन आत्मार्थत्वादात्मनं
तेष्वनागमापाय्यभोक्तात्मा नित्य एवेति योजना। केवलो निर
र्थः। उपाधितोऽप्यस्य विशेषो नास्तीत्यर्थः। यस्मादात्मा नित्योऽ
नित्यमात्मार्थं सर्वं च स्वात्मन्यवस्थानं मोक्ष इति सिद्धम्, तस्मा
ससाधनं सर्वं कर्म त्याज्यमित्याह—त्यजेदिति ॥ ४३ ॥

इतोऽपि मुमुक्षुणा क्रिया त्याज्येत्याह—

आत्मलाभः परो लाभ इति शास्त्रोपपत्तयः।
अलाभोऽन्यात्मलाभस्तु त्यजेत्तस्मादनात्मताम् ॥ ४४ ॥

आत्मलाभ इति ॥ आत्मलाभान्न परं विद्यत इति स्मृतिः
सर्वस्वत्यागेनाप्यात्मसंरक्षणप्रवृत्तिदर्शनमुपपत्तिः। बहुवचनप्रयोगा
शास्त्रोपपत्तीनां सूचयति। आत्मलाभस्य नित्यसिद्धत्वात्किमिदम
च्यत-इत्यत आह—अलाभ इति। अन्यस्मिन्स्वाज्ञानपरिनिष्पन्ने

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वभेदेनात्मस्फुरणमन्यात्मलाभ उच्यते स तु लाभो न भवति संसारदुःखहेतुत्वात् स्वतःसिद्धपरमानन्दाविर्भावप्रतिबन्धकत्वात्प्रत्युत क्षतिरेवेत्यर्थः । तस्मादनात्मतामहंकाराद्यात्माभिमानितामविद्याध्यारोपितां प्रमाणजनितब्रह्मात्मज्ञानेनाज्ञानबाधनद्वारा त्यजेदित्यर्थः ॥ ४४ ॥

आत्मतत्त्वब्रह्मस्वरूपावगम आत्मलाभ एव परमो लाभः परमपुरुषार्थ इत्यात्मैक्यज्ञानं मोक्षसाधनमात्मा चाद्वयानन्दरूपस्तस्मिन्नज्ञानमूलः संसारो न परमार्थत इति स्वमतमभिधाय तत्रैव मुमुक्षूणां मतिस्थैर्याय मतान्तरनिराकरणं कर्तुमारभमाणो भगवान्भाष्यकारः सांख्यकल्पनां तावन्निराकरोति—

**गुणानां समभावस्य भ्रंशो न ह्युपपद्यते ।**
**अविद्यादेः प्रसुप्तत्वान्न चान्यो हेतुरुच्यते ॥ ४५ ॥**

गुणानामिति ॥ तत्र यत्प्रधानं त्रिगुणात्मकं स्वतन्त्रमचेतनं पुरुषस्य भोगापवर्गार्थं महदादिरूपेण परिणमत इति कल्पयन्ति तत्तावन्न संभवति । यतो गुणानां सत्त्वरजस्तमसां समभावस्य सृष्टिप्राक्कालीनमेलनस्य भ्रंशः प्रच्युतिः पूर्वावस्थात्यागेनावस्थान्तरापत्तिरूपः परिणामो दुर्घटत्वान्नोपपद्यते । कुत इतिचेत्तत्र वक्तव्यं किं निर्हेतुक एव गुणपरिणाम इष्यते सहेतुको वा । नाद्यः । सदा परिणामप्रसङ्गात् । द्वितीयेऽप्यविद्याप्राप्यदृष्टपुरुष एव हेतुस्तदन्यो वा परमेश्वरः । नाद्य इत्याह—अविद्यादेरिति । तस्यामवस्थायामविद्यादेः प्रसुप्तत्वाल्लीनत्वात्पुरुषाणामुदासीनत्वाच्च तन्निमित्तः साम्यावस्थाभ्रंश इत्यर्थः । न द्वितीय इत्याह—नचान्य इति । अविद्यादिभ्योऽन्यपरमेश्वराङ्गीकारेऽपसिद्धान्तप्रसङ्ग इत्यर्थः ॥ ४५ ॥

गुणानामन्योन्यं प्रवृत्तिहेतुत्वं स्यादिति चेत्तत्राह—

**इतरेतरहेतुत्वे प्रवृत्तिः स्यात्सदा न वा ।**
**नियमो न प्रवृत्तीनां गुणेष्वात्मनि वा भवेत् ॥ ४६ ॥**

इतरेतरेति ॥ अस्मिन्पक्षे प्रयोजकान्तरप्रतीक्षानपेक्षणात्सदा प्रवृत्तिः परिणामः स्यान्न वा स्याद्विशेषाभावादित्यर्थः । अथ क्रमेणोत्पत्तिस्थितिसंहाराणां प्रसिद्धत्वान्न सदा तत्प्रसङ्ग इति तत्राह—नियम इति । नियम्यतेऽनेनेति

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नियमो नियामको हेतुः । प्रवृत्तीनां गुणकार्योत्पत्त्यादीनां गुणेषु स्वात्मनि पुरुषे वा यतो न भवेन्न संभवेदतः सदा प्रवृत्तिर्वा योजना । नहि गुणपुरुषातिरिक्तं किंचित्तत्त्वमभ्युपगतमस्ति सांख्यैः वा पुरुषेषु वा स्थित्वा प्रवृत्त्यादिनियामकं स्यादित्यर्थः ॥ ४६ ॥

यथाकथंचिदस्तु वा प्रधानप्रवृत्तिस्तथापि दोषप्रसक्तिः परिहर्तुं न इत्याह—

विशेषो मुक्तबद्धानां तादर्थ्ये न च युज्यते ।
अर्थार्थिनोस्त्वसंबन्धो नार्थी ज्ञो नेतरोऽपि वा ॥ ४७ ॥

विशेष इति ॥ तादर्थ्ये प्रधानस्य पुरुषार्थत्वे सति बद्धमुक्तानां न युज्यते । नहि सर्वपुरुषान्प्रति साधारणे प्रधानस्यैकस्य व्यापारे बद्धाः केचिन्मुक्ता इति व्यवस्थोपपद्यते । तथाच सर्वे एव सदा बद्धा वा स्युरित्यर्थः । किंचास्मिन्मतेऽर्थार्थिनोः शेषशेषिणोः संबन्धश्च न इत्यन्वयः । अर्थ्यते प्रार्थ्यत इत्यर्थः सुखतत्साधनरूपः पदार्थः स्पितो विद्यते यस्य सोऽर्थी तयोः संबन्ध उपकार्योपकारकभावः प्रधानवादे न युज्यते । न घटत इत्यर्थः । कुत इत्यत आह—ज्ञ ज्ञानैकस्वभावः पुरुषो नार्थयुक्तस्तस्यासङ्गत्वनिर्विशेषत्वाभ्युपगमात् वा प्रधानाख्योऽपि नार्थी । जडत्वादेवेत्यर्थः । तस्मात्प्रधानस्य पारार्थ्य नमयुक्तमिति भावः ॥ ४७ ॥

एवं प्रधानस्य पुरुषान्प्रति प्रवृत्तिमङ्गीकृत्यावस्थोक्ता सापीदानीं न इति साधयति—

प्रधानस्य च पारार्थ्यं पुरुषस्याविकारतः ।
न युक्तं सांख्यशास्त्रेऽपि विकारेऽपि न युज्यते ॥ ४८ ॥

प्रधानस्येति ॥ पुरुषस्याविकारतः प्रधानकृतातिशययोगित्वविकाररहितत्वात्प्रधानस्य पारार्थ्यं च न युक्तमिति योजना । नह्यनुपजातातिशयायोगिनि स्वामिन्युपपद्यत इत्यर्थः । यदि पुरुषस्य प्रधानं प्रति उपपत्तये विकारोऽप्यङ्गीक्रियते तदाङ्गीकृतेऽपि विकारे प्रधानस्य पारार्थ्यं न युज्यते । विकारवतो नित्यत्वनियमाभिन्नप्रधानस्वाम्यायोगादित्यर्थः ।

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

शास्त्रेऽपीत्यपिशब्दान्न वेदबाह्यशास्त्रेष्वेवाव्यवस्था किंतु सांख्यशास्त्रेऽपीति तस्यापि पुंबुद्धिमूलत्वं न सम्यग्वेदमूलत्वमस्तीति द्योत्यते ॥ ४८ ॥

प्रधानपुरुषयोः संबन्धाभावमुक्तं प्रपञ्चयति—

संबन्धानुपपत्तेश्च प्रकृतेः पुरुषस्य च।
मिथो युक्तं तदर्थत्वं प्रधानस्याचितित्वतः ॥ ४९ ॥

संबन्धानुपपत्तेश्चेति ॥ पुरुषस्यासङ्गोदासीनस्वभावत्वात्प्रकृतेर्जडत्वेन स्वतःप्रवृत्त्यनुपपत्तेः तयोर्मिथः संबन्धानुपपत्तेः प्रधानस्य तादर्थ्यं पुरुषार्थत्वमयुक्तं युक्तिशून्यं। अचितित्वतो जडत्वात्। प्रधानस्य भृत्यवदुपकारकत्वासंभवादित्यर्थः। अतः प्रधानपुरुषयोरर्थार्थित्वकल्पना न युक्तेति भावः ॥४९॥

पुरुषस्याविकारत इत्युक्तमविकारित्वं स्पष्टयति—

क्रियोत्पत्तौ विनाशित्वं ज्ञानमात्रे च पूर्ववत्।
निर्निमित्ते त्वनिर्मोक्षः प्रधानस्य प्रसज्यते ॥ ५० ॥

क्रियोत्पत्ताविति ॥ पुरुषे यत्किंचित्क्रियोत्पत्तौ अभ्युपगम्यमानायां विनाशित्वं तस्य प्रसज्येत यत्क्रियावत्तदनित्यं यथा घटादीति व्याप्तिदर्शनात् नित्यश्च पुरुषोऽभ्युपगम्यते सांख्यैरित्यर्थः। ननु न परिस्पन्दः परिणामो वा पुरुषस्य क्रियाभ्युपगम्यते येनानित्यत्वप्रसङ्गः, किंतु ज्ञानमेव क्रियाभ्युपगम्यते इति चेत्तर्हि जन्यमजन्यं वा ज्ञानमभ्युपेयते, नोभयथापि घटत इत्याह—ज्ञानमात्रे च पूर्ववदिति। जन्यज्ञानयोगे विकारित्वादनित्यत्वापत्तिरजन्यज्ञानयोगित्वे न प्रधानंप्रति स्वाम्यसंभव इत्युक्तदोषापत्तिरित्यर्थः। तस्मात्पुरुषस्यासङ्गोदासीनत्वादनाधेयातिशयत्वात्प्रवर्तकत्वानुपपत्तेरन्यस्य च हेत्वन्तरस्य प्रधानविकारातिरिक्तस्यानभ्युपगमात्प्रलये च प्रधानविकाराणामलब्धात्मतया प्रवर्तकत्वायोगान्निर्निमित्तैव प्रधानप्रवृत्तिरङ्गीकार्या। तथाचाव्यवस्था सुस्थैवेति प्रतिपादयन्नुपसंहरति—निर्निमित्त इति। प्रधानस्य व्यापारे निर्निमित्तेऽभ्युपगम्यमाने तस्य सर्वदा प्रवृत्तिसंभवात् दृक्शक्तिमतां पुरुषाणां तद्दर्शनस्यावर्जनीयत्वादनिर्मोक्षः प्रसज्येत, अत इत्थमव्यवस्थितं सांख्यशास्त्रं न मुमुक्षुभिः श्रद्धेयमिति भावः ॥ ५० ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निर्गुणपुरुषमतप्रक्रियां निराकृत्य सगुणाः पुरुषा इति वैशेषिक-प्रक्रियां दूषयति—

न प्रकाश्यं यथोष्णत्वं ज्ञानेनैवं सुखादयः।
एकनीडत्वतोऽग्राह्याः स्युः कणादादिवर्त्मनाम् ॥ ५१ ॥

न प्रकाश्यमित्यादिना ॥ आत्मगतेन ज्ञानेनात्मगताः सुखादयः प्रकाशन्त इति हि ते मन्यन्ते तन्नोपपद्यते। तथाहि यथोष्णत्वमग्नि-निष्ठेन प्रकाशेन न प्रकाश्यं प्रकाशार्हं न भवति एकाश्रयत्वादेवं सुखादयो गुणा आत्मनिष्ठेन ज्ञानेनाग्राह्या न ग्राह्याः स्युः। कुतः। एकनीडत्वत एकाश्रयत्वात्। कणादादिवर्त्मनां मत इत्यर्थः। विषयविषयिणोः एकाश्रयत्वे ग्राह्यमिदं ग्राहकमिदमिति च भेदनियमो न सिध्येदिति भावः॥

न केवलमेकाश्रयत्वादेव ज्ञानसुखादीनां भास्यभासकत्वानुपपत्तिः, यौगपद्यासंभवादपीत्याह—

युगपत्समवेतत्वं सुखविज्ञानयोरपि।
मनोयोगैकहेतुत्वादग्राह्यत्वं सुखस्य च ॥ ५२ ॥

युगपदिति ॥ नेति पूर्वश्लोकादनुवर्तनीयम्। तथाचायमर्थः—सुखज्ञानयोर्न युगपत्समवेतत्वं संभवति। कुतः। मनोयोगैकहेतुत्वान्मनःसंयोगस्यासमवायिकारणस्यैकमेवात्मगुणंप्रति हेतुत्वाभ्युपगमात्तथाच सुखासमवायिकारणमनःसंयोगनाशे सुखस्य नाशात्संयोगान्तरासमवायिकारणकज्ञानेन सुखस्य न ग्राह्यत्वं प्रत्यक्षत उपपद्यते इति। अपिशब्दादात्मसमवायोऽपि न प्रमाणयुक्तिपथमवतरतीति द्योत्यते। चशब्दादात्ममनसोर्निरवयवयोः प्रदेशाभावादात्मनोरिव संयोगानुपपत्तिः संयोगे वा विभोरात्मनो विनाशानुपपत्तिस्तदभावे संयोगान्तरानुपपत्तौ ज्ञानादिकार्यक्रमानुपपत्तिः। कार्याणां समवायिकारणदेशानतिवर्तित्वनियमदर्शनादन्यत्रेहापि तत्प्रसङ्गादसमवायिकारणमनःसंयोगस्याणुदेशमात्रवर्तितया तत्कार्यस्यापि तन्मात्रवर्तित्वे सकलशरीरगतात्मवेदनाया अप्रत्यक्षत्वप्रसङ्ग इत्यादिदूषणगणः समुच्चीयते॥

सुखवदेव दुःखेच्छाद्वेषप्रयत्नानामप्यग्राह्यत्वं न्यायसाम्यादित्याह—

तथान्येषां च भिन्नत्वाद्युगपज्जन्म नेष्यते।

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

गुणानां समवेतत्वं ज्ञानं चेन्न विशेषणात् ॥ ५३ ॥

तथेति ॥ अन्येषां गुणानां भिन्नत्वात्परस्परविलक्षणत्वाज्ज्ञानसुखयोरिव युगपज्जन्म नेष्यते । एकस्यात्ममनःसंयोगस्यानेककार्यहेतुत्वासंभवस्योक्तत्वादित्यर्थः । चकारादेकाश्रययोर्विषयविषयित्वायोगः पूर्वोक्तः संगृह्यते । माभूज्ज्ञानभास्यत्वं सुखादीनामेकस्मिन्नात्मनि समवेतत्वमेव तेषां ज्ञानं नामेत्याशङ्क्य ज्ञानेन तेषां विशेषितत्वान्नैवमित्याह—गुणानामिति । ज्ञातं सुखं ज्ञातं दुःखमिति विशिष्टव्यवहारदर्शनादित्यर्थः ॥ ५३ ॥

एतदेव विशदयति—

ज्ञानेनैव विशेषत्वाज्ज्ञानाप्यत्वं स्मृतेस्तथा ।
सुखं ज्ञातं मयेत्येवं तवाज्ञानात्मकत्वतः ॥ ५४ ॥

ज्ञानेनैवेति ॥ ज्ञानेन विशेषत्वादेव ज्ञानाप्यत्वं सुखादीनामेष्टव्यमित्यर्थः । ज्ञानाहितसंस्कारजन्यस्मृतिविषयत्वादपि ज्ञानाप्यत्वं सुखादेरेष्टव्यमित्याह—स्मृतेस्तथेति । सुखं मया ज्ञातमित्येवं स्मृतेरिति संबन्धः । किंच ज्ञानविशिष्टात्मसमवेतत्वं सुखादेर्ज्ञानमिष्यते केवलात्मसमवेतत्वं वा । नाद्यः । युगपत्क्षणिकात्मविशेषगुणानां समवायासंभवस्योक्तत्वादात्मगतसंख्यापरिमाणादेरपि ग्रहणप्रसङ्गाच्चेत्यभिप्रेत्य द्वितीयं दूषयति—तवेति । तव मते आत्मनो ज्ञानभिन्नत्वाद्घटवद्द्रव्यमात्रत्वात्तत्समवेतत्वमात्रेण न सुखादिसिद्धिः सर्वस्य जडत्वादित्यर्थः ॥ ५४ ॥

ज्ञानसुखादीनामात्मगुणत्वाभ्युपगमेन भास्यभासकत्वासंभव उक्तः, इदानीं तेषामात्मगुणत्वमपि दुर्भणमित्याह—

सुखादेर्नात्मधर्मत्वमात्मनस्तेऽविकारतः ।
भेदादन्यस्य कस्मान्न मनसो वा विशेषतः ॥ ५५ ॥

सुखादेरिति ॥ सुखादेरात्मधर्मत्वं न संभवति । ते तव मते आत्मनोऽविकारतो विकारित्वाभावाद्विभुत्वाङ्गीकारेण नित्यत्वाभ्युपगमात् । नहि नित्यमनित्यगुणकमिति सांप्रति दृष्टान्तः कोऽपि विद्यतेऽतो नात्मनो गुणवत्त्वसिद्धिः दूरे ग्राह्यग्राहकत्वकल्पनेति भावः । किंच गुणगुणिनोरत्यन्तभेदवादिनस्तव मते असंबात्मनोऽयं सुखादिरिति नियमोऽपि दुर्घट इत्याह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेदादिति । अन्यस्यात्मान्तरस्य मनसो वा कस्मात् सुखादयो गुणाः
विशेषतो भेदाविशेषादित्यक्षरार्थः । अयमाशयः—सर्वात्मनां विभु
काराद्यच्छरीरावच्छेदेनात्मनि सुखादयो जायन्ते तत्र तदा सर्वात्मनां
तद्भेदस्य च तत्रानवगमादस्यैवात्मनोऽयं सुखादिधर्मो नान्यस्येति
न शक्यते । न मनःसंयोगभेदो नियामको मनस्यपि सर्वात्मसंबन्ध
शेषात् । नाप्यदृष्टभेदो नियामकस्तस्याप्यात्मधर्मत्वासिद्धेरदृष्टहेतुप्रय
मनःसंयोगनिमित्तकत्वात्तस्य च सर्वात्मसु विशेषासिद्धेरदृष्टस्यापि
शेषसिद्धिरिति । यत्र कुत्रापि जायमानं सुखादि यस्य कस्यापि
त्तथा मनसः क्रियावत्त्वान्मूर्तत्वात्सुखादिदेशाव्यभिचाराच्च तत्रैव
द्धर्माः सुखादयो न स्युर्विनिगमनाभावादिति ॥ ५५ ॥

यद्यपि वैशेषिकैर्ज्ञानस्य ज्ञानान्तरवेद्यत्वमिष्यते तदप्ययुक्तमनव
ज्ञादित्याह—

स्यान्मालाऽपरिहार्या तु ज्ञानं चेज्ज्ञेयतां व्रजेत् ।
युगपद्वापि चोत्पत्तिरभ्युपेतात इष्यते ॥ ५६ ॥

स्यान्मालेति ॥ अयमर्थः—येनात्मनः संयोगेन प्रथमं ज्ञानं
तदन्येन संयोगान्तरेण तद्विषयं ज्ञानान्तरं जायते किंवा तेनैव
आद्ये दोषमाह—स्यादिति । ज्ञानं चेज्ज्ञेयतां व्रजेत्तदाऽपरिहार्या
ज्ञानपरम्परा स्यात् । ज्ञानानवस्था स्यादित्यर्थः । विषयावभाससमये
ज्ञानं नावभासेत तदा विषयः स्वयमेव भासते ज्ञानाधीनतया
कुमशक्यत्वात्तदैव ज्ञानभानं ज्ञानान्तरमेष्टव्यं तस्याप्यभाने पूर्व
ज्ञानान्तरभास्यत्वासिद्धेस्तज्ज्ञानाय ज्ञानान्तरमिति दुर्निवारानवस्था
भावः । तुशब्दश्चार्थः । तेनच प्रथमज्ञानोत्पत्त्यनन्तरं मनसि क्रिया
विभागस्ततः पूर्वसंयोगनाशस्ततः संयोगान्तरं ततो ज्ञानान्तरमिति
णविलम्बेनोत्पद्यमानमुत्तरज्ञानं पूर्वज्ञानावभासनं कथं कुर्यात्तस्य
भावादित्यादियुक्त्यन्तरं समुच्चीयते । अथ द्वितीयं कल्पमनूद्य
दूषयति—युगपद्वेति । अपिचानवस्थादोषपरिजिहीर्षया पूर्वोत्तरज्ञान
स्यादेव संयोगाद्युगपद्वोत्पत्तिरभ्युपेता चेदित्यनुपज्यते तदातोऽस्मादेव
गाद्युगपत्संनिकृष्टरूपरसगन्धशब्दस्पर्शज्ञानानामपि तदैवोत्पत्तिरिष्यतां

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

संस्कारोद्बोधसंपाते सहकारिलाभात्तदर्थस्मृतीनामप्युत्पत्तिरिष्यतामतो न ज्ञानस्य ज्ञानान्तरवेद्यत्वकल्पना युक्तिमतीति स्थितमित्यर्थः ॥ ५६ ॥

किंचात्मनश्चैतन्यं स्वरूपलक्षणमुच्यते तटस्थलक्षणं वा । आद्ये पृथिव्यादौ गन्धादिवत्सनातनत्वात्तस्य च स्वरूपानतिरेकादनित्यज्ञान आत्मेत्युक्षेपो मृषैव स्यात्, द्वितीये तु स्वरूपलक्षणमन्यदनात्मासाधारणं वक्तव्यं तच्च चेतनातिरिक्तं न किमपि संभावितमस्त्यतो देहादिजडविलक्षणमात्मानमभ्युपगच्छता सदा निर्विशेषचिद्रूपः कूटस्थ एवात्माभ्युपेतव्योऽन्यथा विकारिणोऽनित्यत्वनियमाद्बन्धमोक्षान्वय्येक आत्मा भवतीति दुःसंपादमित्येतत्सर्वमभिप्रेत्याह—

**अनवस्थान्तरत्वाच्च बन्धो नात्मनि विद्यते ।**
**नाशुद्धिश्चाप्यसङ्गत्वादसङ्गो हीति च श्रुतेः ॥ ५७ ॥**

अनवस्थान्तरत्वाच्चेति ॥ नास्त्यवस्थान्तरं यस्य सोऽनवस्थान्तरः तस्य भावोऽनवस्थान्तरत्वं तस्मादिति विग्रहः । आत्मन इति शेषः । तथाचात्मनः कूटस्थत्वात्तस्मिन्नात्मनि बन्धो विशेषगुणवत्त्वलक्षणः परमार्थतो न विद्यते । चकारात्तन्निवृत्तिरूपो मोक्षोऽपि न विद्यत इति योज्यम् । तस्मान्नित्यशुद्ध एवात्मेत्यत्र प्रमाणं वदन्परकल्पनानिराकरणफलमाह—नाशुद्धिश्चापीति । स्वगतधर्मकृतबन्धाभाववदन्यसंसर्गकृताशुद्धिरपि न चास्त्यसङ्गत्वादित्यर्थः ॥ ५७ ॥

इतश्च नात्मनः पारमार्थिको बन्ध इत्याह—

**सूक्ष्मैकागोचरेभ्यश्च न लिप्यत इति श्रुतेः ॥ ५८ ॥**

सूक्ष्मेति ॥ सूक्ष्मत्वं मनोवागगम्यत्वमेकत्वमद्वितीयत्वमगोचरत्वं निर्विशेषत्वमेतेभ्यश्च हेतुभ्यो नित्यशुद्ध एवात्मा । 'न लिप्यते लोकदुःखेन बाह्य' इति श्रुतेरित्यर्थः । 'यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते । सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते' इति भगवद्वचनं चात्रोदाहर्तव्यम् । अर्धश्लोकः ॥ ५८ ॥

एवमात्मनो नित्यशुद्धबुद्धमुक्तस्वभावत्वं साधयतो वेदान्तिन आत्मोपदेशशास्त्रानर्थक्यमित्याक्षिपन्ति पूर्ववादिनः—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं तर्हि न मोक्षोऽस्ति बन्धाभावात्कथंचन।
शास्त्रानर्थक्यमेव स्यान्न बुद्धेर्भ्रान्तिरिष्यते।
बन्धो मोक्षश्च तन्नाशः स यथोक्तो न चान्यथा ॥ ५९

एवं तर्हीति ॥ यदीत्यध्याहार्यम्। यद्येवं नित्यशुद्ध आत्म
कथंचन केनापि रूपेण बन्धाभावान्मोक्षोऽपि नास्ति बन्धपूर्वक
क्षस्य तदभावेऽभावात्तथाच मोक्षोपायोपदेशशास्त्रानर्थक्यमेव स्या
उत्तरमाह—न बुद्धेरित्यादिना। बुद्धेर्भ्रान्तिः बन्ध इष्यत इत्य
तन्नाशो भ्रान्तिनाशो मोक्ष इति चेष्यते न परमार्थत इत्यर्थः। स
यथा पूर्वमुक्तोऽज्ञानं कल्पनामूलं संसारस्य नियामकमिति। न
चान्यथा तथाचाज्ञानकल्पितबन्धभ्रमनिवृत्त्यर्थत्वादुपदेशशास्त्रस्य न
प्रसङ्ग इत्यर्थः ॥ ५९ ॥

अज्ञानमूलबुद्धिधर्माध्यासलक्षणो बन्धश्चिदात्मनीत्युक्तमुपपादय

बोधात्मज्योतिषा दीप्ता बोधमात्मनि मन्यते।
बुद्धिर्नान्योऽस्ति बोद्धेति सेयं भ्रान्तिर्हि धीगता ॥ ६

बोधात्मेति ॥ बोधरूपस्यात्मनो यज्ज्योतिः प्रकाशश्चिदाभासं
व्याप्ता प्रकाशिता बुद्धिरात्मनि स्वस्यां बोधं चैतन्यं मन्यते अन्यो
साक्षी नास्ति अहमेव बोद्धेति साभासा बुद्धिः प्रकाशते तदविवेक
बद्धोऽकर्तेत्यादिरात्मनि संसारो धीगता भ्रान्तिरेवेत्यर्थः ॥ ६० ॥

बुद्धेरेव बोधात्मत्वं यथाप्रतीति परमार्थं किं न स्यादिति चेन्नेत्याह

बोधस्यात्मस्वरूपत्वान्नित्यं तत्रोपचर्यते।
अविवेकोऽप्यनाद्योऽयं संसारो नान्य इष्यते ॥ ६१

बोधस्येति ॥ बुद्धेरागन्तुकत्वेन बोधव्यभिचाराद्बोधस्य च विका
सुषुप्ते सद्भावादात्मस्वरूपत्वात्तत्र बुद्धौ स उपचर्यतेऽध्यस्य अवि
वेकादित्यर्थः। तर्हि सोऽविवेकः सादिरनादिर्वेति वीक्षायामाह—
कोऽपीति। यद्यविवेक एवानाद्यज्ञानकृतत्वादनादिस्तर्हि तस्यैव प्र

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

मान्निवृत्तिः स्यान्न संसारस्येति भ्रमं वारयति—संसारो नान्य इष्यत इति। कर्त्रादिधर्मकबुद्ध्यविवेक एव संसार इत्यर्थः ॥ ६१ ॥

बन्धस्याज्ञानात्मकत्वे फलितमाह—

मोक्षस्तन्नाश एव स्यान्नान्यथानुपपत्तितः ।
येषां वस्त्वन्तरापत्तिर्मोक्षो नाशस्तु तैर्मतः ॥ ६२ ॥

मोक्ष इति ॥ ज्ञानादज्ञाननिवृत्त्या तत्कार्यबन्धननिवृत्तिरेव मुक्तिर्नान्यथा हेयस्योपादेयस्य वा मोक्षस्यानुपपत्तितोऽनुपपत्तेरित्यर्थः। अनुपपत्तिमेव द्रढयन्पक्षान्तरं निराकरोति—येषामिति। येषां वादिनां स्वरूपादन्यवस्त्वन्तरापत्तिरात्मनो मोक्ष इति मतं तैरात्मनाश एव मोक्ष इतीष्टः स्यात्। स्थितस्य नष्टस्य वान्यस्यान्यत्वासंभवाद्वस्त्वन्तरापत्तिशब्देन यदि प्राप्तिर्विवक्ष्यते तथापि 'संयोगा विप्रयोगान्ता' इति न्यायेन कृतकस्यानित्यत्वव्याहेश्चानित्यो मोक्षः स्यादित्यर्थः ॥ ६२ ॥

यथावस्त्वन्तरापत्तिर्मोक्ष इति पक्षेऽनुपपत्तिरनित्यत्वापत्तिश्च तथात्मनोऽवस्थान्तरापत्तिर्मोक्षपक्षेऽपि स दोषस्तुल्य इत्याह—

अवस्थान्तरमप्येवमविकारान्न युज्यते ।
विकारोऽवयवित्वं स्यात्ततो नाशो घटादिवत् ॥ ६३ ॥

अवस्थान्तरमप्येवमिति ॥ अविकारित्वादात्मनोऽवस्थान्तरमपि न युज्यते। यदि पुनर्विकारोऽप्यभ्युपगम्येत तथासति सावयवत्वमात्मनः स्यात्ततः सावयवत्वान्नाश एव घटादिवदपरिहार्यः स्यात्। अतो भ्रान्तिनिवृत्तिमात्र एव मोक्षो नान्यथा संभवतीत्यर्थः ॥ ६३ ॥

वेदान्तसिद्धान्तादन्या बन्धमोक्षादिकल्पना वादिभिरुत्प्रेक्षिताः श्रुतिस्मृतिन्यायबाधितत्वान्नादरणीया मुमुक्षुभिरित्युपसंहरति—

तस्माद्भ्रान्तिरतोऽन्या हि बन्धमोक्षादिकल्पनाः ।
सांख्यकाणादबौद्धानां मीमांसाहतकल्पनाः ॥ ६४ ॥

तस्मादिति द्वाभ्याम् ॥ भ्रान्तिरेव परिशेषादात्मनि बन्धमोक्षप्रतिभास इति कल्पना श्रुत्याद्यविरुद्धा, अतोऽन्या बन्धमोक्षादिकल्पनाः आदि-



C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दात्तद्धेतुकल्पनाश्च नादर्तव्याः कदाचनेति संबन्धः। अतोऽस्मा-
न्तादन्या बन्धमोक्षादिकल्पना हि यस्माद्भ्रान्तिः प्रमाणशून्या तस्मा-
व्येति वान्वयः। केषां वा कल्पना नादर्तव्येत्यत आह—सांख्येति।
साहता विचारविरुद्धा विचारासहा वा कल्पना मीमांसाहता
इत्यर्थः॥ ६४॥

अनादरे हेतुमाह—

शास्त्रयुक्तिविहीनत्वान्नादर्तव्याः कदाचन।
शक्यन्ते शतशो वक्तुं दोषास्तासां सहस्रशः॥ ६५॥

शास्त्रेति॥ शास्त्रयुक्तिविरुद्धाश्च ताः कल्पना इत्याह—
इति॥ ६५॥

इतश्च सांख्यादिकल्पना नादर्तव्या इत्याह—

अपि निन्दोपपत्तेश्च यान्यतोऽन्यानि चेत्यतः।
त्यक्त्वातो ह्यन्यशास्त्रोक्तीर्मतिं कुर्याद्दृढां बुधः॥ ६६॥

अपि निन्दोपपत्तेरिति॥ 'यान्यतोऽन्यानि शास्त्राणि पृथिव्यां
धानि वै। शङ्कनीयानि विद्वद्भिर्धर्मशुद्धिमभीप्सुभिः॥ या वेदबाह्याः
याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः
इत्यादिनिन्दावचनान्नादर्तव्या इत्यर्थः। अतोऽन्यशास्त्रोक्तीस्त्यक्त्वा
मतिं बुधः कुर्यादित्यन्वयः॥ ६६॥

कथं मतिं कुर्यात्कुत्र चेत्याकाङ्क्षायामाह—

श्रद्धाभक्ती पुरस्कृत्य हित्वा सर्वमनार्जवम्।
वेदान्तस्यैव तत्त्वार्थे व्यासस्याभिमतौ तथा॥ ६७॥

श्रद्धेति॥ श्रद्धा श्रुत्युक्तेऽर्थे विश्वासः, भक्तिस्तत्परता ते पुर
आदरेणावलम्ब्येत्यर्थः। सुगममन्यत्॥ ६७॥

एवमुक्तं परपक्षनिराकरणं संक्षिप्य तत्प्रयोजनं कथयति—

इति प्रणुन्ना द्वयवादकल्पना निरात्मवादाश्च तथाहि युक्तिभिः।
व्यपेतशङ्काः परवादतः स्थिरा मुमुक्षवो ज्ञानपथे स्युरित्यु

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

इतीति ॥ इति इत्थं युक्तितः प्रणुन्नाः निराकृताः द्वयवादकल्पनाः भेद-वादकल्पनाः। सांख्यादिकल्पना इति यावत्। तथा निरात्मवादाः बौद्धवादाश्च युक्तितः प्रणुन्ना इत्यर्थः। किमर्थं तदाह—व्यपेतेति । मुमुक्षवः परवादतः परशास्त्रेभ्यो व्यपेतशङ्कास्तत्प्रामाणिकत्वशङ्कारहिताः सन्तो ज्ञानपथे वेदान्तोक्तज्ञानमार्गे स्थिराः स्युर्भवेयुरित्युत अपीति योजना ॥ ६८ ॥

वेदान्तविहितब्रह्मात्मज्ञानस्यैव पुरुषार्थसाधनत्वमिति तत्स्वरूपकथनपूर्वकं मुमुक्षूणां तन्निष्ठत्वमावश्यकमिति दर्शयति—

स्वसाक्षिकं ज्ञानमतीव निर्मलं विकल्पनाभ्यो विपरीतमद्वयम् ।
अवाप्य सम्यग्यदि निश्चितो भवेन्निरन्वयो निर्वृतिमेति शाश्वतीम्

स्वसाक्षिकमिति ॥ अद्वयम्। अखण्डवस्तुमात्राकारमित्यर्थः। निरन्वयः। निरस्ताज्ञानतत्कार्यसंबन्धः सन्नित्यर्थः। शाश्वती निर्वृतिरखण्डानन्दानुभवस्वरूपाविर्भावः ॥ ६९ ॥

यथोक्तज्ञानाधिकारिणं संक्षिप्तविशेषणसारं कथयंस्तत्त्वनिष्ठालक्षणमाह—

इदं रहस्यं परमं परायणं व्यपेतदोषैरभिमानवर्जितैः ।
समीक्ष्य कार्या मतिरार्जवे सदा न तत्त्वदृक्स्वान्यमतिर्हि कश्चन ॥

इदं रहस्यमिति ॥ यदवाप्य शाश्वतीं निर्वृतिमेति तदिदं रहस्यमुपदेशैकगम्यम्। परमं परमात्मतत्त्वप्रकाशत्वात्सर्वोत्तमम्। परायणं निरवधिकसर्वाश्रयम्। परमगतिरूपमिति यावत्। एवंविधमात्मज्ञानं समीक्ष्य सम्यगालोच्य। दृढीकृत्येति यावत्। व्यपेतदोषैरपगतेन्द्रियबहिर्मुखैरभिमानवर्जितैः पाण्डित्यादिनिमित्तचित्तदोषरहितैः। शान्तैर्दान्तैश्चेति यावत्। एवंविधैरधिकारिभिरार्जवे ऋजुभावे सर्वसमे ब्रह्मात्मतत्त्वे मतिर्निष्ठा सदा कार्या। ब्रह्मात्मतत्त्वमेव ऋजु सर्वदा सर्वत्रैकरूपत्वात्तत्स्वरूपमेवार्जवं नाम तस्य निर्विशेषत्वादिति द्रष्टव्यम्। तथाच ब्रह्माभेदेनात्मज्ञाननिष्ठा तत्त्वनिष्ठेत्युक्तं भवति। एतदेव व्यतिरेककथनेन विशदयति—न तत्त्वदृगिति। यः कश्चन स्वान्यमतिः प्रत्यगात्मनोऽन्यस्मिन्ब्रह्मणि मतिर्यस्य स स्वान्यमतिः स न

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्त्वदृक् तत्त्वदृष्टिर्न भवतीत्यर्थः । 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' । 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद' इत्यादिश्रुतेः ॥ ७० ॥

एवमतियत्नलभ्येन ज्ञानेन किं फलं साध्यते तदाह—

अनेकजन्मान्तरसंचितैर्नरो विमुच्यतेऽज्ञाननिमित्तपातकैः ।
इदं विदित्वा परमं हि पावनं न लिप्यते व्योम इवेह कर्मभिः ॥

अनेकेति ॥ स्पष्टार्थः ॥ ७१ ॥

इदं ज्ञानमाचार्येण कस्मै दातव्यमित्यपेक्षायां विस्तृतविशेषणविशिष्टं शिष्यमाह—

प्रशान्तचित्ताय जितेन्द्रियाय च प्रहीणदोषाय यथोक्तकारिणे ।
गुणान्वितायानुगताय सर्वदा प्रदेयमेतत्सततं मुमुक्षवे ॥

प्रशान्तेति ॥ प्रशान्तचित्ताय शान्तिगुणयुक्ताय । जितेन्द्रियाय च । प्रहीणदोषाय अनेकजन्मार्जितयज्ञादिपरितोषितेश्वरप्रसादहतकल्मषाय । यथोक्तकारिणे शास्त्रोक्तस्वधर्मस्य यथाशास्त्रमनुष्ठात्रे । गुणान्विताय विद्याविनयार्जवादिगुणयुक्ताय । सर्वदा दीर्घकालं सततं च नैरन्तर्येणानुगताय गुरुमनुसृताय एवंविधाय मुमुक्षवे मोक्षमात्रेच्छावते एतज्ज्ञानं गुरुणा देयम् । प्रतिपादयितव्यमित्यर्थः ॥ ७२ ॥

एवंविधः शिष्यो महावाक्येनावगमितमात्मतत्त्वं कथमवगच्छति किं फलं प्राप्नोतीत्यपेक्षायामाह—

परस्य देहे न यथाभिमानिता परस्य तद्वत्परमार्थमीक्ष्य च ।
इदं हि विज्ञानमतीव निर्मलं संप्राप्य मुक्तोऽथ भवेच्च सर्वतः ॥

परस्येति ॥ यथा परस्यान्यस्य देहे परस्य नाभिमानिता अहंकारममकाराभिमानित्वं न संभवति तद्वत् स्वदेहेऽपि परमार्थमीक्ष्य देहातिरिक्तमात्मानमीक्ष्यालोच्याभिमानरहितः सन्निति यावत् । चकारात्तत्प्रतिपादकानि वाक्यान्यालोच्येति गृह्यते । एवंविधं इदं विज्ञानं पूर्वोक्तसाक्षात्कारं

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

ष्याथ तदैव सर्वतो मुक्तो भवेत्। निरस्ताज्ञानतत्कार्यसंस्कारपरमानन्दानुभवब्रह्मात्मस्वरूपो भवेदित्यर्थः ॥ ७३ ॥

किमिति गुणविशेषवच्छिष्यपरीक्षणं गुरोर्यस्मै कस्मैचिच्छिष्याय कस्माद्विद्या न दीयते तत्राह—

नहीह लाभोऽभ्यधिकोऽस्ति कश्चन स्वरूपलाभात्स इतो हि नान्यतः । न देयमैन्द्रादपि राज्यतोऽधिकं स्वरूपलाभं त्वपरीक्ष्य यत्नतः ॥ ७४ ॥

नहीति ॥ स्वरूपमात्मतत्त्वं लभ्यतेऽनेनेति स्वरूपलाभस्तत्त्वज्ञानं तस्मादभ्यधिको लाभः कश्चन कोऽपीह देवमनुष्यादिभवपरम्परायां नास्ति । 'आत्मलाभान्न परं विद्यत' इति स्मृतेः । स लाभः इतएव वेदान्तवाक्याद्वान्यतोऽन्यस्माच्छास्त्रान्तरान्न भवति । हि यस्मात्तस्मादयत्नतः शिष्यमपरीक्ष्य स्वरूपलाभं तु ज्ञानं न देयम् । ऐन्द्रादपि राज्यतो राज्यादधिकमिति विशेषणेन 'प्राणाय्ययाय चान्तेवासिने नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूयः' इति श्रुतिं प्रमाणयति ७४

इति षोडशं पार्थिवप्रकरणम् ॥ १६ ॥

---

## सम्यङ्मतिप्रकरणम् १७

परपक्षनिराकरणमुखेनोक्तं मोक्षसाधनं ज्ञानं स्वप्रक्रिययापि व्यक्तीकर्तुं प्रकरणान्तरमारभमाणो देवताभक्तेर्विद्याप्राप्त्यन्तरङ्गत्वं द्योतयन् प्रकरणप्रतिपाद्यार्थं नमस्कारव्याजेन संक्षिप्याह—

आत्मा ज्ञेयः परो ज्ञात्मा यस्मादन्यन्न विद्यते ।
सर्वज्ञः सर्वदृक् शुद्धस्तस्मै ज्ञेयात्मने नमः ॥ १ ॥

आत्मा ज्ञेय इति ॥ आत्मा स्वरूपं ज्ञेयः स्वरूपतोऽवधार्यः । किं घटादिवद्विषयत्वेन, नेत्याह—परो ज्ञात्मेति । हि यस्मादात्मा सर्वज्ञेयापरो

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञेयत्वधर्मैरहितः। तत्कुतस्तत्राह—यस्मादन्यन्न विद्यत इति। यस्मात् स्वरूपादन्यत्परमार्थतः पृथग्भूतं तद्धर्मो वा न विद्यते। तथाच रूपा तथा चक्षुराद्यगोचरत्वात्स्वसमानजातीयप्रत्यक्षव्यक्त्यन्तराभावाभावे सत्यनुमानार्थापत्तिप्राह्यत्वाभावात्सदृशवस्त्वन्तराभावेनोपमान स्वात् षष्ठीजातिगुणक्रियादिधर्मराहित्येन शब्दागोचरत्वात् ज्ञातुः स देव नास्तीत्यभ्युपगन्तुमशक्यत्वात्परिशेषाद्विपथभूतदेहेन्द्रियान्तःक ख्यानेनान्विष्य तत्साक्षितया विपयत्वेन स्वयंप्रकाश आत्मा ज्ञेय इ एवं त्वंपदार्थं परिशोध्य तस्य तत्पदार्थात्मकत्वं वाक्यार्थं कथयितुं तत ह—सर्वज्ञ इति। सामान्यतः सर्वं जानातीति सर्वज्ञः। विशेषतः सर्व तीति सर्वदृक्। सर्वज्ञत्वमुपलक्षणमुक्त्वा तस्य स्वरूपलक्षणमाह इति। अनृतजडपरिच्छिन्नदुःखादिप्रपञ्चसंसर्गरहितः। सत्यज्ञानान रूप इत्यर्थः। वाक्यार्थं तत्त्वंपदार्थैक्यमाह—तस्मा इति। पूर्वो ज्ञेयात्मा तस्मै ज्ञेयात्मने तस्मै सर्वज्ञत्वाद्युपलक्षिताय सत्यादिस्वरूपा ब्रह्मीभावोऽस्तु। तन्नेददृष्टिविलय एवेह नमःशब्दार्थः॥ १॥

देवताभक्तिवद्गुरुभक्तेरपि विद्याप्राप्त्यन्तरङ्गत्वं 'यस्य देवे परा भ देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति श्रु द्योतयन् गुरुपरम्परां प्रमाणयति—

पदवाक्यप्रमाणज्ञैर्दीपभूतैः प्रकाशितम्।
ब्रह्म वेदरहस्यं यैस्तान्नित्यं प्रणतोऽस्म्यहम्॥ २॥

पदवाक्येति॥ यैर्गुरुभिर्वेदरहस्यं ब्रह्म प्रकाशितं तान्नित्यं प्रणतो हमिति संबन्धः। पदानां वाक्यानां च शक्तितात्पर्यमर्यादया पदवाक्ये प्रसिद्धे, प्रमाणमनुमानादि तज्ज्ञैरित्यर्थः। दीपभूतैरयत्ने थंप्रकाशकैर्यैरिति संबन्धः॥ २॥

सामान्येनाचार्यपरम्परां नमस्कृत्य विशेषेण स्वगुरुप्रणामपूर्व प्रतिजानीते—

यद्वाक्सूर्यांशुसंपातप्रनष्टध्वान्तकल्मषः।
प्रणम्य तान्गुरून्वक्ष्ये ब्रह्मविद्याविनिश्चयम्॥ ३॥

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

यद्वागिति ॥ ब्रह्मविद्याविनिश्चयो यस्मान्न्यायविशेषाद्भवति तं न्यायविशेषं वक्ष्य इत्यर्थः । सुगममन्यत् ॥ ३ ॥

किमर्थं ब्रह्मविद्याविनिश्चयो वक्ष्यते तदाह—

**आत्मलाभात्परो नान्यो लाभः कश्चन विद्यते ।**
**यदर्था वेदवादाश्च स्मार्ताश्चापि तु याः क्रियाः ॥ ४ ॥**

आत्मलाभादिति ॥ आत्मलाभस्य परमत्वे प्रमाणं सूचयति—यदर्था इति । वेदवादा वेदवचनानि स्मार्ताश्च वादाः स्मृतिवचनानि साक्षाज्ज्ञानार्था वेदवादाः स्मृतिवादाश्च यदर्थाः अपितु याः क्रियाः कर्मपरवेदस्मृतिविहितास्ताश्च चित्तशुद्धिपरम्परया यदर्थास्तस्मादात्मलाभादिति संबन्धः ॥४॥

पुत्रादिलाभापेक्षया आत्मलाभस्य परमत्वं प्रामाणिकमित्युक्तमुपपादयति—

**आत्मार्थोऽपि हि यो लाभः सुखायेष्टो विपर्ययः ।**
**आत्मलाभः परः प्रोक्तो नित्यत्वाद्ब्रह्मवेदिभिः ॥ ५ ॥**

आत्मार्थोऽपीति ॥ योऽपि लाभः पुत्रधनादिविषयो लोके सुखायेष्टः सोऽप्यात्मार्थं आत्मसुखार्थं इति हि प्रसिद्धमिति योजना । तर्हि पुत्रादिलाभेनैवात्मसुखसिद्धेः किमित्यात्मज्ञानमात्मलाभायेष्टव्यं विशेषाभावादित्यत आह—विपर्यय इति । सुखविपर्ययः दुःखायापि स लाभः स्यात्कदाचित्कस्यचित्पुत्रादेरेव दुःखहेतुत्वदर्शनादित्यर्थः । तस्माल्लाभान्तरापेक्षया आत्मलाभः परमो लाभ इति तदर्थं सर्वपरित्यागेनात्मज्ञानं संपादनीयमित्यभिप्रेत्याह—आत्मेति । विपर्ययप्रसङ्गस्तत्र नास्तीत्याह—नित्यत्वादिति । तथाच श्रुतिः 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं त्वां रोत्स्यतीतीश्वरोऽहं तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवती'ति ॥ ५ ॥

आत्मसुखलाभस्य नित्यत्वमुक्तं साधयति—

**स्वयं लब्धस्वभावत्वाल्लाभस्तस्य नचान्यतः ।**
**अन्यापेक्षस्तु यो लाभः सोऽन्यदृष्टिसमुद्भवः ॥ ६ ॥**

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वयमिति ॥ तस्यात्मनो लाभो नचान्यतोऽन्यनिमित्तको न कं कुतः । स्वयं लब्धस्वभावत्वात् । साधनसाध्यत्वाभावान्नित्यत्वमि पुत्रादिलाभस्य साधनाधीनत्वेनानित्यत्वं साधयति—अन्यापेक्ष इति । दृष्टेः सकाशात्समुद्भवो यस्य स तथा । अन्याधीनस्य तदपगमेऽपग त्यत्वमित्यर्थः ॥ ६ ॥

केयमन्यदृष्टिः का वा तदुद्भवस्यान्यपुत्रादिलाभस्य नित्यत्वे हानि आह—

**अन्यदृष्टिस्त्वविद्या स्यात्तन्नाशो मोक्ष उच्यते ।**
**ज्ञानेनैव तु सोऽपि स्याद्विरोधित्वान्न कर्मणा ॥ ७ ॥**

अन्यदृष्टिस्त्विति ॥ अन्यस्मिन्ननात्मनि दृष्टिः प्रतीतिर्यस्याः सा दृष्टिः सा अविद्या भवतीत्यर्थः । ततश्चात्माऽविद्याकृतभ्रान्तिनिबन्धन त्रादिलाभप्रीतेस्तस्याश्च स्वप्नतुल्यत्वान्नित्यात्मप्रियहानिः स्यादिति तथा चाविद्यानिवृत्तिमन्तरेणात्मस्वरूपनित्यसुखलाभाभावात्सा संपा तन्नाश इति । मोक्षो नित्यनिरतिशयपरमानन्दाविर्भावोऽज्ञानहानि तस्याप्युपायमाह—ज्ञानेनैवेति । सोऽप्यज्ञाननाशो मोक्षो ज्ञानेनैव स्यैवाज्ञानविरोधित्वान्न कर्मणा तस्याज्ञानविरोधित्वाभावात् । तस्मा र्मपरित्यागेनात्मज्ञानं सर्वथा संपादनीयमेव मुमुक्षुणेत्यर्थः ॥ ७ ॥

ननु विरोधाभावात्सकार्याऽविद्यानिवृत्तिरूपो मोक्षः कर्मणा भवतु तेन नित्यपुरुषार्थो भविष्यत्यतः किं ज्ञानेनेति नेत्याह—

**कर्मकार्यस्त्वनित्यः स्यादविद्याकामकारणः ।**
**प्रमाणं वेद एवात्र ज्ञानस्याधिगमे स्मृतः ॥ ८ ॥**

कर्मकार्यस्त्विति ॥ तत्र हेतुगर्भं विशेषणं—अविद्येति । मिथ्या मूलरागप्रयुक्तकर्मसाध्यत्वादित्यर्थः । कर्मसाध्यं फलमनित्यं ज्ञानक नित्यमित्यत्र किं प्रमाणमिति चेद्वेद एवेत्याह—प्रमाणमिति । 'तद्यथे चितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते', 'ब्रह्मवि परं', 'तरति शोकमात्मवि'दित्यादि वेद एव कर्मसाध्यमनित्यं ज्ञान नित्यं मोक्षरूपमित्यत्र ज्ञानस्य विवेकस्याधिगमे प्रमाणं विद्वद्भिः स्मृ त्यर्थः ॥ ८ ॥

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

किंच वेदस्य सर्वस्याध्ययनविध्युपपादितत्वादपुरुषार्थे पर्यवसानायोगात्परमपुरुषार्थपर्यवसानायात्मैक्यज्ञानपरत्वमेष्टव्यं, ततो न कर्मसु तस्य महातात्पर्यं लभ्यत इत्यभिप्रेत्याह—

ज्ञानैकार्थपरत्वात्तं वाक्यमेकं ततो विदुः ।
एकत्वं ह्यात्मनो ज्ञेयं वाक्यार्थप्रतिपत्तितः ॥ ९ ॥

ज्ञानैकार्थेति ॥ ज्ञानमेवैकोऽर्थः प्रयोजनं परं प्रतिपाद्यं यस्य वेदस्य स तथा तस्य भावस्तत्त्वं तस्मात्तं वेदमेकं वाक्यं विदुः । वाक्यप्रमाणकोविदा इति शेषः । किं तस्य ज्ञेयमित्यपेक्षायामाह—एकत्वं हीति । ततो ज्ञानादात्मन एकत्वमेव ज्ञेयमित्यन्वयः । हिशब्दोऽवधारणार्थः । ज्ञानप्रकारमाह—वाक्यार्थप्रतिपत्तित इति । सत्यं ज्ञानमनन्तमित्याद्यवान्तरवाक्यार्थप्रतिपत्तिद्वारेण तत्त्वमस्यादिमहावाक्यैरात्मनो ब्रह्मैकत्वं ज्ञेयमित्यर्थः । आत्मतत्त्वज्ञानस्यैव परमपुरुषार्थहेतुतायाः श्रुतत्वात्कर्मकाण्डमपि तत्त्वज्ञानापेक्षितचित्तशुद्धिहेतुकर्मविधानद्वारा पारम्पर्येण परमपुरुषार्थसाधनभावं भजत इति युक्तमेकार्थपर्यवसानेनैकवाक्यत्वं वेदवाक्यस्येति भावः ॥ ९ ॥

नन्वात्मनो ब्रह्मणश्चैकत्वज्ञानमनुपपन्नं तयोरपर्यायशब्दवाच्यत्वेन भेदादित्याशङ्क्य नैवमन्योन्याश्रयापत्तिरित्याह—

वाच्यभेदात्तु तद्भेदः कल्प्यो वाच्यो हि तच्छ्रुतेः ।
त्रयं त्वेतत्ततः प्रोक्तं रूपं नाम च कर्म च ॥ १० ॥

वाच्यभेदादिति ॥ तद्भेदोऽपर्यायशब्दभेदो वाच्यभेदात्कल्प्यस्त्वया वाच्योऽपि तच्छ्रुतेरपर्यायशब्दभेदश्रवणाद्भिन्नः कल्प्यः । तथाच सिद्धे वाच्यजीवब्रह्मभेदे तद्वाचकशब्दयोरपर्यायत्वसिद्धिस्तत्सिद्धावितरसिद्धिरित्यन्योन्याश्रयः स्यादित्यर्थः । स्वरूपतो भेदकल्पनायां प्रमाणाभावादिति भावः । भेदस्याप्रामाणिकत्वादेकत्वज्ञानमुपपन्नमित्युक्ते भेदस्यापि प्रमाणसिद्धत्वं पूर्ववादी शङ्कते—त्रयं त्वेतदिति । 'त्रयं वा इदं नामरूपं कर्मे'ति श्रुत्या तत आत्मनोऽतिरिक्तं रूपं नाम च कर्म च प्रोक्तमतो नैकत्वमेव वेदार्थ इत्यर्थः । सिद्धान्ती दूषयति—असदेतदिति । हि यस्मादेतत्त्रयमन्योन्येन कल्पितं अन्योन्यसापेक्षसिद्धिकं तस्मादसदित्यन्वयः । अन्योन्याश्रयग्रस्ततया भेदस्य प्रमातुमशक्यतया प्रामाणिकत्वाभावाद्यथाकथंचिल्लोकसिद्धो मिथ्याभेदः

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुत्यानूद्यते केवलं वैराग्यायातो नाद्वैतज्ञानविरोधितेति भावः। ननु सर्वस्य वेदस्यैकार्थज्ञानपरत्वेनैकवाक्यत्वं नियन्तुं शक्यतेऽपुनरुक्तमद्वं शास्त्रं तत्रार्थभेदस्य प्रतीयमानत्वादिति चेत्सत्यम्। तथापि न तत्र युक्तं प्रमाणयुक्तिबाधितत्वाद्वैतस्येत्यभिप्रेत्याह—वाच्यभेदादिति। भेदे प्रामाणिके सति तद्विषयतात्पर्यवच्छब्दभेदादनेकवाक्यता सिध्येत् तद्भेदो वाच्यभेदोऽपि तच्छ्रुतेर्न वाचकशब्दभेदश्रुतेः श्रवणात्कल्प्यः। रान्तरेण वाच्यभेदासिद्धेः। नहि शब्दाधीनोऽर्थतत्त्वनिश्चयः आरोपितेऽपि शब्ददर्शनात्। नाप्यर्थाधीनः शब्दनिश्चयः। एकस्मिन्नपि पुरुषे पिता मातुलो जामाता पितृव्य इत्युपाधिभेदव्यतिरेकेण वस्तुभेदो विद्यते। चानाद्यविद्याविकल्पितोऽनेकोपाधिभेदावच्छिन्नानेककर्त्रादिकारकभेद ज्ञानापेक्षितान्तःकरणशुद्धिसाधनकर्मविधिपरत्वात्कर्मकाण्डस्यात्मतत्त्व वयैकवाक्यत्वोपपत्तेर्निरतिशयानन्दात्यन्तिकदुःखनिवृत्तिफलस्य सर्व सतोऽभिलापगोचरस्यात्मतत्त्वज्ञानादन्यतोऽसंभवादविद्याविद्यावस्थाभे देनाधिकारिभेदप्रयोगभेदयोश्चोपपत्तेरेकपुरुषापेक्षितैकपरमपुरुषार्थैक प्रकाशत्वेनैकवाक्यता वेदस्य युक्तेति भावः। एवं द्वैतस्याविद्याक युक्तिमभिधाय प्रमाणमभिधत्ते—त्रयं त्विति। यतोऽयमनिरूपिता प्रपञ्चस्ततो हेतोरेतत्सर्वं दृश्यं रूपं नाम च कर्म चेति त्रयं राशिहृ प्रोक्तमिति योजना। 'त्रयं वा इदं नामरूपं कर्म' त्वस्मिन्ब्राह्मणे हेतु शब्दविशेषाणां वाङ्मात्रत्वं, रूपविशेषाणां चक्षुर्मात्रत्वं, कर्मविशेषाणां मात्रत्वमिति विशेषप्रविलापनेन तत्सामान्यं त्रित्वमभिधाय तदेवं क्रमयमात्मा एकः सन्नेतत्त्रयमित्यैकात्म्यं सर्वस्य जगत उपसंहृतं तत्त्वभेदोऽस्तीत्यर्थः ॥ १० ॥

उपसंहरति—

असदेतत्त्रयं तस्मादन्योन्येन हि कल्पितम्।
कृतो वर्णो यथा शब्दाच्छ्रुतोऽन्यत्र धिया बहिः ॥ ११ ॥

असदेतदिति ॥ उक्तार्थमेतत्। अन्योन्यापेक्षयावगम्यमानत्वा दृष्टान्तमाह—कृत इति। शब्दाच्छ्रुतो वर्ण इन्द्रादिरूपविशेषः सहस्र बाहुत्वादिः धिया प्रत्यूह्यान्यत्र बहिः कुड्यादौ चित्ररूपेण कृतो

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

कल्पितो मिथ्येति योजना । नहि चित्रे दृश्यमेवंरूपमिन्द्रस्य वा भवति । तथा न मिथ्यार्थगोचरः शब्द इत्यर्थः ॥ ११ ॥

शब्दान्मिथ्यार्थकल्पनामुदाहृत्य मिथ्यार्थाच्छब्दकल्पनामुदाहरति—

दृष्टं चापि यथारूपं बुद्धेः शब्दाय कल्पते ।
एवमेतज्जगत्सर्वं भ्रान्तिबुद्धिविकल्पितम् ॥ १२ ॥

दृष्टं चापीति ॥ भित्तिपटादौ दृष्टं देवतारूपं तथा तद्वदेव बुद्धेस्तद्दर्शनसंस्कृताया आगत्य शब्दाय शब्दव्यपदेशाय कल्पत इति योजना । दार्ष्टान्तिकमाह—एवमिति । एतत्सर्वं जगदेवं यथा दृष्टान्तमेवं भ्रान्तबुद्ध्या शुक्तौ रजतमिवात्मनि विविधं कल्पितं न वस्तुसदस्तीत्यर्थः ॥ १२ ॥

जगतो मिथ्यात्वे फलितमाह—

असदेतत्ततो युक्तं सच्चिन्मात्रं न कल्पितम् ।
वेदश्चापि स एवाद्यो वेद्यं चान्यत्तु कल्पितम् ॥ १३ ॥

असदेतत्तत इति ॥ सर्वं कल्पितं चेच्छून्यवादापत्तिरित्याशङ्का न कार्येत्याह—सच्चिदिति । निरधिष्ठानकल्पनानुपपत्तेः सर्वकल्पनास्पदं सच्चिन्मात्रं प्रत्यक्त्वेन कल्पितं सर्वसाक्षित्वात्तस्य सर्वकल्पनायाः प्रागेव सिद्धत्वादित्यर्थः । वेदाचार्यादेरात्मतत्त्वप्रतिपत्तिहेतुत्वादकल्पितत्वमस्तीति कथं सच्चिन्मात्रमकल्पितमित्युच्यते तत्राह—वेदश्चापीति । स एवाद्यः पूर्वसिद्ध आत्मा वेद्योऽपि वेदनहेतुः श्रुत्याचार्यरूपेण मायया प्रथते । अर्थप्रकाशनशक्तेरन्यत्र जडेऽसंभवात् । नह्यग्निगतप्रकाशनशक्तिव्यतिरेकेण दीपादेरपरा प्रकाशनशक्तिरस्ति वेद्यं च तत्त्वं स एवाद्य इति संबन्धः । अन्यत्तु विशेषमात्रं कल्पितम् । तथाच कल्पितशेषानुगतत्वेनात्मन एव बोधकत्वं सर्वकल्पनापवादावधितया तस्यैव बोध्यत्वं चोपपद्यत इत्यर्थः ॥ १३ ॥

कथं स एवाद्यो वेद्यं चेत्याशङ्क्य स्वप्नदृष्टान्तेन व्युत्पादयति—

येन वेत्ति स वेदः स्यात्स्वप्ने सर्वं तु मायया ।
येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते ॥ १४ ॥

येनेति ॥ स्वप्ने स्थित आत्मा येन स्वाप्नं विषयजातं वेत्ति स एव वेदः

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्। नहि स्वप्ने चिदात्मव्यतिरिक्तं भासकमस्ति। आदित्यादि तदोपरमात्स्वयंज्योतिष्ट्वश्रुतेश्च। यत्तु तत्र सर्वं वेद्यं तदपि मायया नहि स्वप्ने बाह्यं विषयजातमस्ति तत्रानवकाशात् 'न तत्र रथा' इ तेश्च। तथा स एवात्मा स्वसाक्ष्यमायाकृतोपाधिभेदावच्छिन्नसदात्मना स्तदनुस्यूतचिदात्मना वेदनरूपश्चेति वेद्यवेदितृभावो मायिक इत्यर्थः। रादीन्द्रियाणामुपरमात्स्वप्नगत आत्मा येन पश्यति रूपमुपलभते तदं रिति योजना। स्वप्ने रूपाकारसंस्कृतमनोवस्थचिन्निष्ठाविद्यात्मकं रू शयन्पश्यतीत्युच्यते एवं श्रोत्रादावप्यूह्यम् ॥ १४ ॥

येन स्वप्नगतो वक्ति सा वाग्घ्राणं तथैव च।
रसनस्पर्शने चैव मनश्चान्यत्तथेन्द्रियम् ॥ १५ ॥

येन स्वप्नगत इति ॥ येन स्वप्नगतो जिघ्रति तद्घ्राणमित्यादि योगं योज्यम् ॥ १५ ॥

कथमेकरूपं चैतन्यं वेद्यवेदकचक्षुरादिरूपेण भिद्यते तत्राह—

कल्प्योपाधिभिरेवैतद्भिन्नं ज्ञानमनेकधा।
आधिभेदाद्यथा भेदो मणेरेकस्य जायते ॥ १६ ॥

कल्प्योपाधिरिति ॥ स्वप्नकल्प्योपाधिभेदादेकमेवेदं ज्ञान भिन्नमित्यत्र दृष्टान्तमाह—आधिभेदादिति। मणेः स्फटिकादेराधि लपीताद्युपाधिभेदात्तथा ज्ञानमेकमनेकधा जायत इत्यर्थः ॥ १६ ॥

यथा स्वप्ने निर्भेदस्य ज्ञानस्य कल्पितोपाधिभेदादशेषव्यवहार दृष्टमेवं जागरितेऽप्यशेषव्यवहारास्पदत्वं तस्योपपन्नमिति दार्ष्टान्तिक

जाग्रतश्च यथा भेदो ज्ञानस्यास्य विकल्पितः।
बुद्धिस्थं व्याकरोत्यर्थं भ्रान्त्या तृष्णोद्भवक्रियः ॥ १७ ॥

जाग्रतश्चेति ॥ कथंचिद्रूपस्य ज्ञानस्यास्य जाग्रतो विकल्पितत्वं बुद्धिस्थमिति। आत्मा स्वल्पज्ञानकञ्चुकः प्रथमं बुद्धिं परिकल्प्य कञ्चुकः संस्तदविवेकाद्भ्रान्त्या बुद्धिस्थमेवार्थं व्याकरोति स्वात्मगतत्वेन व्यवहरति। ततश्च भ्रान्तिप्रयुक्ततृष्णाख्यकामोद्भूता क्रिया हानोपाद

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

वहाररूपा यस्य स तथा । अविद्याप्रत्युपस्थापितान्तःकरणपरिणामावस्थामवभासयंस्तदविवेकादनेकरूपप्रपञ्चमात्मनि कल्पयन्व्यवहरतीत्यर्थः ॥ १७ ॥

स्वप्नदृष्टान्तसिद्धमनूद्य दार्ष्टान्तिकं निगमयत्यर्थेन—

स्वप्ने तद्वत्प्रबोधे यो बहिश्चान्तस्तथैव च ।
आलेख्याध्ययने यद्वत्तदन्योन्यधियोद्भवम् ॥ १८ ॥

स्वप्ने तद्वदिति ॥ यद्वत्स्वप्ने व्यवहारस्तद्वत्प्रबोधेऽपि व्यवहारः । यथैव स्वप्नेऽन्तर्बहिर्भावस्तथैव प्रबोधेऽप्यन्तर्बहिर्भाव इति योजना । अन्तर्बहिर्भावेन प्रथमानो व्यवहारः स्वप्नवत्कल्पित इत्युक्त्वा तत्रैव दृष्टान्तान्तरमाह—आलेख्येति । यथा आलेख्यापेक्षयाध्ययनं श्लोकादेरध्ययनापेक्षया च पत्रादौ पुनरालेखनं मिथ्यैव सर्वगतानां निरवयवानां वर्णानां लेखनासंभवादित्यर्थः । एषाक्षरयोजना । आलेख्यं च अध्ययनं चालेख्याध्ययने तदुभयं यथान्योन्यधियोद्भवमन्तर्बहिर्भावेन परस्परापेक्षबुद्धिजन्यं बही रेखाविशेषाकारेणानुभूतमपेक्ष्यान्तर्बुद्धौ संस्काररूपेणाधीयते तदपेक्ष्य च बहिः शब्दव्यवहारायालिख्यत इत्यक्षरेषु दृष्टयोरन्योन्यापेक्षत्वेनालेख्याध्ययनयोरवस्तुत्वं यद्वत्तद्वदात्मन्यप्यन्तर्बहिर्भावेन दृश्यमानः सर्वो व्यवहारो न वस्तुसन्निति ॥ १८ ॥

बुद्धिनिष्ठमर्थं व्याकुर्वन्भ्रान्त्या तृष्णोद्भवक्रिय इत्युक्तं प्रपञ्चयति—

यदायं कल्पयेद्भेदं तत्कामः सन्यथाक्रतुः ।
यत्कामस्तत्क्रतुर्भूत्वा कृतं यत्तत्प्रपद्यते ॥ १९ ॥

यदायमिति ॥ अयमात्मा पूर्वं भ्रान्तिसंस्कारवशाद्यदा बुद्धिकञ्चुकारूढः सन्नविद्यया भेदं कल्पयेत्तदा तत्कामः शोभनत्वेनाध्यस्तविषयभेदेऽभिलापवान्सन्यथाक्रतुर्यथाकामं कृतसंकल्पो भवति । क्रतुः संकल्प इदमहं साधयिष्य इत्यध्यवसायरूपः । ततश्च यत्कामः तत्क्रतुर्भूत्वा यत्कामसाधनं कर्म कृतं तन्निष्पादितं तत्फलावस्थं प्रपद्यते प्राप्नोति । पुनस्तत्संस्कारसचिवो भेदं परिकल्प्य कामक्रतुपूर्वकं कर्मानुष्ठाय फलभागित्येवमन्योन्यधिया हेतुफलात्मना परिकल्पितं संसारमनुभवतीत्यर्थः । तथाच श्रुतिः 'अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तथाक्रतुर्भवति तत्कर्म कुरुते यत्कर्मकुरुते तदभिसंपद्यत' इति ॥ १९ ॥

उक्तं दृश्यमिथ्यात्वं सोपपत्तिकमुपसंहरति—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अविद्याप्रभवं सर्वमसत्तस्मादिदं जगत् ।
तद्वता दृश्यते यस्मात्सुषुप्ते न च गृह्यते ॥ २० ॥

अविद्याप्रभवमिति ॥ तद्वता विद्यावता यस्माद्गृह्यते तदभावे च नैव गृह्यते तस्मात्सर्वमिदं जगदविद्याप्रभवं मिथ्याज्ञानविजृम्भि दपरमार्थमिति योजना ॥ २० ॥

तर्हि जगद्धेतुरविद्या कीदृशी तन्निवर्तिका विद्या वा कीदृशी विद्याविद्ये ज्ञायेते इत्याकाङ्क्षायामाह—

विद्याविद्ये श्रुतिप्रोक्ते एकत्वान्यधियौ हि नः ।
तस्मात्सर्वप्रयत्नेन शास्त्रे विद्या विधीयते ॥ २१ ॥

विद्याविद्ये इति ॥ एकत्वान्यधियौ विद्याविद्ये । ब्रह्मात्मैकत्व तद्भेदधीरविद्येति स्वरूपोक्तिः । श्रुतिप्रोक्ते इति ज्ञापकोक्तिः । 'अथ देवता'मिति श्रुत्या भेदधियोऽविद्यात्वं लोकानुभवसिद्धभेदानुवाद किन्तु तद्ब्रह्मविदित्याक्षेपपुरःसरं 'ब्रह्म वा इदमग्र आसीत्तदात्मान ब्रह्मास्मी'ति प्रवृत्ता प्रमाणभूताऽप्रसिद्धार्थबोधिनी श्रुतिरेकत्वज्ञानस्य ज्ञापयति नोऽस्माकमित्यर्थः । यस्मादविद्यावद्विद्या लोकस्यानुभव भवति तस्मात्सर्वप्रयत्नेनाध्यारोपापवादप्रबन्धनिर्माणेन शास्त्रे विद्या यते प्रतिपाद्यत इति मुमुक्षुः शास्त्रतस्तत्परो भवेदित्यर्थः ॥ २१ ॥

शास्त्रे चेत्सर्वप्रयत्नेन विद्या व्युत्पाद्यते किमिति तर्हि सर्वोऽपि प्रवर्तते प्रवर्तमानो वा कथं विद्यां न प्राप्नोतीत्यपेक्षायां चित्तशु त्यभिप्रेत्याह—

चित्ते ह्यादर्शवद्यस्माच्छुद्धे विद्या प्रकाशते ।
यमैर्नित्यैश्च यज्ञैश्च तपोभिस्तस्य शोधनम् ॥ २२ ॥

चित्ते हीति ॥ तस्माच्चित्तशुद्धिः कर्तव्येति शेषः । तर्हि कैरुपायैः शोधनमित्यपेक्षायामाह—यमैरिति । अहिंसाब्रह्मचर्यादयो यमाः शौचादिभिर्नियमैरित्यर्थः । यज्ञैः स्वाश्रमविहितधर्मैरीश्वरसात्कृतैः तस्य चित्तस्य शोधनं कार्यमित्यर्थः ॥ २२ ॥

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

तपःशब्दार्थमाह—

शारीरादि तपः कुर्यात्तद्विशुद्ध्यर्थमुत्तमम् ।
मनआदिसमाधानं तत्तद्देहविशोषणम् ॥ २३ ॥

शारीरादीति ॥ तस्य स्वरूपं भगवतोक्तम् 'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् । ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपो मानसमुच्यत'इति । एतान्यपि सात्त्विकान्यनुष्ठेयानि न राजसतामसानि । तत्र सात्त्विकतपोलक्षणम् 'श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते' इति । तदुक्तमुत्तममिति । तद्विशुद्ध्यर्थं चित्तविशुद्ध्यर्थम् । मनआदीत्यादिपदाद्बाह्येन्द्रियनिग्रहः । समाधानं नैश्चल्यम् । तत्रतत्रेत्यस्मिन्नर्थे तत्तच्छब्दः । तेषु तेष्वृतुषु देहविशोषणशीतोष्णवर्षवातसहनेन कृशीकरणमित्यर्थः ॥ २३ ॥

एवमारादुपकारकं तप उक्त्वा श्रवणादौ संनिपत्योपकारकं तपोविशेषं स्मृतिवचनपाठेनाह—

मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ २४ ॥

मनसश्चेति ॥ ऐकाग्र्यं श्रुत्युक्ते वस्तुनि मननद्वारा स्थिरीकरणम् । एतस्यावश्यकर्तव्यत्वाय स्तुतिः क्रियते तज्ज्याय इति ॥ २४ ॥

एवमुक्तैः साधनैः संशुद्धचित्तः श्रवणादिपरः सन्नवस्थात्रयात्तत्साक्षिणं विविच्य वाक्याद्ब्रह्मात्मत्वेन जानीयादित्याह—

दृष्टं जागरितं विद्यात्स्मृतं स्वप्नं तदेव तु ।
सुषुप्तं तदभावं च स्वमात्मानं परं पदम् ॥ २५ ॥

दृष्टमिति ॥ दृष्टं दर्शनं बाह्येन्द्रियैर्बाह्यार्थोपलम्भनं जागरितं विद्यात् । तदेव तु दृष्टशब्दवाच्यमेव स्मृतम् । संस्कारवशान्निद्रादशायां भातं स्वप्नं विद्यात् । तदभावं तयोर्दृष्टस्मृतयोरभावो यस्मिंस्तत्सुषुप्तं विद्यात् । एवं दशात्रयं पृथक्कृत्य तत्साक्षिणं स्वं स्वरूपभूतमात्मानं परं पदं सत्यज्ञानादिलक्षणं ब्रह्माहमस्मीति विद्यादित्यर्थः ॥ २५ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्ववस्थात्रयहेतावज्ञाने सति कथं तद्विविक्ततया प्रत्यगात्मनो ब्र
पपद्यत इति तत्राह—

सुषुप्त्याख्यं तमोऽज्ञानं बीजं स्वप्नप्रबोधयोः ।
स्वात्मबोधप्रदग्धं स्याद्बीजं दग्धं यथाभवम् ॥ २६ ॥

सुषुप्त्याख्यमिति ॥ तम इति विशेषणेनाज्ञानस्य भावरूपत्व
ततो बीजत्वमुपादानत्वमुपपद्यते तदज्ञानं स्वात्मनः सम्यग्बोधाग्नि
र्येण निर्लेपं दग्धं स्यात्। यथा दग्धं बीजमभवं भवशून्यं कार्यो
भवति तथा तत्त्वज्ञानाग्निदग्धमज्ञानं पुनरवस्थाप्ररोहकरं न
युज्यते, एवं प्रतीचो ब्रह्मत्वमित्यर्थः ॥ २६ ॥

अज्ञानस्यावस्थाबीजत्वमुक्तमुपपादयन्नज्ञाननिवृत्त्यैव सर्वसंसारो
वृत्तिर्न यत्नान्तरसाध्येति दर्शयति—

तदेवैकं त्रिधा ज्ञेयं मायाबीजं पुनः क्रमात् ।
मायान्यात्माऽविकारोऽपि बहुधैको जलार्कवत् ॥ २७

तदेवैकमिति ॥ तदेवैकं मायाख्यं बीजं त्रिधा भिन्नं क्रमात्पुनः
मेणेत्यर्थः। पुनरित्यत्र वीप्सा द्रष्टव्या। सुषुप्तिमारभ्य जागरितपर्यन्तं
सुषुप्तिपर्यन्तमहरहस्त्रिधा विक्रियत इत्यर्थः। एतदुक्तं भवति—चिन्
यविषयमेकमेवाज्ञानमनाद्यनिर्वचनीयमनेककार्यविक्षेपसंस्कारोपेतं
भासखचितं स्वाश्रये आत्मन्यध्यात्माधिदैवतभेदेन प्राज्ञेश्वरोपाधि
षुप्तिलयावस्थाकारं जायते। तथा तैजसहिरण्यगर्भोपाधिसंभिन्न
स्यात्मकं भवति। तथा पुनर्विश्ववैश्वानरोपाधिखचितजाग्रत्स्थूल
मापद्यते। तत्रापि देवतिर्यङ्मनुष्यस्थावरादिभेदेन नानाविधशरी
न्तःकरणोपाध्याकारं सत् प्रत्यग्ब्रह्मचिदात्मन्यनन्तजीवभेदव्यवहार
भवति। यथैकं वटादिबीजं मृदाश्रितं सत्तस्यामेव मृदि अङ्कुर
शाखापत्रपुष्पफलादिभावमापद्य पुनर्बीजभावं चापद्यते तथैवमनादि
न्यम्। तदेव वृक्षाकारं वस्तु मूलदाहे सति तत्रैव मृद्भावमाप
भवति यथा, तथा संसारवृक्षमूलाज्ञानस्य तत्त्वज्ञानाग्निना दाहे
चिदेकात्मना विलीनत्वात्पुनर्न दर्शनयोग्यो भवति संसार इत्यभि

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

तत्त्वज्ञाने यतितव्यमिति । तदेवैकं त्रिधेत्युक्ते तमोबीजस्य स्वातन्त्र्येण प्रवृत्तिशङ्का स्यात्तथासति सांख्यसिद्धान्तापात इत्यतस्तमसोपेक्षितमाश्रयं दर्शयति—मायावीति । आत्मा निरुपचरितव्याप्तिमान् स्वप्रकाशचिदेकरसो मायावी । मायादिशब्दवाच्याज्ञानाश्रय इत्यर्थः । मायाश्रयश्चेदात्मा तर्हि तस्य मायाविक्षिप्तानन्तोपाधिष्वनेकधा विक्षिप्यमाणस्य कथं कूटस्थत्वमित्याशङ्क्य दृष्टान्तेन प्रत्याचष्टे—अविकार इति । एक एवात्मा स्वगतविकाररहितोऽपि बहुधा विभाव्यमानो भवति जलार्कवत् । यथैक एवार्को जलभेदोपाधिष्वनेकधा विभाव्यमानोऽपि नानेको भवति न वा जलोपाधिप्रकारेण विक्रियते तथायमपीत्यर्थः ॥ २७ ॥

उक्तमेव दृष्टान्तदार्ष्टान्तिकरूपं प्रपञ्चयति—

**बीजं चैकं यथा भिन्नं प्राणस्वप्नादिभिस्तथा ।**
**स्वप्नजाग्रच्छरीरेषु तद्वच्चात्मा जलेन्दुवत् ॥ २८ ॥**

बीजं चेति ॥ प्राण इत्यव्याकृतावस्थोक्तिः । स्वप्नादिभिरिति जाग्रदवस्था मूर्च्छावस्था च गृह्यते । यथैकमविद्यामायाख्यं बीजमव्याकृताद्यवस्थाभेदेन भिन्नं तथा स्वप्नजाग्रच्छरीरेषु समष्टिव्यष्टिस्थूलसूक्ष्मशरीरेषु जलेन्दुवच्चिदाभासोऽपि भिन्नो भवति तदा तदधिष्ठानभूतश्चिदात्मा चोपाधिगताभासाविवेकात्तद्वद्भिन्नो विभाव्यते । तैजसहिरण्यगर्भविश्ववैश्वानरादिभेदेन प्रकाशत इत्यर्थः ॥ २८ ॥

ननु यद्यात्मनो मायाकल्पितेषूपाधिषु बहुत्वं तर्हि तत्र व्यापारवत्त्वमपि स्यादिति कथं कूटस्थतेत्याशङ्क्य दृष्टान्तेन निराकरोति—

**मायाहस्तिनमारुह्य मायाव्येको यथा व्रजेत् ।**
**आगच्छंस्तद्वदेवात्मा प्राणस्वप्नादिगोचरः ॥ २९ ॥**

मायाहस्तिनमिति ॥ यथैव एको मायावी स्वमायानिर्मितं हस्तिनमारुह्य व्रजेदिष्टं देशमागच्छंश्च भवति गमनागमने आचरन्निव भासमानोऽप्यचल इव तद्वत्तथैवात्मा प्राणस्वप्नादिगतत्वेन विभाव्यमानोऽप्यचलः । कूटस्थ एवेत्यर्थः ॥ २९ ॥



C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राणाद्युपाधिसंबन्धमात्मनोऽङ्गीकृत्योक्तम्, इदानीं सोऽपि नास्ति इत्याह—

न हस्ती न तदारूढो मायाव्यन्यो यथास्थितः ।
न प्राणादि न तद्द्रष्टा तथा ज्ञोऽन्यः सदादृशिः ॥ ३०

न हस्तीति ॥ निगदव्याख्यातं पद्यम् ॥ ३० ॥

वस्तुतः प्राणाद्युपाधिसंबन्धाभावेऽपि मायासंबन्धोऽपरिहार्य आह—

अबद्धचक्षुषो नास्ति माया मायाविनोऽपि वा ।
बद्धाक्षस्यैव सा माया मायाव्येव ततो भवेत् ॥ ३१ ॥

अबद्धेति ॥ न बद्धं चक्षुर्यस्य सोऽबद्धचक्षुस्तस्य लौकिकस्य यथा नास्ति मायाविनोऽपि तथा चक्षुर्बन्धाभावान्माया नास्ति । वाशब्द अपिशब्दादवस्तुत्वनिश्चयादपि मायावी न व्यामुह्यतीत्यर्थः । व्य वस्त्वान्वयमाह—बद्धाक्षस्यैवेति । सा माया बद्धाक्षस्यैव भयहेतु रूपा भासत इत्यर्थः । ततस्तस्मादमायाव्येव मायोपलक्षित एव न्मायाधार इत्यर्थः । अयमेव श्लोको दार्ष्टान्तिकेऽपि योज्यः । अब मायानावृतचित्स्वभावस्य मायाविनोऽपि मायाविरत्वेन विभाव्य माया नास्ति । व्यामोहहेतुर्हि माया साऽहमस्मि परं ब्रह्मेति प्र आत्मनि विरोधादेव न भवतीत्यर्थः । वाशब्दो लोकप्रसिद्धमा न्तार्थः । तथाच ज्ञानावस्थायां कदाचित्प्राणाद्याकारां मायां पश्य नावस्थायामिव न व्यामुह्यति किंतु सुषुप्तवन्निर्विकार एव भव समानमन्यत् ॥ ३१ ॥

तस्मात्साक्षाद्ब्रह्मात्मज्ञानादमायावी मायातत्कार्यसंबन्धविनिर्मु तीत्ययमर्थः श्रुतिसिद्धः श्रद्धेयो मुमुक्षुणेत्याह—

साक्षादेवः स विज्ञेयः साक्षादात्मेति च श्रुतेः ।
भिद्यते हृदयग्रन्थिर्न चेदित्यादितः श्रुतेः ॥ ३२ ॥

साक्षादेव इति ॥ स सर्वविकारसाक्षी कूटस्थ आत्मा

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

'विज्ञानमानन्दं ब्रह्मे'त्याद्युक्तलक्षणो विज्ञेयः। 'यत्साक्षादपरोक्षाद्ब्रह्म', 'य आत्मा सर्वान्तर' इति ब्रह्मात्मैकत्वश्रुतेरित्यर्थः। एवं विज्ञाने लाभमविज्ञाने हानिं च श्रुत्या दर्शयति—भिद्यते इति। 'न चेदिहावेदीन्महती विनष्टि'रिति। आदित इत्यादिशब्दात् 'एकधैवानुद्रष्टव्यं', 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिश्रुतयो गृह्यन्ते ॥ ३२ ॥

साक्षादात्मविज्ञानमुक्तमाक्षिपति—

अशब्दादित्वतो नास्य ग्रहणं चेन्द्रियैर्भवेत्।
सुखादिभ्यस्तथान्यत्वाद्बुद्ध्या वापि कथं भवेत् ॥ ३३ ॥

अशब्दादित्वत इति ॥ बाह्यान्तःकरणाग्राह्यत्वादात्मनः कथं साक्षाद्विज्ञानं स्यादित्यर्थः ॥ ३३ ॥

परिहरति—

अदृश्योऽपि यथा राहुश्चन्द्रे बिम्बं यथाम्भसि।
सर्वगोऽपि तथैवात्मा बुद्धावेव स गृह्यते ॥ ३४ ॥

अदृश्योऽपीति ॥ यथा स्वरूपेणादृश्योऽपि राहुश्चन्द्रे चन्द्रमण्डले उपरक्तो दृश्यते यथा चाम्भसि जले चन्द्रादेर्बिम्बं दृश्यते तथैव चक्षुराद्यगोचरोऽपि स परमात्मा सर्वगोऽपि सर्वत्र वर्तमानोऽपि तत्त्वमस्यादिमहावाक्योत्थबुद्धावेव प्रतिबिम्बितः सन् गृह्यते। तत्र प्रतिबिम्बिततया स्वतः स्फुरणमेव ग्रहणं न विपर्यीभाव इत्यर्थः। दार्ष्टान्तिकान्यस्यापि प्रत्यक्षत्वे राहुदृष्टान्तः, सर्वसंहिततया भासमानस्य सर्वत्र यथावदस्फुरतोऽप्युपाधिविशेषे यथावत्स्फुरणे प्रतिबिम्बदृष्टान्त इति विवेकः ॥ ३४ ॥

बुद्धौ बोद्धात्मा गृह्यते चेद्बुद्धिधर्मो बोध इति शङ्कां दृष्टान्तेन प्रत्याचष्टे—

भानोर्बिम्बं यथा चौष्ण्यं जले दृष्टं न चाम्भसः।
बुद्धौ बोधो न तद्धर्मस्तथैव स्याद्धिधर्मतः ॥ ३५ ॥

भानोरिति ॥ यथा जले दृष्टं बिम्बमौष्ण्यं च भानोरेव न चाम्भसो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जलस्य धर्मस्तस्य शैत्यस्वाभाव्यात्तथैव बुद्धौ स्फुरन्बोधो न बुद्धिधर्मः
कुतः । विधर्मतो विपरीतधर्मतः । बुद्धेर्जाड्यधर्मत्वनिश्चयादित्यर्थः ॥

न केवलं शास्त्रीयबुद्धावेव चिद्धातुः परमात्मा स्फुरति किंतु
प्वपि विषयाकारबुद्धिवृत्तिष्वात्मा स्वतोऽपरोक्षः साक्षितया स्फुरती

चक्षुर्युक्ता धिया वृत्तिर्या तां पश्यन्नलुप्तदृक् ।
दृष्टेर्द्रष्टा भवेदात्मा श्रुतेः श्रोता तथा भवेत् ॥ ३६ ॥

चक्षुरिति ॥ चक्षुर्द्वारिका रूपाकारा या धियो वृत्तिस्तां पश्यन्
यन्नात्माऽलुप्तदृगकुण्ठितज्ञानशक्तिर्दृष्टेर्द्रष्टा भवेत् । एवमुत्तरत्रापि

केवलां मनसो वृत्तिं पश्यन्मन्ता मतेरजः ।
विज्ञाताऽलुप्तशक्तित्वात्तथा शास्त्रं नहीत्यतः ॥ ३७ ॥

केवलामिति ॥ चक्षुरादिद्वारा बहिरप्रवृत्तामन्तरेव विषयाकारां
अजो विकाररहित इत्यर्थः । विज्ञाता अलुप्तचिच्छक्तित्वादित्यर्थः
शक्तित्वे श्रुतिमुदाहरति—तथा शास्त्रमिति । एतदित्यस्मिन्नर्थेऽतः
सार्वविभक्तिकत्वाङ्गीकारात् । सप्तम्यर्थेऽयं तसिरिति केचित् । 'नहि
रित्यारभ्य 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत' इति श्रुतेरित्
द्रष्टेत्यादौ च 'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न
मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्वान्त
श्रुतिरुदाहार्या ॥ ३७ ॥

द्रष्टृत्वादिव्यपदेशाद्विकारित्वाशुद्धत्वप्रसक्तिमाशङ्क्याह—

ध्यायतीत्यविकारित्वं तथा लेलायतीत्यपि ।
अत्र स्तेनेति शुद्धत्वं तथाऽनन्वागतं श्रुतेः ॥ ३८ ॥

ध्यायतीति ॥ श्रुताविवशब्दाद्ध्यानचलनयोराभासत्वमुच्यते
विकारित्वं सिद्धमित्यर्थः । 'अत्र स्तेनोऽस्तेनो भवति भ्रूणहे'ति,
गतं पुण्येनानन्वागतं पापेने'ति च श्रुतेः शुद्धत्वं सिद्धमित्यर्थः ॥ ३८

ननु सुषुप्ते ज्ञानाभावाज्जाग्रत्स्वप्नयोश्च तद्भावादात्मनः कथम
त्वमित्यत आह—

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

शक्त्यलोपात्सुपुप्ते ज्ञस्तथा वोधेऽविकारतः ।
ज्ञेयस्यैव विशेपस्तु यत्र वेति श्रुतेर्वचः ॥ ३९ ॥

शक्त्यलोपादिति ॥ सुपुप्तेऽप्यात्मा ज्ञ एव शक्त्यलोपादिति योजना । 'यद्वै तं न पश्यति पश्यन्वै तन्न पश्यती'त्यादिश्रुतेरित्यर्थः । तथा वोधे बोधदशायां जाग्रत्स्वप्नयोरिति यावत् । ज्ञो ज्ञानस्वरूप एवात्मा निरवयवत्वेनाविकारतो विकारानुपपत्तेरित्यर्थः । अवस्थात्रयेऽपि निर्विशेपचिद्रूपश्चेदात्मा कथं तर्हि नाज्ञासिपमिति सुपुप्तिपरामर्शो वोधावस्थायां च कथं जानामीत्यनुभव इत्याशङ्क्य विपयोपरमानुपरमोपाधिनिबन्धनं तदुभयं न स्वरूपनिबन्धनं तथैव श्रुत्योक्तत्वादित्याह—ज्ञेयस्येति । 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्ये'दित्यादिका 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये'दित्यादिका चोदाहरणम् ॥ ३९ ॥

एवं नित्यचैतन्यस्वरूपत्वान्नित्यापरोक्षो निर्विकारश्चात्मेत्युक्तं प्रपञ्चयति श्लोकत्रयेण—

व्यवधानाद्धि पारोक्ष्यं लोकदृष्टेरनात्मनः ।
दृष्टेरात्मस्वरूपत्वात्प्रत्यक्षं ब्रह्म तत्स्मृतम् ॥ ४० ॥

व्यवधानाद्धीति ॥ अनात्मनो घटादेर्विपयस्य ग्राहिकाया लोकदृष्टेस्तद्ग्राहकचक्षुरादिदृष्टेर्देशतः कालतो वा व्यवधानादसंकर्पात्पारोक्ष्यं हि प्रसिद्धमित्यर्थः । न तथात्मनो दृष्टिव्यवधानमस्ति दृष्टेरात्मस्वरूपत्वादात्मन एव महत्त्वात्तद्ब्रह्म स्वत एव सदा प्रत्यक्षं स्मृतं ब्रह्मविद्भिरिति योजना ॥ ४० ॥

स्वरूपप्रकाशस्यानन्यापेक्षत्वं दृष्टान्तेन स्फुटयति—

नहि दीपान्तरापेक्षा यद्वद्दीपप्रकाशने ।
वोधस्यात्मस्वरूपत्वान्न वोधोऽन्यस्तथेष्यते ॥ ४१ ॥

नहीति ॥ स्फुटम् ॥ ४१ ॥

एवमपरोक्षत्वं विशदीकृत्याऽविकारित्वं विशदीकुर्वन्नात्मनो निर्विशेपत्वमाह—

विपयत्वं विकारित्वं नानात्वं वा नहीष्यते ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न हेयो नाप्युपादेय आत्मा नान्येन वा ततः ॥ ४२ ॥

विपयत्वमिति ॥ नहीष्यते श्रुतिविरोधादिति शेपः । अन्यस्मा
दस्वाच्चेति हेतुरनुसंधेयः । वाशब्दात्स्वेनापीत्यर्थः ॥ ४२ ॥

नन्वेवमपि कुत्त आत्मनो निर्विकारत्वं नरकपातादिभयद
स्याशङ्क्याह—

सबाह्याभ्यन्तरोऽजीर्णो जन्ममृत्युजरातिगः ।
अहमात्मेति यो वेत्ति कुतोऽन्वेव विभेति सः ॥ ४३ ॥

सबाह्याभ्यन्तर इति ॥ सम्यक्पदार्थशोधनपूर्वकं य आत्मानं
नाति स कुतोऽन्वेव बिभेति । भयहेतोर्द्वितीयस्य बाधितत्वादित्यर्थः ॥

तथापि यावज्जीवादिश्रुतिविहितत्वात्कर्मणां तदकरणे प्रत्यवाय
योऽप्यस्तीति तत्परिहारायानुष्ठानं स्यादिति चेन्नेत्याह—

प्रागेवैतद्विधेः कर्म वर्णित्वादेरपोहनात् ।
तदस्थूलादिशास्त्रेभ्यस्तत्त्वमेवेति निश्चयात् ॥ ४४ ॥

प्रागेवेति ॥ अस्थूलादिशास्त्रेभ्यो वर्णित्वादेः कर्माधिकारहेतोः
तत्त्वमेवेति वाक्येन ब्रह्मस्वरूपत्वनिश्चयादेतद्विधेरेतदात्मतत्त्ववि
पादनात्प्रागेव पूर्वमेव तद्यावज्जीवादिशास्त्रविहितं कर्म नोर्ध्वमिति
अनधिकारिणोऽकरणे प्रत्यवायासंभवान्नानुष्ठानप्राप्तिरिति भावः ॥ ४

आत्मनोऽध्यासं विना न वर्णित्वाद्यस्तीत्यत्र युक्तिमाह—

पूर्वदेहपरित्यागे जात्यादीनां प्रहाणतः ।
देहस्यैव तु जात्यादिस्तस्याप्येवं ह्यनात्मता ॥ ४५ ॥

पूर्वेति ॥ देहपरित्यागे तदनुरक्तजातेरपि परित्यागादागमापायि
जात्यादेरात्मधर्मत्वं किंतु देहस्यैव जात्यादिर्धर्मः । तर्हि देह एव
त्यत आह—तस्यापीति । एवमागमापायित्वादेव देहस्याप्यनात्म
देहस्य जात्यादेश्च वर्णित्वादिना प्रकारेण कर्माधिकारहेतोरभावा
स्वभावतः कर्मकर्तृत्वमुपपद्यत इति भावः ॥ ४५ ॥

शरीरादिष्वात्मीयाभिमानस्य प्रसिद्धत्वेन हेयत्वायोगमाशङ्क्याह—

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

ममाहं चेत्यतोऽविद्या शरीरादिष्वनात्मसु ।
आत्मज्ञानेन हेया स्यादसुराणामिति श्रुतेः ॥ ४६ ॥

ममाहमिति ॥ यत आत्मन्यागमापायाभ्यामनात्मत्वं देहादेर्निश्चितमतो हेतोः शरीरादिष्वनात्मसु ममाहं चेत्यभिमानोऽविद्या मिथ्याप्रत्ययः सात्मज्ञानेनात्मतत्त्वब्रह्मात्मानुसंधानेन हेया स्याद्बाध्या स्याद्देहात्मदृष्टेरासुरत्वेन निन्दाश्रुतेश्चेत्याह—असुराणामिति । 'असुराणां ह्येषोपनिष'दिति श्रुतेरित्यर्थः ॥ ४६ ॥

तत्त्वज्ञानादूर्ध्वं न कर्म न वा तत्प्रयोजकं जात्याद्यात्मनोऽस्तीत्येतद्दृष्टान्तेन साधयति—

दशाहाशौचकार्याणां पारिव्राज्ये निवर्तनम् ।
यथा ज्ञानस्य संप्राप्तौ तद्वज्जात्यादिकर्मणाम् ॥ ४७ ॥

दशाहेति ॥ पारिव्राज्ये सति सपिण्डताभिमानाभावात्संन्यासिनो यथाऽऽशौचादेरननुष्ठेयता तथा ब्रह्मात्मज्ञानस्य संप्राप्तौ जात्याद्यभिमानाभावाद्विदुषः कर्मानुष्ठानाभाव इत्यर्थः ॥ ४७ ॥

यस्मादेवमात्मनो ब्रह्मात्मत्वाज्ञानमूलो देहाद्यध्यासनिबन्धनः संसारस्तस्मात्तत्त्वज्ञानात्प्राक्कामादियुक्तो धर्माधर्मद्वारा संसरति । ब्रह्मात्मज्ञाने च सति कामादेरभावान्मुक्तो भवेदित्याह—

यत्कामस्तत्क्रतुर्भूत्वा कृतं त्वज्ञः प्रपद्यते ।
यदा स्वात्मदृशः कामाः प्रमुच्यन्तेऽमृतस्तदा ॥ ४८ ॥

यत्काम इति ॥ स्वे स्वरूपे ब्रह्मण्येवात्मदृष्टिर्यस्य स स्वात्मदृक् तस्य स्वात्मदृश इति विग्रहः । 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवती'ति श्रुतेः । हृदय्याः कामाः हृदयाध्यासबाधनेन बाधिताः सन्तो यदा प्रकर्षेण मुच्यन्ते तदा प्रवृत्तिबीजाभावात्स्वात्मसंस्थ आत्माऽमृतः मुक्तसंसारबन्धनो भवतीत्यर्थः ॥ ४८ ॥

'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति', 'नित्यतृप्तो निरञ्जनः' इत्यादिश्रुतेरात्मनो नित्यतृप्तत्वावगमात्तस्य साध्यसाधनविलक्षणत्वेन स्वतः

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रियादिसंस्पर्शित्वाभावादध्यासमूलत्वं क्रियातत्कारकयोगस्येति मि
त्मतत्त्वाववोधनेनैव क्रियादि त्याज्यमित्याह—

आत्मरूपविधेः कार्यं क्रियादिभ्यो निवर्तनम् ।
न साध्यं साधनं वात्मा नित्यतृप्तः स्मृतेर्मतः ॥ ४९ ॥

आत्मरूपेति ॥ विधिर्विधानं तत्स्वरूपावधारणम् ॥ ४९ ॥

यद्यपि विज्ञातात्मतत्त्वस्य क्रियाहेत्वभावात्तदभावस्तथापि विज्ञ
क्षोर्मोक्षाय क्रियानुष्ठानं स्यादित्याशङ्क्य मोक्षस्य क्रियाफलविल
तस्यापि क्रियासंभव इत्याह—

उत्पाद्याप्यविकार्याणि संस्कार्यं च क्रियाफलम् ।
नातोऽन्यत्कर्मणा कार्यं त्यजेत्तस्मात्ससाधनम् ॥ ५० ॥

उत्पाद्येति ॥ ससाधनं जायापत्यवित्तशिखायज्ञोपवीतादिसाधन
कर्मविधिलक्षणं त्यजेन्मुमुक्षुरिति शेषः । कृतकस्यानित्यत्वान्मोक्षस्य
स्वरूपावस्थानरूपत्वान्न मुमुक्षोरपि कर्मणा कृत्यमस्तीति भावः ॥ ५० ॥

किं ससाधनकर्मत्यागमात्रेण मुक्तिसिद्धिः किंवान्यत्किमपि कृत
मेक्षायामात्मतत्त्वज्ञानाय गुरूपसत्तिः कर्तव्येत्याह—

तापान्तत्वादनित्यत्वादात्मार्थत्वाच्च या बहिः ।
संहृत्यात्मनि तां प्रीतिं सत्यार्थी गुरुमाश्रयेत् ॥ ५१ ॥

तापान्तेति ॥ यद्वा यस्मात्सर्वकर्मनिबन्धना प्रीतिरनित्या दुः
स्वार्थप्रदुःखा च तस्मात्तन्निमित्तां प्रीतिमनात्मविषयामात्मन्येवो
नित्यपुरुषार्थी गुरुं संश्रयेतेति मुमुक्षुं शिक्षयति—तापान्तत्वा
या बहिरात्मनोऽन्यत्र जायापुत्रादौ प्रीतिस्तां प्रीतिमात्मन्युपसंहृत्य । इ
सात्कृत्वेत्यर्थः ॥ ५१ ॥

उपगन्तव्यं गुरुं विशिनष्टि—

शान्तं प्राज्ञं तथा मुक्तं निष्क्रियं ब्रह्मणि स्थितम् ।
श्रुतेराचार्यवान्वेद तद्विद्धीति स्मृतेस्तथा ॥ ५२ ॥

शान्तमिति ॥ शान्तमक्षुब्धचित्तं प्राज्ञं मेधाविनं यथा परित्य

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

सजातीयेन पुनर्बद्धो न भवति तथा मुक्तं निष्किञ्चनमित्यर्थः । निष्क्रियमैहिकामुष्मिकार्थप्रवृत्तिरहितं ब्रह्मणि स्थितम् । स्वस्वरूपानन्दानुभवेन सर्वत्रोदासीनमित्यर्थः । गुरोराश्रयणीयत्वे प्रमाणमाह—श्रुतेरिति । 'आचार्यवान्पुरुषो वेदे'ति च श्रुतेः । 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः'इति स्मृतेश्चेत्यर्थः ॥ ५२ ॥

उक्तप्रमाणानुसारेणोक्तविशेषणगुरूपगमने फलं निरतिशयं दर्शयति—

स गुरुस्तारयेद्युक्तं शिष्यं शिष्यगुणान्वितम् ।
ब्रह्मविद्याप्लवेनाशु स्वान्तध्वान्तमहोदधिम् ॥ ५३ ॥

स गुरुरिति ॥ युक्तं समाहितम् । शिष्यगुणाः 'प्रशान्तचित्ताय जितेन्द्रियाये'त्यत्रोक्ता गुणा अमानित्वादयश्च भगवद्गीतोक्तास्तैरन्वितमित्यर्थः । ब्रह्मविद्यैव प्लवो ब्रह्मविद्याप्लवस्तेनेत्यर्थः । स्वान्तमन्तःकरणम् । उपाधिवचनेनोपाधीयमानो जीवो लक्ष्यते । तस्य ध्वान्तमात्मस्वभावावरणात्मविक्षेपलक्षणमनाद्यनिर्वाच्याज्ञानं तदेव महानुदधिरपर्यन्तत्वात्तमित्यर्थः ॥ ५३ ॥

कथमुक्तलक्षणो गुरुरुक्तलक्षणं शिष्यं सम्यग्ज्ञानेन सद्यः संसारसागरं तारयेदित्यपेक्षायां प्रथमं पदार्थविवेकं कारयित्वा वाक्यार्थज्ञानोपदेशेनेत्यभिप्रेत्य संक्षेपतः पदार्थविवेकमाह—

दृष्टिः स्पृष्टिः श्रुतिर्घ्रातिर्मतिर्विज्ञातिरेव च ।
शक्तयोऽन्याश्च भिद्यन्ते चिद्रूपत्वेऽप्युपाधिभिः ॥ ५४ ॥

दृष्टिः स्पृष्टिरिति ॥ अन्याश्च रसयतिवक्तिगत्याद्याश्च शक्तय इत्यर्थः । एता दृष्ट्यादिशक्तयो यद्यप्यखण्डचिद्रूपा एव तथापि तत्तदिन्द्रियद्वारकबुद्धिवृत्तिभेदोपाधिभिर्भिद्यन्ते न वस्तुतो भेदोऽस्तीति तत्तद्दृश्यांशपरित्यागेन सर्ववृत्तिसाक्षितयानुगतप्रकाशस्वभाव एवात्मा त्वंपदार्थ इति प्रथमं ग्राहयेदित्यर्थः ॥ ५४ ॥

कथमुपाधिभिरेव चिच्छक्तिभेदः स्वरूपत एव भेदो यथानुभवमस्त्विति चेन्मैवम् । आत्मनो विकारित्वापत्तेः कल्पनागौरवाच्चेत्यभिप्रेत्य दृष्टान्तेनाखण्डरूपतां साधयति—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपायोद्भूतिहीनाभिर्नित्यदीप्यन्नविर्यथा ।
सर्वज्ञः सर्वदृक् शुद्धः सर्वं जानाति सर्वदा ॥ ५५ ॥

अपायेति ॥ यथा रविरपायोद्भूतिहीनाभिर्विनाशजन्मशून्याभिः रश्मिभिः सर्वं ब्रह्माण्डं दीप्यन्प्रकाशयन्नेक एवाविकृतो वर्तते तथात्मा अपायोद्भूतिहीनाभिरेव स्वरूपभूतचिच्छक्तिभिस्तत्तद्बुद्धिवृत्त्युपाधिभेदात्सर्वज्ञः सर्वं विषयजातं विशेषतो जानाति सर्वदा सर्वदृक् सामान्येनापि सर्वं पश्यति साक्षात् । यतः सर्वगतः सर्वदृश्याधिष्ठानत्वेन सर्वाव्यभिचारी तथाप्यशुद्धो निर्विकार इति योजना ॥ ५५ ॥

यद्येवमुक्तलक्षण आत्मा कथं तस्य संसारोपलब्धृता परिच्छेदमाश्रित्येत्यत आह—

अन्यदृष्टिः शरीरस्थस्तावन्मात्रो ह्यविद्यया ।
जलेन्द्वाद्युपमाभिस्तु तद्धर्मा च विभाव्यते ॥ ५६ ॥

अन्यदृष्टिरिति ॥ अविद्यया शरीरस्थः स्थूलसूक्ष्मशरीरयोरेवाभिमानत्वात्तत्र वर्तमानस्तावन्मात्रः शरीरं यावत्तावन्मात्रोऽहमिति मन्वानोऽन्यदृष्टिर्देहबाह्येभ्यो व्यावृत्तात्मदृष्टिस्तद्गततधर्मैरात्मनो धर्मवानिव सन् परिच्छिन्नः संसारीव चावभासत इत्यर्थः । एतदेव दृष्टान्तेन दर्शयति—जलेन्द्वादीति । यथा चन्द्रादिर्जले प्रतिबिम्बितो जलोपाधिभेदवानिव जलकम्पादिना कम्पादिमानिव चाविवेकादेव विभाव्यते ह्युपमाभिरुपमाभिस्तद्धर्मत्वाद्युक्तार्थम् ॥ ५६ ॥

तदेवमुपाधिपरामर्शमन्तरेणात्मनि भेदसंसारादेरनुपलम्भादुपाधीनामात्मनो बहिः स्वातन्त्र्येण सत्तायां प्रमाणाभावादविद्यामयत्वे सति शुद्धः परिपूर्ण एव चिदात्मेत्यवान्तरवाक्यैरवधारित आत्मैव सत्यलक्षणं ब्रह्मेति महावाक्येनाचार्यादवगतात्मतत्त्वो मुमुक्षुरवस्थात्रयसाक्ष्यैव सर्वदृश्यत्वात्तदपोहेन तत्साक्षितया तदधिष्ठानतया चाद्वितीयं चिदेकरसं ब्रह्मात्मेति स्वानुभवमापादयन्मुच्यत इत्यभिप्रेत्याद्वैतसंस्कारमाह—

दृष्ट्वा बाह्यं निमील्याथ स्मृत्वा तत्प्रविहाय च ।

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

अथोन्मील्यात्मनो दृष्टिं ब्रह्म प्राप्नोत्यनध्वगः ॥ ५७ ॥

दृष्ट्वेति ॥ बाह्यं जागरितं पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं समष्टिव्यष्टिरूपं सर्वं विषयजातं दृष्ट्वा द्रष्टृदृश्यान्वयव्यतिरेकाभ्यां कार्यकारणान्वयव्यतिरेकाभ्यां चालोच्याथ निमील्य दृश्यं तत्सर्वं द्रष्टृमात्रत्वेन कार्यं सर्वं कारणभूततन्मात्रत्वेन विलाप्येत्यर्थः। अथानन्तरं स्मृत्वा जाग्रद्दृष्टवासनाकार्यं स्वप्नदर्शनं स्मृत्वा विश्ववैश्वानरसहितं स्थूलोपाधिं तद्वासनामये लिङ्गे सूक्ष्मभूतसहिते प्रविलाप्य वासनामयं स्वप्नमात्रमेव तदित्यनुसंधायेत्यर्थः। तदपि लिङ्गशरीरं वासनामयं प्रविहाय च वासनासहितस्य मनःप्राणेन्द्रियसंघातस्यापि तत्कारणप्रपञ्चतन्मात्रादनतिरेकात्तावन्मात्रेण प्रविलाप्य तेषां चोत्पत्तिक्रमवैपरीत्येन तत्कारणसाभासाज्ञानमात्रत्वेन प्रविलाप्यावस्थानं तद्ध्यानं तत्कृत्येत्यर्थः। अथानन्तरं सुषुप्तौ बीजात्मकमज्ञानमात्रं यदुर्वरितं तदपि सदसत्त्वभिन्नाभिन्नादिप्रकारनिरूपणासहत्वादिवान्धपरिकल्पितान्धकारवद्यत्किंचिदिति विवेकेन बाधित्वात्मनः सर्वावस्थासाक्षितयानुस्यूतसचिदानन्दमात्रस्य दृष्टिं ज्ञानप्रकाशस्वरूपामुन्मील्य निरुपाधिकां कृत्वा स्थितो ब्रह्म प्राप्नोति। सत्यज्ञानादिलक्षणं ब्रह्मैव भवतीति यावत्। अनध्वगोऽर्चिरादिकमध्वानं न प्राप्नोति ब्रह्मण आत्मत्वान्न गत्यायत्ता ब्रह्मप्राप्तिरित्यर्थः ॥ ५७ ॥

अनध्वगो ब्रह्म प्राप्नोतीत्युक्तमेव विशदयन्निरुपचरितैवास्य मुक्तिर्नोपासकस्येवापेक्षिकीति द्योतयति—

प्राणाद्येवं त्रिकं हित्वा तीर्णोऽज्ञानमहोदधिम्।
स्वात्मस्थो निर्गुणः शुद्धो बुद्धो मुक्तः स्वतो हि सः ॥ ५८ ॥

प्राणादीति द्वाभ्याम् ॥ सुषुप्त्यादीत्यर्थः। स्वात्मस्थो नार्चिरादिमार्गस्थः। तथा निर्गुणः। स्वात्मनि प्रविलापितसकलगुण इत्यर्थः। शुद्धो निरुपाधिकोऽतः स्वतः स्वभावत एव मुक्त इत्यर्थः ॥ ५८ ॥

अजोऽहं चामरोऽमृत्युरजरोऽभय एव च।
सर्वज्ञः सर्वदृक् शुद्ध इति बुद्धो न जायते ॥ ५९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अजोऽहमिति ॥ एवंविधोऽहं ब्रह्मास्मीति यो बुद्धोऽज्ञानान्निर्गतः स न जायते। पुनः शरीरं न गृह्णातीत्यर्थः ॥ ५९ ॥

प्रबुद्धस्य पुनर्जन्माभावे हेतुमाह—

पूर्वोक्तं यत्तमोबीजं तन्नास्तीति विनिश्चयः।
तदभावे कुतो जन्म ब्रह्मैकत्वं विजानतः ॥ ६० ॥

पूर्वोक्तमिति ॥ सुषुप्त्याख्यं तमोऽज्ञानमित्यादिना यत्पूर्वोक्तं तत्कालत्रयेऽपि नास्तीति निश्चयः कस्मिन्नपि काले सतो ज्ञानमात्राद्वि नासंभवादस्य तु ज्ञानोदयमात्र एव तिरोधानाच्छुक्तिरजतवदित्यर्थः। भाव इति। कारणाभावात्कार्याभाव इत्यर्थः ॥ ६० ॥

अहं ब्रह्मास्मीत्यात्मानं साक्षात्पश्यतोऽपि पूर्ववद्व्यवहारदर्शनाद्धर्माधर्मनिबन्धनं पुनः शरीरग्रहणं स्यादित्याशङ्क्य बाधितानुवृत्तिमात्रं ज्ञानिनो व्यवहारस्य न तन्निबन्धनः पुनः शरीरग्रहणादिसंसार इति दृष्टान्तपूर्वकमाह—

क्षीरात्सर्पिर्यथोद्धृत्य क्षिप्तं तस्मिन्नपूर्ववत्।
बुद्ध्यादेर्ज्ञस्तथाऽसत्यान्न देही पूर्ववद्भवेत् ॥ ६१ ॥

क्षीरादिति ॥ यथा सर्पिर्नवनीतं क्षीरादुपायेनोद्धृत्य तस्मिन्नेव क्षीरीकृते क्षीरे क्षिप्तं न पूर्ववदविविक्तं भवति तथाऽसत्याद्बुद्ध्यादेः संघातथममात्माविविक्तो ज्ञानमात्ररूपेणोद्धृतो ब्रह्माहमस्मीति वाक्यादवगतभावः पूर्ववत्पुनर्देही देहद्वयसंघाताभिमानवान् तस्मिन्विद्यमानोऽपि न भवेदित्यर्थः। साहंकारस्य हि कर्म बन्धहेतुर्न निरहंकारस्य। तथाचोक्तं भगवता 'यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापि स इमांल्लोकान्न हन्ति न निबध्यत' इति ॥ ६१ ॥

पदार्थशोधनपूर्वकं वाक्यादहं ब्रह्मास्मीति प्रतिबुद्धस्य पुनः संसारशङ्का नास्तीत्युक्तेऽर्थे 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति श्रुतिमर्थतः पठति—

सत्यं ज्ञानमनन्तं च रसादेः पञ्चकात्परम्।
सामदृश्यादिशास्त्रोक्तमहं ब्रह्मेति निर्भयः ॥ ६२ ॥

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

सत्यं ज्ञानमिति ॥ रसादेरन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्यकोशपञ्चकात्परं तदाधारभूतं 'ब्रह्मपुच्छं प्रतिष्ठे'ति निर्दिष्टं यत्तदेव 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते' इति शास्त्रोक्तं ब्रह्माहं स्मामस्मीति पश्यन्निर्भयो भवतीति योजना ॥ ६२ ॥

भयंकराणामपि भयंकरब्रह्मात्मभूतस्य कुतो भयशङ्कावकाश इति ब्रह्मज्ञस्य पुनः संसाराभावमुक्तं द्रढयति—

यस्माद्भीताः प्रवर्तन्ते वाङ्मनःपावकादयः ।
तदात्मानन्दतत्त्वज्ञो न बिभेति कुतश्चन ॥ ६३ ॥

यस्मादिति ॥ यदि वाग्विनौ पावकादय इति पाठस्तदा इनः सूर्यः । आदिपदादिन्द्रमृत्यू गृह्येते । तथाच श्रुतिः 'भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' इति । वाङ्मनःपावकादय इति पाटेऽध्यात्मं वागादयोऽधिदैवमग्न्यादयश्च यस्माद्भीताः प्रवर्तन्त इत्यर्थः । तथाच श्रुतिः 'केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति', 'भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' इति ॥ ६३ ॥

ननु विदुषोऽपि हरिहरहिरण्यगर्भादीनां नमस्कार्यत्वात्तदतिक्रमे भयसंभवात्कार्यशेषो विद्यत इति चेत्तत्राह—

नामादिभ्यः परे भूम्नि स्वाराज्ये चेत्स्थितोऽद्वये ।
प्रणमेत्कं तदात्मज्ञो न कार्यं कर्मणा तदा ॥ ६४ ॥

नामादिभ्य इति ॥ नामवाङ्मनआदिप्राणान्तेभ्य उत्तरोत्तरभूयस्त्वेन श्रुतेभ्यः परे परस्मिन्भूम्नि सर्वव्यवहारातीतेऽमृते सुखरूपेऽद्वये स्वे महिम्नि स्वराजि चेदहमस्मि भूमा ब्रह्मेति व्यवस्थित आत्मज्ञो विद्वांस्तदा तस्यान्यं प्रति गुणभावाभावात्कं प्रणमेत्प्रणम्यानामात्मभूतत्वात् । अतः परिपक्वज्ञानस्य कृतकृत्यत्वान्न कर्मणा किमपि कार्यमस्तीत्यर्थः ॥ ६४ ॥

भूज्ञो नामादिभ्यः परत्वेऽपि कथमद्वयत्वमित्याशङ्क्य नामादेरवस्थात्रय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपस्याध्यस्तत्वेन मिथ्यात्वात्तत्साक्षिणस्तुरीयस्य भूम्नोऽद्वयत्वमिति ...
वस्थात्रयमनुवदति—

विराड्वैश्वानरो बाह्यः स्मरन्नन्तः प्रजापतिः।
प्रविलीने तु सर्वस्मिन्प्राज्ञोऽव्याकृतमुच्यते ॥ ६५ ॥

विराडिति ॥ अध्यात्माधिदैवतयोरभेदाभिप्रायेण विराड्वैश्वानर इत्युक्तं विश्ववैश्वानर इत्यर्थः। बाह्यो बहिःप्रज्ञ इत्यर्थः। अन्तः स्मरन्निति ... वासनामयविषयदर्शी प्रजापतिर्हिरण्यगर्भस्तैजस इति योज्यम्। अव्या... मायोपाधीश्वराख्यं तत्त्वं प्राज्ञ उच्यत इत्यर्थः ॥ ६५ ॥

एतदवस्थात्रयात्मकं जगदपोह्य तत्साक्षिणो वस्तुभूतस्याहं ब्रह्मेति ... ज्ञानान्मुक्तो भवतीत्याह—

वाचारम्भणमात्रत्वात्सुषुप्तादित्रिकं त्वसत्।
सत्यो ज्ञश्चाहमित्येवं सत्यसन्धो विमुच्यते ॥ ६६ ॥

वाचेति ॥ ज्ञः साक्षी सत्यः परमात्मा सोऽहमेवेत्येवं सत्यसन्धोऽ... यासेन मुच्यत इत्यर्थः ॥ ६६ ॥

आत्मतत्त्वाज्ञानाध्यस्तः संसारस्तज्ज्ञानान्निवर्तत इत्युक्ते ज्ञानाज्ञानयो... त्मधर्मत्वं स्यादित्याशङ्क्य दृष्टान्तेन प्रत्याह—

भारूपत्वाद्यथा भानोर्नाहोरात्रे तथैव च।
ज्ञानाज्ञाने न मे स्यातां चिद्रूपत्वाविशेषतः ॥ ६७ ॥

भारूपत्वादिति ॥ ज्ञानाज्ञानयोरपि साक्ष्यत्वात्कल्पितत्वे सति ... त्मधर्मत्वमिति भावः ॥ ६७ ॥

आत्मनो निर्विशेषत्वादेः शास्त्रप्रामाण्यादेव सिद्धेर्नात्र युक्तिक... मनः खेदनीयमित्यभिप्रेत्याह—

शास्त्रस्यानतिशङ्क्यत्वाद्ब्रह्मैव स्यामहं सदा।
ब्रह्मणो मे न हेयं स्याद्ग्राह्यं वेति च संस्मरेत् ॥ ६८ ॥

शास्त्रस्येति ॥ स्पष्टम् ॥ ६८ ॥

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

किं तद्ब्रह्म परं शाखं किंवा सर्वदाऽहेयानुपादेयब्रह्मात्मज्ञाननिष्ठस्य फलमित्यपेक्षायां 'यस्तु सर्वाणि भूतानी'त्यादिमन्त्रार्थमुदाहरति—

अहमेव च भूतेषु सर्वेष्वेको मनो यथा ।
मयि सर्वाणि भूतानि पश्यन्नेवं न जायते ॥ ६९ ॥

अहमेवेति ॥ स्पष्टम् ॥ ६९ ॥

आत्मनोऽद्वितीयब्रह्मरूपत्वे शास्त्रमर्थत उदाहृत्य निर्विशेषब्रह्मरूपत्वे उदाहरति—

न बाह्यं मध्यतो वान्तर्विद्यतेऽन्यत्स्वतः क्वचित् ।
अबाह्यान्तःश्रुतेः किंचित्तस्माच्छुद्धः स्वयंप्रभः ॥ ७० ॥

न बाह्यमिति ॥ 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभू'रिति श्रुतेरित्यर्थः । सर्वानुभूरित्यस्यार्थः स्वयंप्रभ इति ॥ ७० ॥

सामान्येन सर्वप्रपञ्चसंस्पर्शरहितत्वे श्रुतिमुदाहरति—

नेतिनेत्यादिशास्त्रेभ्यः प्रपञ्चोपशमोऽद्वयः ।
अविज्ञातादिशास्त्राच्च नैव ज्ञेयो ह्यतोऽन्यथा ॥ ७१ ॥

नेतीति ॥ प्रपञ्चनिषेधद्वारेणैवात्मा विज्ञेयो न पुनर्विषयतया सप्रपञ्चतया चेत्यत्र 'अन्यदेव तद्विदितादथो अविदितादधि' । 'यस्यामतं तस्य मतं मतं यस्य न वेद सः' । 'अविज्ञातं विज्ञातृ' इत्यादिशास्त्रमुदाहरति—अविज्ञातादीति ॥ ७१ ॥

'तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्यु'रिति श्रुतिरेवमद्वयादिलक्षणमात्मानं जानतो देवाः फलप्राप्तिं विघ्नन्तीति चेन्नैवम् । देवानामप्यात्मभूतत्वाद्विदुषो विघ्नश्रुतेरविद्वद्विषयत्वादित्यभिप्रेत्याह—

सर्वस्यात्माहमेवेति ब्रह्म चेद्विदितं परम् ।
स आत्मा सर्वभूतानामात्मा ह्येषामिति श्रुतेः ॥ ७२ ॥

सर्वस्येति ॥ 'तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां संभवती'ति श्रुतेरित्यर्थः ॥ ७२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं ब्रह्मात्मज्ञानवतो देवैरप्युपास्यत्वसिद्धेर्न तस्य देवपशुत्वशङ्का न कुतश्चिद्भयमस्तीत्यत्र श्रुतिमर्थतः पठति—

जीवश्चेत्परमात्मानं स्वात्मानं देवमञ्जसा ।
देवोपास्यः स देवानां पशुत्वाच्च निवर्तते ॥ ७३ ॥

जीवश्चेदिति ॥ 'यदेवमनुपश्यत्यात्मानं देवमञ्जसा । ईशानं भू... भव्यस्य न तदा विजुगुप्सते'। 'सर्वेऽस्मै देवा बलिमावहन्ति', 'तमेवं वि... नमृत इह भवति' इति च श्रुतिभ्य इत्यर्थः ॥ ७३ ॥

यदुक्तं 'सत्यसंधो विमुच्यत' इति तत्स्फुटयति—

अहमेव सदात्मज्ञः शून्यस्त्वन्यैर्यथाम्बरम् ।
इत्येवं सत्यसंधत्वादसद्धाता न वध्यते ॥ ७४ ॥

अहमेवेति ॥ सदात्मा चासौ ज्ञश्चेति सदात्मज्ञः 'तत्सत्यं स आ... श्रुतिरिहोदाहरणम् । अन्यैः शून्य इति वाचारम्भणश्रुत्यर्थो दर्शितः । ... म्बरमिति दृश्यसंसर्गशून्यत्वाच्छुद्ध इत्यत्र दृष्टान्तोक्तिः । असद्धाताऽ... संधिरहितस्तस्कर इव न वध्यते बन्धानर्थहीनो भवति । 'स यथा त... दह्यते,' 'एतदात्म्यमिदं सर्व'मित्यादि श्रुतिरिहोदाहार्या ॥ ७४ ॥

एवंविधज्ञानाभावादितरे पशुभूताः शोच्या भवन्तीति दर्शयन् 'अथ येऽन्यथातो विदुरन्यराजानस्तेऽक्षय्यलोका भवन्ती'ति श्रुत्यर्थमाह—

कृपणास्तेऽन्यथैवातो विदुर्ब्रह्म परं हि ये ।
स्वराड्योऽनन्यदृक् स्वस्थस्तस्य देवा असन्वशे ॥ ७५ ॥

कृपणा इति ॥ ये परं ब्रह्मातोऽन्यथैवोक्तवैपरीत्येनानात्मभू... विदुस्ते हि कृपणाः शोच्या एवेति योजना । अभेददर्शी तु न कृपण इत्य... स्वराडिति । 'एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवती'ति श्रुतिरिहोदाहरणम् । 'तस्य सर्वेषु लोकेषु कामचारो भ... वी'ति श्रुत्यर्थं मन्त्रभागोदाहरणेनात्मरतिं द्योतयति—तस्येति । आसन्नि... असन्निति छान्दसम् । 'यस्यैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे' इ...

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

मन्त्रस्यायमर्थः । यस्त्वेवं ब्राह्मणो ब्रह्मनिष्ठ एवं 'वेदाहमेतं पुरुषं महान्त'-मित्युक्तप्रकारेण ब्रह्मात्मानं विद्यात्तस्य विदुषो देवा वशगा भवन्तीति ॥ ७५ ॥

यस्माद्यथोक्तात्मज्ञानादेव कृतकृत्यता तस्मान्मुमुक्षुभिस्तदर्थं यत्नवद्भिर्भवितव्यमिति तान्छिक्षयन्नाह—

हित्वा जात्यादिसंबन्धान्वाचोऽन्याः सह कर्मभिः ।
ओमित्येवं सदात्मानं सर्वं शुद्धं प्रपद्यथ ॥ ७६ ॥

हित्वेति ॥ 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः', 'ओमित्येवं ध्यायथ आत्मान'मिति च वाक्यद्वयमत्रोदाहरणम् । अन्या वाचोऽनात्मविषयाः प्रवृत्तिपराः । सर्वं सर्वाधारभूतं शुद्धं विविक्तं निर्विशेषमित्यर्थः ॥ ७६ ॥

तमेव प्रतिपत्तव्यमात्मानं श्रुत्यन्तरेण विशिनष्टि—

सेतुं सर्वव्यवस्थानामहोरात्रादिवर्जितम् ।
तिर्यगूर्ध्वमधः सर्वं सकृज्ज्योतिरनामयम् ॥ ७७ ॥

सेतुमिति ॥ सर्वव्यवस्थानां वर्णाश्रमादिमर्यादानां सेतुं विधारकम् । 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैनं सेतुमहोरात्रे तरतः सकृद्विभातो ह्येवैष ब्रह्मलोक' इति श्रुतिरत्रोदाहरणम् ॥ ७७ ॥

पुनः किंलक्षणमात्मानं प्रपद्यते इत्यपेक्षायाम् 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे'-तिश्रुत्यर्थमाह—

धर्माधर्मविनिर्मुक्तं भूतभव्यात्कृताकृतात् ।
स्वमात्मानं परं विद्याद्विमुक्तं सर्वबन्धनैः ॥ ७८ ॥

धर्माधर्मेति ॥ कृताकृतात्कार्यकारणादित्यर्थः ॥ ७८ ॥

ननु कथं सर्वबन्धनैर्मुक्त आत्मा तस्य कर्तृत्वादिश्रवणादित्याशङ्क्य अकर्तृत्वादेरपि सहैव श्रवणाद्विरुद्धोभयस्वभावस्यैकस्मिन्नयोगात्स्वभावप्राप्तं कर्तृत्वादिकं मायामयं प्रमाणावधेयमकर्तृत्वादिकमात्मस्वभाव इति विशेषमभिप्रेत्य विरुद्धधर्मवादिनीः श्रुतीरुदाहरति—



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अकुर्वन्सर्वकृच्छुद्धस्तिष्ठन्नत्येति धावतः ।
मायया सर्वशक्तित्वादजः सन्बहुधा मतः ॥ ७९ ॥

अकुर्वन्निति ॥ 'अनेजदेकं मनसो जवीयः' इति मन्त्रभागार्थोऽकु-र्वन्कृदित्युक्तः । 'शुद्धमपापविद्ध'मित्यस्यार्थः शुद्ध इति । 'तद्धावतोऽन्या-नत्येति तिष्ठ'दित्यस्यार्थमाह—तिष्ठन्निति । धावतो वेगवतोऽन्यान् मन-आदीनत्येति अतीत्य गच्छति । यत्र मनःप्राणादि गच्छति तत्र सर्वत्रात्मनः स्वाभिव्यक्तिनियमादात्मा तिष्ठन्नपि गच्छतीव भासत इत्यर्थः । 'अजाय-मानो बहुधा विजायते' इति मन्त्रार्थमाह—अजः सन्बहुधा मत इति । सर्वत्र हेतुर्मायया सर्वशक्तित्वादिति । नहि मायायामसंभावनास्तीति भावः ॥ ७९ ॥

अक्रियस्यापि क्रियावत्त्वोपचारमुक्तं दृष्टान्तेन प्रपञ्चयति—

राजवत्साक्षिमात्रत्वात्सांनिध्याद्भ्रामको यथा ।
भ्रामयञ्जगदात्माहं निःक्रियोऽकारकोऽद्वयः ॥ ८० ॥

राजवदिति ॥ स्पष्टम् ॥ ८० ॥

यस्मादेवमात्मा स्वतो नित्यशुद्धत्वादिस्वभावः शास्त्रन्यायाभ्यामव-गतस्तस्मात्तं तथैव जानीयान्नान्यथेत्युपसंहरति—

निर्गुणं निष्क्रियं नित्यं निर्द्वन्द्वं यन्निरामयम् ।
शुद्धं बुद्धं तथा मुक्तं तद्ब्रह्मास्मीति धारयेत् ॥ ८१ ॥

निर्गुणमिति ॥ नैतेषु श्लोकेषु पुनरुक्तं दोषावहं, यतः प्रतिपाद्यस्य दुर्बोधत्वान्मुमुक्षूपकाराय कारुणिक आचार्यः क्वचिच्छास्त्रतः क्वचित्तर्केण क्वचिद्विद्वदनुभवाभिनयनेन पुनः पुनः प्रतिपादयति । 'भूयोऽपि वक्तव्य'मिति न्यायात् ॥ ८१ ॥

उक्तं प्रकरणार्थं प्रतिपत्तिसौकर्यार्थं संक्षिप्य कथयति—

बन्धं मोक्षं च सर्वं यत इदमुभयं हेयमेकं द्वयं च
ज्ञेयं ज्ञेयाभ्यतीतं परममधिगतं तत्त्वमेकं विशुद्धम् ।

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

विज्ञायैतद्यथावच्छ्रुतिमुनिगदितं शोकमोहावतीतः ।
सर्वज्ञः सर्वकृत्स्याद्भवभयरहितो ब्राह्मणोऽवाप्तकृत्यः ॥८२॥

बन्धं मोक्षमिति ॥ बन्धं मोक्षं च सर्वं यथावद्विज्ञाय भवभयरहितः स्यादित्यन्वयः । बन्धः प्रमातृकर्तृत्वादिप्रतिभासलक्षणः, मोक्षो ब्रह्मस्वरूपावस्थानम्, सर्वमिति निःशेषं पूर्वोक्तप्रकारमित्यर्थः । इदमुभयं बन्धं मोक्षं च यतो हेतोरज्ञानाज्ज्ञानाच्च भवतः ते अपि विज्ञायेति संबन्धः । तथा एकमनुवृत्तं कारणं, द्वयं व्यावृत्तं कार्यं च यज्ज्ञेयं विषयभूतं तत्सर्वं हेयं बाध्यं विज्ञायेत्यन्वयः । ज्ञेयाभ्यतीतं दृश्यात्सम्यक् पृथक्कृतं परमं निरतिशयं विशुद्धं एकं ब्रह्म यद्वेदान्तेष्वधिगतं तत्त्वं परमार्थं तदपि यथावद्विज्ञायात्मत्वेनोपादाय । किंलक्षणम् । श्रुतिमुनिगदितं श्रुतिवाक्येन मुनिना गुरुणोपदिष्टमित्यर्थः । एवमात्मानात्मतत्त्वं ज्ञात्वाऽनात्मापोहेनात्मतत्त्वनिष्ठः शोकमोहावतीतः स्यात् । 'तत्र को मोहः कः शोक एकत्वमनुपश्यत' इति श्रुतेः । सर्वं हि ब्रह्म तज्जानन्सर्वज्ञः स्यात्सर्वं स्वात्मन्येकं करोतीति सर्वकृत्स्यात् । तथाच मुक्तविषया श्रुतिः 'अहं विश्वं भुवनमभ्यभवा'मिति । दैर्घ्यं गानार्थम् । अभ्यभवमभिभूतवानात्मसात्कृतवानस्मीति श्रुत्यर्थः । भवभयरहितः 'न बिभेति कुतश्चने'ति श्रुतेः । ब्राह्मणो मुख्यया वृत्त्या ब्राह्मणशब्दाभिधेयः । 'अमौनं च मौनं च निर्विद्याथ ब्राह्मण' इति । 'अथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मण' इति च श्रुतेः । अवाप्तकृत्यः प्राप्तसर्वक्रियाफल इत्यर्थः । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति श्रुतेरित्यर्थः ॥ ८२ ॥

एवमात्मानं जानतः कृतकृत्यत्वमुक्तं प्रकटयति—

न स्वयं स्वस्य नान्यश्च नान्यस्यात्मा च हेयगः ।
उपादेयो न चाप्येवमिति सम्यङ्मतिः स्मृता ॥ ८३ ॥

न स्वयमिति ॥ स्वयमात्मा स्वस्य न हेयगस्त्यक्तव्यकोटौ पतितो न वाप्युपादेयः एकस्मिन्कर्मकर्तृत्वासंभवात्स्वरूपस्य स्थितौ नाशे वा स्वविषयहानोपादानयोरसंभवाच्च । तथान्यश्च न स्वस्य हेयगोऽद्वैतेऽन्यस्यैवाभावाच्चाप्युपादेयोऽतएव तथान्यस्यापि स्वयमुपादेयो हेयगो वा न भवत्यात्मा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तराभावादनात्मनश्च बाधितत्वादचैतन्याच्चेति योजना। इत्येवं या ...
सा सम्यग्ज्ञानं स्मृता ब्रह्मविद्भिरित्यर्थः॥ ८३॥

कूटस्थचैतन्यैकरसे पूर्णे वस्तुनि हानाद्यसंभवान्निरायासं परंब्रह्मैव ... त्वेवंविधाया धियः सम्यक्त्वे हेतुमाह—

आत्मप्रत्यायिका ह्येषा सर्ववेदान्तगोचरा।
ज्ञात्वैतां हि विमुच्यन्ते सर्वसंसारबन्धनैः॥ ८४॥

आत्मप्रत्यायिकेति॥ आत्मानं ब्रह्मत्वेन प्रत्याययतीत्यात्मप्रत्यायि... हि यस्मादेषा मतिः स्वानुभवसिद्धेति वा सर्ववेदान्तगोचरेति प्रमाण... त्वमस्या दर्शयति। एतां ज्ञात्वा लब्ध्वा सर्वसंसारबन्धनैर्विमुच्यन्ते।... कृत्या भवन्तीत्यर्थः। तथा च भगवद्वचनं 'इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ। एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारते'ति॥ ८४॥

प्रकरणोक्तं ज्ञानमिदानीं प्रशंसन्नस्योपादेयत्वं द्रढयति—

रहस्यं सर्ववेदानां देवानां चापि यत्परम्।
पवित्रं परमं ह्येतत्तदेतत्संप्रकाशितम्॥ ८५॥

रहस्यमिति॥ रहस्यमुपदेशव्यतिरेकेणाविज्ञेयं 'आचार्यवान्पुरुषो वेद' 'सर्वे वेदा यत्पदमामनन्ती'ति च श्रुतेः। 'देवैरत्रापि विचिकित्सितं ... नहि सुविज्ञेयमणुरेष धर्मः' इति श्रुतेर्देवानां चापि रहस्यमित्यर्थः। परं ... त्तमं पवित्रं पावनम्। 'क्षीयन्ते चास्य कर्माणि', 'एवंविदि पापं कर्म न श्लिष्यते'इत्यादिश्रुतेः। हि यस्मात्परमं परमपुरुषार्थरूपं निरतिशयानन्द... शमिति यावत्। यदेवंरूपं सम्यग्ज्ञानं तदेतत्सम्यक् प्रकाशितं प्रकटीकृतमस्मिन्प्रकरण इत्यर्थः॥ ८५॥

एतस्य गोपनीयत्वं सूचयति—

नैतद्देयमशान्ताय रहस्यं ज्ञानमुत्तमम्।
विरक्ताय प्रदातव्यं शिष्यायानुगताय च॥ ८६॥

नैतदिति॥ यद्वाऽस्य दुर्विज्ञेयत्वेन दुर्धरत्वात्तद्धारणसमर्थमधिकारि... विशिष्यत्वनधिकारिभ्यो विवेचयति—नैतद्देयमिति॥ ८६॥

यस्मादेवंलक्षणज्ञानद आचार्यः कृतकृत्यो न प्रलोभादिना ज्ञानं ...

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

च्छति तस्मान्मुमुक्षुरमानित्वादिशिष्यगुणयुक्तः स्याद्यथाचार्यः कृपया विद्यां दद्यादित्येतदर्थमाह—

दद्तश्चात्मनो ज्ञानं निष्क्रियोऽन्यो न विद्यते ।
ज्ञानमिच्छंस्तरेत्तस्माद्युक्तः शिष्यगुणैः सदा ॥ ८७ ॥

दद्तश्चेति ॥ न विद्यते यस्मादिति योज्यम् । तस्माच्छिष्यगुणैः सदा युक्तो ज्ञानमिच्छन्संपादयंस्तरेत् । संसारमिति शेषः ॥ ८७ ॥

आद्यविद्योपसंहारेऽपि देवताचार्यनमस्कारौ तद्भक्तेर्विद्यां प्रत्यन्तरङ्गत्वख्यापनाय कार्याविति दर्शयति श्लोकद्वयेन—

ज्ञानं ज्ञेयं तथा ज्ञाता यस्मादन्यो न विद्यते ।
सर्वज्ञः सर्वशक्तिर्यस्तस्मै ज्ञानात्मने नमः ॥ ८८ ॥

ज्ञानमित्यादिना ॥ ज्ञानात्मने चित्सदानन्दरूपायेत्यर्थः ॥ ८८ ॥

विद्यया तारिताः स्मो यैर्जन्ममृत्युमहोदधिम् ।
सर्वज्ञेभ्यो नमस्तेभ्यो गुरुभ्योऽज्ञानसंकुलम् ॥ ८९ ॥

विद्ययेति ॥ अज्ञानसंकुलमिति च्छेदः ॥ ८९ ॥

इति सप्तदशं सम्यङ्मतिप्रकरणम् ॥ १७ ॥

---

## तत्त्वमसिप्रकरणम् ॥ १८ ॥

पूर्वस्मिन्प्रकरणे ब्रह्मात्मविषयमपरोक्षज्ञानं मोक्षसाधनं वेदान्तेभ्यो भवतीत्युक्तं तदयुक्तं, वेदान्तानामपि स्वर्गकामादिवाक्यवत्परोक्षज्ञानजनकत्वादतोऽपरोक्षज्ञानाय प्रसंख्यानमेष्टव्यमिति केचित्प्रतिपेदिरे, तन्मतनिराकरणेन पूर्वोक्तं सर्वं स्वसिद्धान्तं श्रौतमुपपत्तितः स्फुटमुपपादयितुं प्रकरणान्तरमारभमाणो देवतानमस्कारव्याजेनान्तःकरणवृत्तिभावाभावसाक्षिणं कूटस्थचिदेकतानमेवात्मानं नित्यापरोक्षं वेदान्ताः ब्रह्मेति प्रतिपादयन्तो न परोक्षं ब्रह्म समर्पयन्तीति सूचयन्प्रकरणप्रतिपाद्यं दर्शयति—

येनात्मना विलीयन्ते उद्भवन्ति च वृत्तयः ।
नित्यावगतये तस्मै नमो धीप्रत्ययात्मने ॥ १ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येनेति ॥ वृत्तयो धीपरिणामाः । अलातचक्रमिवाङ्ग्यात्मना येन चै-
न्यज्योतिःस्वरूपेण विलीयन्ते सुषुप्तौ अवस्थान्तरे उद्भवन्ति च । वि-
व्याप्ता इत्यर्थः । धीप्रत्ययाः साभासबुद्धिवृत्तयस्तेषामात्मने । तदध्या-
ष्ठानायेत्यर्थः । नित्यश्चासाववगतिश्चेति विग्रहः ॥ १ ॥

इदानीं स्वोक्तेऽर्थे मुमुक्षूणां विश्वासार्थं स्वाचार्यगुणोपवर्णनपूर्वकं सं-
दायशुद्धिं कथयति—

प्रमथ्य वज्रोपमयुक्तिसंभृतैः श्रुतेररातीञ्शतशो
वचोसिभिः । ररक्ष वेदार्थनिधिं विशालधीर्नमो
यतीन्द्राय गुरोर्गरीयसे ॥ २ ॥

प्रमथ्य वज्रेति ॥ संभृतैरमेयतया घटितैः श्रुतेर्वचोसिभिर्वेदान्तवा-
रूपनिस्त्रिंशैः अरातीन्भेदतस्त्वारण्यवासिनोऽद्वैतरत्नापहारिणः शत्रून-
समूलमुन्मूल्य यो विशालधीरप्रतिहतदीर्घबुद्धिर्वेदान्तार्थनिधिं वेदान्त-
यागतं निधिं निधीयतेऽस्मिन्सर्वमिति निधिरद्वयं ब्रह्मात्मतत्त्वं तं ररक्ष
यतीन्द्राय गुरोर्गरीयसे परमगुरवे नम इति योजना ॥ २ ॥

एवं नमस्कारव्याजेन प्रकरणार्थं स्वसंप्रदायशुद्धिं चोक्त्वा तत्त्वमसि-
वाक्यादेवापरोक्षज्ञानमात्मनीति प्रकरणसिद्धान्तं तावदाह—

नित्यमुक्तः सदेवास्मीत्येवं चेन्न भवेन्मतिः ।
किमर्थं श्रावयत्येव मातृवच्छ्रुतिरादरात् ॥ ३ ॥

नित्यमुक्त इति ॥ सदेवाहमहमेव सदस्मि नित्यमुक्त इत्येवं वे-
दपरोक्षा मतिर्वेदान्तवाक्यान्न भवेत्तर्ह्येवं सिद्धवन्निर्देशेन तत्त्वमसि-
श्रुतिः किमर्थं कस्मादादृता आदरवती पुनःपुनर्मातेव पुत्रहितैषिणी श्रा-
वयेदित्यर्थः ॥ ३ ॥

नित्यापरोक्षस्वभावात्मस्वरूपत्वाद्ब्रह्मणो वाक्यादेवापरोक्षज्ञानमारोपि-
तार्थनिवृत्तिफलमुत्पद्यत इत्याह—

सिद्धादेवाहमित्यस्माद्युष्मद्धर्मो निषिध्यते ।
रज्ज्वामिवाहिधीर्युक्त्या तत्त्वमित्यादिशासनैः ॥ ४ ॥

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

सिद्धादेवेति ॥ अहमित्यत्राहंशब्दलक्ष्यादपरोक्षतया स्वतःसिद्धादात्मनः सकाशाद्युष्मद्धर्मैः परागर्थोऽहंकारादिस्त्वमित्यादिशासनैर्युक्त्या सहितैः शोधितार्थैरिति यावत् । निषिध्यते भ्रमगृहीतपारोक्ष्यसद्वयत्वाकारविलापनेनात्मतत्त्वं प्रतिपाद्यत इत्यर्थः । तत्र दृष्टान्तार्थः स्पष्टः ॥ ४ ॥

तन्निवृत्तिं दृष्टान्ताभ्यां स्पष्टयति—

**शास्त्रप्रामाण्यतो ज्ञेया धर्मादेरस्तिता यथा ।**
**विपापोहो यथा ध्यानाद् ह्रुतिः स्यात्पाप्मनस्तथा ॥ ५ ॥**

शास्त्रेति ॥ यद्वा नित्यापरोक्षात्मैव ब्रह्म तदवगमश्चानर्थनिवृत्तिहेतुरित्येतत्क्रमेण दृष्टान्ताभ्यां साधयति—शास्त्रेति । तथा ब्रह्मण एवात्मत्वेनास्तिता 'अनेन जीवेनात्मनानुप्रविश्य' 'तत्त्वमसी'ति शास्त्रप्रामाण्यतो ज्ञेयेति दार्ष्टान्तिकं योज्यम् । ध्यानाद्गरुडादिमन्त्रबीजस्मरणाद्विपापोहः सद्यो विषनिवृत्तिस्तथा पाप्मनोऽविद्याद्यनर्थरूपस्य वाक्यादात्मतत्त्वावगममात्रेण सद्य एव ह्रुतिः । बाधरूपा निवृत्तिः स्यादित्यर्थः ॥ ५ ॥

ननु वाक्योत्थाहं ब्रह्मास्मीति प्रत्ययवदहं करोमीत्यपि प्रत्ययोऽनुभवसिद्धस्तत्र को हेतुरयमेवापरेण बाध्यत इत्यत्रेति शङ्कते—

**सद्ब्रह्माहं करोमीति प्रत्ययावात्मसाक्षिकौ ।**
**तयोरज्ञानजस्यैव त्यागो युक्ततरो मतः ॥ ६ ॥**

सद्ब्रह्माहमिति ॥ तत्र नियामकं हेतुं वदन्नुत्तरमाह—तयोरिति । युक्ततर इति तरपोऽयमर्थः—यथा पूर्वप्रवृत्तयागविनियोजकश्रुत्या पश्चात्प्रवृत्ता लिङ्गादयोऽप्राप्ता एव बाध्यन्ते, यथा वा पूर्वमेव प्रकृतेर्विकृतावतिदेशप्राप्तानामङ्गानां विकृतिगतविशेषोपदेशेन पाश्चात्येन बाध इति युक्तत्वेऽप्यनियमो बाध्यबाधकयोः पूर्वापरीभावस्य न तथास्य न्यायस्येति युक्ततर इत्युक्तमिति ॥ ६ ॥

अत्र कः प्रमाणजः प्रत्ययः को वाऽज्ञानज इति वीक्षायां विविच्य दर्शयति—

**सदसीति प्रमाणोत्था धीरन्या तन्निभोद्भवा ।**
**प्रत्यक्षादिनिभा वापि बाध्यते दिग्भ्रमादिवत् ॥ ७ ॥**

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सदसीति ॥ धीस्तत्त्वमसीति निर्दुष्टवाक्यप्रमाणोत्था अन्या कर्त्रा त्यादिधीस्तन्निभोद्भवा प्रमाणाभाससमुद्भूताऽविवेकदोषास्कन्दितत्वादित्यर्थः वाक्यजन्यज्ञानस्यापि प्रत्यक्षाभासबाधनं दृष्टान्तेन बुद्धिमारोहयति— क्षादीति ॥ ७ ॥

ननु ब्रह्मासीति बुद्धिवत्कर्तृत्वादिबुद्धेरपि 'सत्यं वद' 'धर्मं चर' कर्ता भोक्तेत्याहुर्मनीषिण' इत्यादिवचनाच्छास्त्रसिद्धत्वं तुल्यमिति कथं बाध्यत्वमित्याशङ्क्याह—

कुरु भोक्तेति यच्छास्त्रं लोकबुद्ध्यनुवादि तत् ।
सदसीति श्रुतेर्जाता बाध्यतेऽन्यैतयैव धीः ॥ ८ ॥

कुरु भोक्तेति ॥ शास्त्रानभिज्ञानां तदभिज्ञसंगतिहीनानामपि कर्ता भोक्ताहमस्मीति धियः सिद्धत्वात्कुर्वित्यादिशास्त्रं लोकसिद्धार्थानुवादित्वाद् गतार्थबोधकमित्यर्थः । सदसीति धीस्तु श्रुतेरन्यसिद्धार्थायाः सका… त्यर्थः । तस्मादेतयैव निरवकाशया सदसीति श्रुतिजातया धियैवान्या … काशानुवादवाक्यजन्या बाध्यते बाधत एवेति वान्वयः ॥ ८ ॥

तदेवं वाक्यादेवापरोक्षज्ञानमात्मविषयमुत्पद्यते तच्च निरपेक्षमेव… वृत्तिहेतुरिति स्वमतमुपन्यस्य स्वयूथ्यमतमुत्थापयति—

सदेव त्वमसीत्युक्ते नात्मनो मुक्तता स्थिरा ।
प्रवर्तते प्रसंचक्षामतो युक्त्याऽनुचिन्तयेत् ॥ ९ ॥

सदेवेति ॥ प्रसंचक्षां प्रसंख्यानं शब्दावृत्तिं युक्त्या सहाभ्यसेदित्यर्थः उक्तमेव साधयति—

सकृदुक्तं न गृह्णाति वाक्यार्थज्ञो न यो भवेत् ।
अपेक्षते त एवान्यदवोचाम द्वयं हि तत् ॥ १० ॥

सकृदिति ॥ योऽपि वाक्यार्थज्ञः सकृदुक्तं न गृह्णाति न जानाति सम्यक् प्रतिपद्यते यतोऽतएवान्यत्सहकारि भूतमपेक्षते यदपेक्षते वाक्यानुचिन्तनं युक्त्यालोचनं च पूर्वश्लोके द्वयमवोचामेत्यर्थः ॥ १० ॥

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

ननु तत्त्वमस्यादिवाक्येषु विधिनोपलभामहे ब्रह्मात्मभावस्य च स्वत एव सिद्धेर्मुमुक्षोर्नियोगोऽपि न घटत इत्याह—

नियोगोऽप्रतिपन्नत्वात्कर्मणां स यथा भवेत् ।
अविरुद्धो भवेत्तावद्यावत्संवेद्यताऽदृढा ॥ ११ ॥

नियोग इति ॥ वाक्यमात्रादैकात्म्यस्याप्रतिपन्नत्वात्साक्षात्कृतत्वाभावात्तावन्नियोगोऽविरुद्धो भवेद्यावत्संवेद्यता ब्रह्मात्मैकताऽदृढा दृढा न प्रतीयत इति योजना । स नियोगः कर्मणामग्निष्टोमादीनां यथा भवेद्वाक्यादवगतानामपि फलप्राप्तय इति दृष्टान्तार्थः ॥ ११ ॥

किंच विधिमन्तरेण चेद्ब्रह्मात्मैक्यात्स्वयमेव प्रतिपद्येत तदा यमनियमादिकमनुष्ठीयमानं मिथ्या स्यादुपकार्याभावादित्याह—

चेष्टितं च तथा मिथ्या स्वच्छन्दः प्रतिपद्यते ।
प्रसंख्यानमतः कार्यं यावदात्मानुभूयते ॥ १२ ॥

चेष्टितमिति ॥ चेष्टितमनुष्ठितं यमादि स्वच्छन्दः स्वेच्छावाननियुक्त इति यावत् । प्रतिपद्यते चेदित्यध्याहारः । आत्मानुभूयते । साक्षात्क्रियत इत्यर्थः ॥ १२ ॥

इतोऽपि प्रसंख्यानं विधितोऽनुष्ठेयमित्याह—

सदसीति च विज्ञानमक्षजो बाधते ध्रुवम् ।
शब्दोत्थं दृढसंस्कारो दोषैश्चाकृष्यते बहिः ॥ १३ ॥

सदसीति ॥ सदसीति विज्ञानमक्षजः प्रत्यक्षप्रत्ययः कर्ता भोक्तेत्येवमाद्याकारो बाधते । ध्रुवं निश्चितमेतत् । अक्षजस्य प्राबल्ये हेतुगर्भं विशेषणं—दृढसंस्कार इति । किंच तेन मुमुक्षुर्दोषै रागादिभिश्च बहिराकृष्यते बहिर्मुखीक्रियतेऽतः प्रसंख्यानं दोषनिवृत्तये च कार्यमित्यर्थः ॥ १३ ॥

न केवलं चिरं निरूढवासनाघटितत्वेन प्रत्यक्षप्राबल्यमपि तु विशेषविषयत्वाच्चेत्याह—

श्रुतानुमानजन्मानौ सामान्यविषयौ यतः ।
प्रत्ययावक्षजोऽवश्यं विशेषार्थो निवारयेत् ॥ १४ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

श्रुतेति ॥ श्रुतः शब्दोऽनुमानं लिङ्गज्ञानं विप्रलिप्साभ्रान्त्योरपि तत्र सं स्यमानत्वाद्भ्रत्यन्तरसंभवाच्च प्रत्यक्षस्य तदभावाद्युक्तं बाधकत्वमित्यर्थः ॥

यदि वाक्यार्थज्ञानमात्रात्कृतकृत्यता कस्यचिद्दृश्येत तदा प्रसंख्यानस्य मनर्थकं स्यान्नतु तथा कश्चिद्दृश्यते अतः प्रसंख्यानमावश्यकमित्याह—

वाक्यार्थप्रत्ययी कश्चिन्निर्दुःखो नोपलभ्यते ।
यदि वा दृश्यते कश्चिद्वाक्यार्थश्रुतिमात्रतः ॥ १५ ॥

वाक्यार्थप्रत्ययीति ॥ 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे तदि विजज्ञा'वित्यादौ वाक्यार्थज्ञानमात्राद्वामदेवादिः कृतकृत्यो दृश्यत इति त्राह—यदि वेति । दृश्यते निर्दुःख इत्युत्तरश्लोकगतेनान्वयः ॥ १५ ॥

निर्दुःखोऽतीतदेहेषु कृतभावोऽनुमीयते ।
चर्या नोऽशास्त्रसंवेद्या स्यादनिष्टं तथासति ॥ १६ ॥

निर्दुःखोऽतीतेति ॥ वाक्यार्थश्रवणमात्रात्कश्चिद्यदि निर्दुःखो श्रुतिपुराणादौ, सोऽतीतदेहेषु कृतभावोऽनुष्ठितप्रसंख्यानोऽनुमीयते स्वत्वलिङ्गेनेत्यर्थः । किंच सकृद्विज्ञातवाक्यार्थस्य विध्यनभ्युपगमे नोऽस्म चर्या परमहंसाश्रमाचाराऽशास्त्रसंवेद्या स्यात् शास्त्रविहिता न स्यात् । सत्यनिष्टं स्यात् । यत्याश्रमचर्यापरित्यागेऽप्यारूढपतितता न भवेदित्यनि प्रसङ्ग इत्यर्थः ॥ १६ ॥

कस्तर्हि प्रसंख्यानविधिपक्षे सिद्धब्रह्मोपदेशस्यार्थः स्यादित्यत आह—

सदसीति फलं चोक्त्वा विधेयं साधनं यतः ।
न तदन्यत्प्रसंख्यानात्प्रसिद्धार्थमिहेष्यते ॥ १७ ॥

सदसीति ॥ त्वं सद्ब्रह्मासीति वर्तमानोपदेशेन फलमिदं साधनवि नार्थमुच्यते । यतो यस्मात्सर्वत्र फलमुक्त्वा साधनं विधेयमतो ब्रह्मात्मैक कामः प्रसंचक्षीतेति सार्थको विधिर्भवेदित्यर्थः । प्रसंख्यानमेव किमि विधीयते ज्योतिष्टोमादि कस्माद्ब्रह्मभावाय न विधीयत इत्यत आह— तदन्यदिति । प्रसंख्यानादन्यदिह वेदान्तेषु प्रसिद्धार्थाभिव्यञ्जनसमर्थं सांप्र

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

यत्तन्नेष्यते । ज्योतिष्टोमादेर्व्यञ्जकत्वसामर्थ्याभावादित्यर्थः ॥ १७ ॥

पूर्वपक्षमुपसंहरति—

तस्मादनुभवायैव प्रसंचक्षीत यत्नतः ।
त्यजन्साधनतत्साध्यविरुद्धं शममादिमान् ॥ १८ ॥

तस्मादिति ॥ किं कुर्वन् साधनतत्साध्यविरुद्धं त्यजन् साधनं प्रसंख्यानं तत्साध्यं तत्फलमात्मैक्यसाक्षात्कारः तद्विरुद्धं कर्मनिष्ठत्वम् । शमनं शमः आदिपदाद्दमोपरमावित्यादिग्रहः । शमादियुक्तश्च सन्नित्यर्थः ॥ १८ ॥

सिद्धान्तमुपक्रमते—

नैतदेवं रहस्यानां नेतिनेत्यवसानतः ।
क्रियासाध्यं पुरा श्राव्यं न मोक्षो नित्यसिद्धतः ॥ १९ ॥

नैतदेवमिति ॥ किं वेदान्तेषु प्रसंख्यानं साक्षाद्विधीयते किंवा वर्तमानोपदेशेन फलवचनानुपपत्त्या कल्प्यत इति । तत्र नाद्य इत्याह—रहस्यानामिति । उपनिषद्वाक्यानामित्यर्थः । नेतिनेति दृश्यनिषेधद्वारा तदवधिमात्रे ब्रह्मात्मस्वरूपे पर्यवसानदर्शनाद्वेदान्तानां न विध्यर्थतेत्यर्थः । द्वितीयं प्रत्याह—क्रियासाध्यमिति । यत्क्रियासाध्यं फलं तत्पुरा पूर्वकाण्डे श्राव्यं नोपनिषत्सु । अत्र श्रूयमाणो मोक्षो न क्रियासाध्यः । कुतः । नित्यसिद्धत्वोऽसाध्यत्वादित्यर्थः ॥ १९ ॥

तत्त्वमस्यादिवाक्यमपरोक्षाद्वितीयब्रह्मात्मज्ञानद्वारा तदज्ञानं तदध्यस्तं च दुःखित्वादिसंसारं निवर्तयतीति वक्तुमज्ञानाध्यस्तं दुःखादीत्यत्र दृष्टान्तमाह—

पुत्रदुःखं यथाध्यस्तं पित्राऽदुःखे स्व आत्मनि ।
अहंकर्ता तथाध्यस्तो नित्यादुःखे स्व आत्मनि ॥ २० ॥

पुत्रेति ॥ अदुःखे । ज्वरादिदुःखरहित इत्यर्थः । दार्ष्टान्तिकमाह—अहंकर्तेति ॥ नित्यादुःखे सदा दुःखादिसंसाररहिते स्वे स्वरूपे आत्मनि निरुपाधिकेऽहंकर्ता साभासान्तःकरणाविविक्तो दुःखादिधर्मकोऽविवेकलक्ष-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णया विद्यया तथाध्यस्त इत्यर्थः । अहंकर्त्रीति पाठे स्व आत्मनीत्यत्र बु-द्धिरिति शेषः ॥ २० ॥

आत्मनो ब्रह्मस्वभावाज्ञानेनाध्यस्तः संसारस्तत्स्वभावज्ञानमात्रेण तत्त्वमसीति च शास्त्रोत्थान्निवर्तते तदात्मनः सर्वक्रियाधिकारनिवृत्तेः दुः-विव पुनरध्यासबीजाभावात्कृतकृत्यस्य न प्रसंख्यानविध्यवसर इति ध-माह—

सोऽध्यासो नेतिनेतीति प्राप्तवत्प्रतिषिध्यते ।
भूयोऽध्यासविधिः कश्चित्कुतश्चिन्नोपपद्यते ॥ २१ ॥

सोऽध्यास इति ॥ प्राप्तवदिति वतिप्रयोगाद्वस्तुवृत्त्या प्राप्त्यभावा-रोपितत्वं द्योतयति ॥ २१ ॥

नन्वविषये ब्रह्मात्मनि विषयधर्माणां दुःखित्वादीनां कथमध्यासः सं-भाव्यते, यतः पुरोऽवस्थिते विषयभूते शुक्तिकादौ रजताद्यध्यासो दृष्ट इ-त्यत्र व्यभिचारान्नैवं नियम इत्याह—

आत्मनीह यथाध्यासः प्रतिषेधस्तथैव च ।
मलाध्यासनिषेधौ खे क्रियेते च यथाऽबुधैः ॥ २२ ॥

आत्मनीति ॥ यथा देहव्यतिरिक्तात्मवादिनामात्मनीह पुरःस्थिते दे-जरामरणाद्यध्यासस्तत्प्रतिषेधश्च, यथा चेन्द्रियाविषयेऽपि खे मलाध्यास-निषेधावबुधैः क्रियेते तथैव च प्रत्यगात्मनि ब्रह्मण्यप्यविषये संसाराध्यासनि-षेधौ स्यातामित्यर्थः । 'आत्मनीह तथाध्यास' इति पाठे दृष्टान्तदार्ष्टान्ति-परतयोत्तरार्धपूर्वार्धौ स्पष्टार्थौ । अधिष्ठानस्वरूपमात्रस्फुरणमध्यासेऽपे-न विषयत्वेन स्फुरणं तदिह स्वप्रकाशे आत्मनि स्वतःसिद्धमिति भाव-त्तिरिति भावः ॥ २२ ॥

प्राप्तवत्प्रतिषिध्यत इत्युक्तं प्रपञ्चयति—

प्राप्तश्चेत्प्रतिषिध्येत मोक्षोऽनित्यो भवेद्ध्रुवम् ।
अतोऽप्राप्तनिषेधोऽयं दिव्यग्निचयनादिवत् ॥ २३ ॥

प्राप्तश्चेति ॥ प्रमाणसिद्धश्चेत्संसारः प्राप्तवत्प्रतिषिध्येत तर्हि संसा-रध्वनिवृत्तिरूपस्य मोक्षस्यागन्तुकत्वाद्ध्रुवं निश्चितं मोक्षो नित्यो भवेत् ।

0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

मार्थवृत्त्यात्मगतस्य बन्धस्य परमार्थत एव निवृत्तौ तस्यात्मनोऽवस्थान्तरापत्त्या विकारित्वादनित्यत्वमावश्यकं तथाऽनादिभावरूपस्य बन्धस्य परमार्थत्वे तन्निवृत्तिरेवासंभाविनी । सादित्वाभ्युपगमे तु तस्यात्मनैव कृतत्वान्निवृत्तसजातीयस्य पुनस्तस्मिन्पूर्ववदुत्पत्त्युपपत्तेरनित्यो मोक्षः प्रसज्येतैवेति बन्धस्याविद्यकत्वमवश्यमेष्टव्यम् । तस्य च ज्ञानादेव निवृत्तेर्निरर्थकं प्रसंख्यानमित्यभिप्रेत्योपसंहरति—अत इति । यथा 'नान्तरिक्षे न दिव्यग्निश्चेतव्य' इति पृथिव्यामिवाग्निचयनमन्तरिक्षादावारोप्याप्राप्तमेव प्रतिषिध्यते, तथा संसारबन्धरहित एवात्मनि तदारोपनिषेधाविति दृष्टान्तेनाह—दिव्यग्नीति । आदिपदादाकाशमालिन्यं लौकिकं गृह्यते ॥ २३ ॥

आत्मनि बन्धसंबन्धबोधकप्रमाणाभावादपि न तत्र बन्धस्य सत्यताप्राप्तिरस्तीत्याह—

**संभाव्यो गोचरे शब्दः प्रत्ययो वा न चान्यथा ।**
**न संभाव्यौ तदात्मत्वादहंकर्तुस्तथैव च ॥ २४ ॥**

संभाव्य इति ॥ अयमर्थः—आत्मनि बन्धसंबन्धबोधकं प्रमाणं शब्दः
प्रमाणान्तरं वा सर्वथापि नोपपद्यत इत्याह—शब्दः प्रत्ययो वेति । प्रत्ययः
प्रमाणान्तरजन्यः शब्दो वा प्रत्ययो वा लोके गोचरे विषये संभाव्यः संभा-
वनायोग्यो न चान्यथा विषयत्वायोग्ये । तथाच पष्ठी जातिगुणक्रियादिश-
ब्दप्रवृत्तिनिमित्तरहितस्यात्मनो न शब्दगोचरत्वं संभाव्यते येनायमात्मा
संसारीति बोधः शब्दादुत्पद्येतेति । तथा रूपादिहीनत्वाच्च बाह्येन्द्रियव-
र्गस्तस्मिन्क्रमतेऽतएव न तत्स्वरूपसंबद्धतया लिङ्गविशेषाग्रहणादनुमानार्था-
पत्ती तस्मिन्संभवतोऽवयवाद्यभावान्नोपमानं भावरूपत्वादेव नानुपलब्धि-
रपीति प्रतीतिमात्रं परिशिष्यत इति न प्रमाणसिद्धो बन्धसंबन्ध इति यतो
न संभाव्यावात्मन्यपि शब्दप्रत्ययाविति । किंच शब्दप्रत्यययोः प्रमाणत्वाभि-
मतयोस्तथैव चाहंकर्तुः प्रमातृत्वाभिमतस्य च तद्वात्मत्वाद्ब्रह्मात्मत्वाच्च तत्रो-
पारत्वमुपपद्यते । नह्यागन्तुकयोः शब्दप्रत्यययोरहंकर्तुर्वा चिदात्मनः पृथ-
क्स्वरूपमस्ति स्वात्मनि तु क्रियानुपपत्तिरित्यर्थः ॥ २४ ॥

तस्मादध्यस्तनिषेध एव वक्तव्य इति सिद्धमित्याह—

**अहंकर्त्रात्मनि न्यस्तं चैतन्यं कर्तृतादि यत् ।**

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

नेति नेतीति तत्सर्वं साहंकर्त्रा निषिध्यते ॥ २५ ॥

अहंकर्त्रेति ॥ चैतन्ये चित्स्वरूप आत्मनि यदहंकर्त्रा साभासान्तः णाविवेकेन कर्तृत्वादि न्यस्तमारोपितं तत्सर्वं नेतिनेतीति निषिध्यते कर्त्रा अहंकर्त्रा सहेत्यर्थः ॥ २५ ॥

अध्यस्तनिषेध एव चेच्छास्त्रेण क्रियते कथं तर्ह्यात्मनः स्वरूपो रित्यत आह—

उपलब्धिः स्वयंज्योतिर्दृशिः प्रत्यक्सदक्रियः ।
साक्षात्सर्वान्तरः साक्षी चेता नित्योऽगुणोऽद्वयः ॥ २६

उपलब्धिरिति ॥ अनुपलब्ध्यादिस्वरूपत्वे प्रमाणाभावादित्यत साक्षादित्यादिनोत्तरार्धसूत्रितश्रुतीनां प्रमाणत्वात्स्वप्रकाश एवात्मा स्वतःसिद्ध इत्यर्थः ॥ २६ ॥

नन्वात्मात्मीयमिति च द्वयमहंममप्रत्ययगोचरत्वेन प्रसिद्धं तथा कथमात्मा स्वतःसिद्ध इत्याशङ्क्योपाधिवशात्तथा प्रसिद्धिरित्याह—

संनिधौ सर्वदा तस्य स्यात्तदाभोऽभिमानकृत् ।
आत्मात्मीयं द्वयं चातः स्यादहंममगोचरः ॥ २७ ॥

संनिधाविति ॥ अभिमानकृदहंकारस्तस्य चिदात्मनः सर्वदा सं सति तदाभश्चैतन्यप्रकाशयुक्ततया तदाकारः स्यादतो हेतोरात्मात्मीयं च स्यादहंममेति व्यवहारगोचर इत्यर्थः । तथाच साभासान्तःकरण विवेकादात्माहमिति ममेति च भासमानोऽपि स्वतःसिद्ध एव स इति भावः ॥ २७ ॥

एवमहंप्रत्ययादेरन्यविषयत्वोपपादनेन 'संभाव्यो गोचरे शब्द' इति कोक्तं प्रत्ययागोचरत्वमात्मनः प्रतिपादितम्, इदानीं शब्दस्यापि विष दर्शयंस्तदगोचरत्वमुपपादयति—

जातिकर्मादिमत्त्वाद्धि तस्मिञ्शब्दास्त्वहंकृति ।
न कश्चिद्वर्तते शब्दस्तदभावात्स्व आत्मनि ॥ २८ ॥

-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

जातीति ॥ तस्मिन्नहंकृत्यहंकारे साभासे हि निश्चितं जातिकर्मादिशब्दप्रवृत्तिनिमित्तवत्त्वाच्छब्दाः प्रवर्तन्ते तदभावात्प्रवृत्तिनिमित्तजात्याद्यभावात्स्वे स्वरूपभूते आत्मनि निरुपाधिके कश्चिदपि शब्दो न वर्तते तं विषयीकुर्वन्नित्यर्थः । अत आत्मा स्वतःसिद्ध इति भावः ॥ २८ ॥

स्वतःसिद्धस्वरूप आत्मनि प्रवृत्तिनिमित्तजात्याद्यभावात्कश्चिदपि शब्दो न प्रवर्तते चेत्कथं तस्य वेदान्तवेद्यतयौपनिषदत्वमुद्घुष्यत इत्यत आह—

आभासो यत्र तत्रैव शब्दाः प्रत्यग्दृशि स्थिताः ।
लक्षयेयुर्न साक्षात्तमभिदध्युः कथंचन ॥ २९ ॥

आभास इति ॥ यत्राहंकारादावाभासश्चैतन्यप्रतिबिम्बोदयस्तत्रैवाभासाविविक्तेऽन्तःकरणादौ वाचकत्वेन स्थिता आत्मादिशब्दाः प्रत्यग्दृशिं प्रत्यक्तया भासमानं दृशिमात्मानं शुद्धं लक्षयेयुर्लक्षणया ज्ञापयेयुर्नतु तं साक्षादभिदध्युः कथंचन विशेषणादिप्रकारेणापीत्यर्थः । अतो नौपनिषदत्वप्रसिद्धिविरोध इति भावः ॥ २९ ॥

कथं नाभिदध्युरित्यत्र हेतुमाह—

नह्यजात्यादिमान्कश्चिदर्थः शब्दैर्निरूप्यते ॥ ३० ॥

नहीत्यर्धेन ॥ ३० ॥

ननु लक्षणयापि यत्र शब्दस्य तात्पर्यं स एव शब्दार्थः तथाचात्मादिशब्दानामहंकारातिरिक्ते प्रत्यगात्मनि चेद्वृत्तिः कथं तर्हि लोका अहंकारादावात्मशब्दं प्रयुञ्जते इत्यपेक्षायामुपचारादिति सदृष्टान्तमाह—

आत्माभासो यथाहंकृदात्मशब्दैस्तथोच्यते ।
उल्मुकादौ यथाग्न्यर्थाः परार्थत्वान्न चाञ्जसा ॥ ३१ ॥

आत्माभास इति श्लोकेन ॥ अहंकृदहंकारो वस्तुतोऽनात्माप्यात्माभास आत्मवदस्मत्प्रत्ययालम्बनो भासते यथा तथात्मादिशब्दैरपि यथाप्रतिभासमुच्यते, वस्तुगत्या तु शब्दप्रत्यययोः शुद्ध एवात्मनि पर्यवसानम्, यथा अग्न्यर्थाः शब्दा दहत्यादय उल्मुकं दहति अयो दहतीत्युल्मुकादौ प्रयुज्यमाना अञ्जसा साक्षादुल्मुकादौ न च पर्यवसन्ति, तेषां दाहाद्याश्रयत्वा-

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

नुपपत्तेर्देहत्यादिशब्दानां परार्थत्वात्तदभिव्यक्त्यर्थत्वात्तेऽप्यात्मन्येव पर्य-
न्ति, तथाहंकारस्यात्माभिव्यक्त्यर्थत्वात्तस्मिञ्जडे परिच्छिन्ने पराधीन
आत्मादिशब्दाश्चित्सदानन्दानन्ताद्यर्था अनुपपद्यमाना विचार्यमाणे शु
पर्यवस्यन्तीति सर्वमुपपन्नमित्यर्थः ॥ ३१ ॥

'आभासो यत्र'ति श्लोके सिद्धान्तिनाभासोऽङ्गीकृतः स च भेदवि
विशिष्टतया भासमानः परमार्थोऽपरमार्थो वेति वादिविप्रतिपत्त्या सं
परमार्थत इति सिद्धान्तं वक्तुं दृष्टान्तमाह—

मुखादन्यो मुखाभासो यथादर्शानुकारतः ।
आभासान्मुखमप्येवमादर्शाननुवर्तनात् ॥ ३२ ॥

मुखादन्य इति ॥ यथा मुखाभासो मुखप्रतिबिम्ब आदर्शानु
आदर्शभावाभावयोरनुकारादादर्शान्वयव्यतिरेकानुविधायित्वादिति
मुखाद्ग्रीवास्थानादागमापायितया स्थितादन्यो न पुनः स्वरूपेणेति
तथा सति बिम्बचेष्टया विनापि प्रतिबिम्बश्चेष्टेतेत्यर्थः । आभासान्मुख
यमन्यदेव कुत आदर्शाननुवर्तनादादर्शनिरपेक्षसत्तास्फुरणयोगि
तथाच ग्रीवास्थस्यैव मुखस्यादर्शे प्रतिबिम्बितस्यादर्शस्थतावैशिष्ट्येन
मानत्वमेवाभासत्वं तच्च न सत्यं मुखवियुक्तादर्शे तिर्यङ्निरीक्ष्यमाणे
तस्मिन्नदर्शनात् । नाप्यसदपरोक्षप्रतिभासात् । तस्मादनिर्वचनीय
सस्तस्माच्चान्यन्मुखमिति भावः ॥ ३२ ॥

दार्ष्टान्तिकमाह—

अहंकृत्यात्मनिर्भासो मुखाभासवदिष्यते ।
मुखवत्स्मृत आत्मान्योऽविविक्तौ तौ तथैव च ॥ ३३ ॥

अहंकृतीति ॥ अहंकृत्यहंकारे आत्मनिर्भासश्चेतनावत्त्वावभासो
भासवन्मुखान्मुखप्रतिबिम्बवच्छुद्धादात्मनोऽभिन्न इष्यते । आत्मा
आभासादन्यः स्मृतो ज्ञातः प्रतिबिम्बान्मुखवदित्यर्थः । मुखस्य मुखा
स्यादर्शस्य चाभासाश्रयस्य प्रतीतितो भेदेऽपि वस्तुतो भेदाभाववदात्म
स्तदाश्रयान्तःकरणादीनां प्रतिभासतो भेदेऽपि वस्तुतो नात्मनो
किंचिदस्तीति न परमार्थो भेद इत्यभिप्रेत्याह—अविविक्तौ तौ तथैव

-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

तावात्मात्माभासौ तथैव मुखमुखाभासाविव वस्तुतोऽविविक्तौ । परमार्थभेदरहिताविल्यर्थः । चकारादाभासाश्रयान्तःकरणं च न तद्विविक्तमिति योज्यम् ॥ ३३ ॥

एवं चिन्मात्रं तत्रानाद्यविद्यायां तत्कार्ये चाहंकारादौ प्रतिबिम्बितं तदेव चिदात्मस्वरूपमुपाधिस्थतावैशिष्ट्याध्यासवशात्संसारीति स्वमतमुक्त्वा तद्दृढीकरणायैकदेशिमतं दूषयितुमुत्थापयति—

संसारी च स इत्येक आभासो यस्त्वहंकृतिः ।
वस्तुच्छाया स्मृतेरन्यन्माधुर्यादि च कारणम् ॥ ३४ ॥

संसारीति ॥ यस्त्वहंकृत्याभासोऽस्माभिः पृथगुक्तः स एव संसारीत्येके मन्यन्ते इत्यर्थः । नन्वाभासस्यावस्तुत्वात्कथं तस्य बन्धमोक्षभागित्वया संसारित्वमित्याशङ्क्याभासशब्देन चिच्छायाया अभिप्रेतत्वात्तस्याश्च वस्तुत्वात्तदनुपपत्तिरित्यभिप्रेत्याह—वस्तुच्छायेति । छाया वस्तुपरमार्था 'नाक्रमेत्कामतश्छायां गुर्वादे'रिति स्मृतेरिति योजना । तथाच याज्ञवल्क्यः-'देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियः । नाक्रमेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनादिक'मिति । न केवलं स्मृतिवचनादेव छायाया वस्तुत्वावगमोऽस्त्यन्यच्च कारणं माधुर्यादिच्छायामासीनस्य मुखे माधुर्योपलब्धेः शैत्योपलब्धेश्चेत्यर्थः ॥ ३४ ॥

पुनरेकदेशिमतत्रयमाह—

ज्ञैकदेशो विकारो वा तदाभासाश्रयः परे ।
अहंकर्तैव संसारी स्वतन्त्र इति केचन ॥ ३५ ॥

ज्ञैकदेश इति ॥ ज्ञस्य चित्सदानन्दपरमात्मन एकदेशः संसारी 'ममैवांशो जीवलोके जीवभूतः सनातन' इति स्मृतिरित्येके । अग्निविस्फुलिङ्गदृष्टान्तेन 'सर्वे एत आत्मनो व्युचरन्ती'ति श्रुतेः परमात्मनो विकारः संसारीत्यपरे । परे तु तदाभासाश्रयश्चिदात्माभासविशिष्टोऽहंकार एव संसारी 'तन्मनो दिशंदिशं पतित्वे'तिश्रुतेरित्याहुरित्यर्थः । भाट्टादिमतमाह—अहंकर्तैवेति । स्वतन्त्रो न परमात्मांशादिरूप इत्यर्थः ॥ ३५ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बौद्धमतमाह—

अहंकारादिसंतानः संसारी नान्वयी क्वचित्।
इत्येवं सौगता आहुस्तत्र न्यायो विचार्यताम् ॥ ३६॥

अहंकारादीति ॥ संतानो विरलोदयतया विच्छिन्नानि क्षणिक न्येवात्मा संसारी न ततः पृथगन्वय्येको विज्ञानोत्पत्तिविनाशद्रष्टे सौगता आहुरित्यर्थः। एवमुक्तेषु पक्षेषु वस्तुविपयत्वाद्विरोधाच्च वि समुच्चययोरसंभवादन्यतमस्यैव कस्यचिदुपादेयत्वमथवासदुक्तस्य प्र च्ययाहंकारादिगताभासाविवेकात्संसारीत्येतस्येति निर्धारणे न्यायो वि मित्याह—तत्रेति ॥ ३६ ॥

प्रासङ्गिकीं संसारिचिन्तां हित्वा प्रकृतमाभासनिरूपणं प्रतिजानीते—

संसारिणां कथा त्वास्तां प्रकृतं त्वधुनोच्यते।
मुखाभासो य आदर्शे धर्मो नान्यतरस्य सः।
द्वयोरेकस्य चेद्धर्मो वियुक्तेऽन्यतरे भवेत् ॥ ३७॥

संसारिणामिति ॥ स्पष्टम्। प्रकृतमाभासमेव निरूपयन्नाभ भासं दृष्टान्तत्वेनापरमार्थमुक्तं विशदयति—मुखाभास इति। योऽ मुखाभासो दृश्यते स किं मुखादर्शयोरन्यतरस्य यस्यकस्यचिद्धर्मः मुखस्यैव धर्मः, अथवा द्वयोरपि धर्मो वस्त्वन्तरं किंचिदिति वि निराकरोति—धर्मो नान्यतरस्य स इति। एतदेव स्पष्टयति—द्व एकस्यान्यतरस्य चेदाभासो धर्मः स्यात्तदा वियुक्तेऽन्यतरे सति युक्ते मुखे तद्गतरूपादिवद्दर्शनगोचरो भवेत्। मुखवियुक्ते वा दर्पणे भवेन्नचैवमस्त्यतो नान्यतरस्य धर्म इत्यर्थः॥ ३७ ॥

कल्पान्तरमुत्थापयति—

मुखेन व्यपदेशात्स मुखस्यैवेति चेन्मतम्।
नादर्शानुविधानाच्च मुखे सत्यविभावतः ॥ ३८॥

मुखेनेति ॥ दूषयति—नेति। यद्यपि मुखाभास इति मुखेन दृश्यते तथापि न मुखधर्म आभासः आदर्शानुविधानात्, मुखैकधर्मो

-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

योगात्, किंच सत्यपि मुखे दर्पणवियुक्तेऽविभावतोदर्शनादित्यर्थः ॥ ३८ ॥

तृतीयं कल्पमनूद्य प्रत्याह—

द्वयोरेवेति चेत्तन्न द्वयोरेवाप्यदर्शनात् ।
अदृश्यस्य सतो दृष्टिः स्याद्राहोश्चन्द्रसूर्ययोः ॥ ३९ ॥

द्वयोरेवेति चेदिति ॥ द्वयोरप्यदर्शनादेवेति संबन्धः । नहि मुखाद-र्शयोर्वियुक्तयोराभासो दृश्यते नापि संयुक्तयोरयं धर्मो यथाकथंचन संयु-क्तयोरपि तद्दर्शनप्रसङ्गान्न तथा दृश्यते तस्मान्न द्वयोर्धर्म इत्यर्थः । तर्हस्तु परमार्थवस्त्वन्तरमेवाभास इति चतुर्थं पक्षं दृष्टान्तेन शङ्कते—अदृश्य-स्येति । सतो विद्यमानस्यैव सर्वैः करणैरदृश्यस्य राहोश्चन्द्रे सूर्ये चोपाधौ कदाचिद्दृष्टिर्दर्शनं यथा, तथा मुखाभासस्यापि वस्तुभूतस्य सतो मुखसन्नु-स्यवद्दर्पणोपाधौ दर्शनं स्यादित्यर्थः ॥ ३९ ॥

वैधर्म्येण दूषयति—

राहोः प्रागेव वस्तुत्वं सिद्धं शास्त्रप्रमाणतः ।
छायापक्षे त्ववस्तुत्वं तस्य स्यात्पूर्वयुक्तितः ॥ ४० ॥

राहोरिति ॥ चन्द्राद्युपरागात्प्रागेव ज्योतिःशास्त्रप्रमाणतः पुराणादि-शास्त्रप्रमाणतो वा राहोः सैंहिकेयस्य वस्तुत्वं सिद्धं निश्चितं नेह तथा मुखदर्पणयोः संबन्धात्पूर्वमूर्ध्वं वा निश्चायकं प्रमाणमस्तीति शेषः । नहि मुखदर्पणयोः संबन्धात्पूर्वमूर्ध्वं वा निश्चायकं प्रमाणमस्तीति शेषः । व्यतिरिक्तवस्तुता मुखाभासस्य केनचित्प्रमाणेन क्वापि संभावितेत्यर्थः । राहोर्वस्तुत्वमङ्गीकृत्य दार्ष्टान्तिकाननुगुणत्वमुक्तम् । इदानीं तस्यापि नास्ति वस्तुत्वमित्याभासस्य वस्तुत्वेनायं दृष्टान्त इत्याह—छायापक्षे त्विति । भूम्या-दिच्छाया राहुरिति केषांचित्पक्षः तस्मिन् छायापक्षे तु तस्य राहोरवस्तुत्वं स्यात् 'मुखाभासो य आदर्श' इत्यादौ पूर्वोक्तयुक्तितो युक्तिसंचारादित्यर्थः ४०

वस्तुच्छाया स्मृतेरित्यत्र छायाया वस्तुत्वे स्मृतिः प्रमाणमित्युक्तं तत्राह—

छायाक्रान्तेर्निषेधोऽयं नतु वस्तुत्वसाधकः ।
नह्यर्थान्तरनिष्ठं सद्वाक्यमर्थान्तरं वदेत् ॥ ४१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

छायाक्रान्तेरिति ॥ नत्वित्यत्र छायाया इति शेषः । ननु छायाल- नप्रतिषेधपरमपि वचनं तस्याः वस्तुत्वमपि बोधयिष्यतीति चेत् तत्र व- व्यं साक्षादेवोतार्थादिति । नाद्य इत्याह—नहीति । एकस्य वाक्यस्योभ- र्थत्वे वाक्यभेदप्रसङ्गादित्यर्थः । न द्वितीयः । निषेधस्य प्राप्तिमात्रसापेक्षत्व- न्निषेधाविषयादेर्वस्तुत्वाभावेऽपि निषेधानुपपत्तिरित्यत्र नियामकाभावादि- द्रष्टव्यम् ॥ ४१ ॥

यदप्युक्तं माधुर्यादिकार्यदर्शनादर्थक्रियाकारित्वेन छायावस्तुत्वमिति त- प्यन्यथासिद्धमित्याह—

माधुर्यादि च यत्कार्यमुष्णद्रव्याद्यसेवनात् ।
छायाया न त्वदृष्टत्वादपामेव च दर्शनात् ॥ ४२ ॥

माधुर्यादीति ॥ छायायामुपविष्टस्य यन्माधुर्यादिकार्यं दृश्यते तदुष्ण- द्रव्याद्यसेवनान्निमित्तात्तु छायाया हेतुभूतायास्तन्माधुर्यादिकार्यं, कुतोऽदृष्ट- त्वात्तातप्यमानशिलाकूटच्छायायां माधुर्यादेरदर्शनादपामेव च दर्शनाद- धर्मस्तास्वेवाव्यभिचारात्, अतः छायायामुपविष्टस्य निवृत्तातपसंसर्ग- स्वाभाविकस्योदकमाधुर्याभिव्यक्तौ छाया मधुरेति विभ्रम इत्यर्थः ॥ ४२ ॥

तदेवं यथामुखं तदाभासस्तदाश्रयश्चेत्येते त्रयो व्यवहारदृष्ट्या विल- अवभासन्ते न परमार्थदृष्ट्या तथात्मा तदाभासस्तदाश्रयश्चेत्यर्थत्रयं वि- विलक्षणं गम्यते व्यवहारदृष्ट्येति दार्ष्टान्तिकमाह—

आत्माभासाश्रयाश्चैवं मुखाभासाश्रया यथा ।
गम्यन्ते शास्त्रयुक्तिभ्यामाभासासत्त्वमेव च ॥ ४३ ॥

आत्माभासाश्रयाश्चैवमिति ॥ आत्मा त्वंपदलक्ष्यश्चिद्धातुस्तस्य- प्यविद्यातत्कार्यप्रतिबिम्बिततया तदुपाधिस्थस्ववैशिष्ट्यं जीवत्वमाभासोऽवि- द्यातत्कार्योपाधिराश्रय इति त्वंपदार्थः । शास्त्रयुक्तिभ्यामिति । 'रूपं रू- प्रतिरूपो बभूव', 'इन्द्रो मायाभिः पुरुरूप ईयते', 'अनीशया शोच- मुह्यमानः' इत्यादिश्रुतेः 'एको वशी सर्वभूतान्तरात्मैकं रूपं बहुधा यः करोति' त्यादिश्रुतेश्च । तथा बुध्यादेर्विषयान्तरस्यागमापायिनो द्रष्ट-

-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

नित्यसिद्धसाक्षादात्मन्यध्यासव्यतिरेकेण स्फुरणसत्तयोरनुपपत्तेरित्यादियुक्तेश्च प्रत्यगात्मन एकस्यैव सत्त्वमाभासादेरसत्त्वं परमार्थसत्त्वाभावश्च गम्यते निश्चीयते इत्यर्थः ॥ ४३ ॥

नन्वेवंसति त्वन्मते संसारमोक्षयोराश्रयाभावादनुपपत्तिरेव नह्यात्मतदाभासतदाश्रयाणामन्यतमस्य मिलितानां वा संसाराद्याश्रयत्वं घटत इति शङ्कते—

**न दृशेरविकारित्वादाभासस्याप्यवस्तुतः ।**
**नाचितित्वादहंकर्तुः कस्य संसारिता भवेत् ॥ ४४ ॥**

न दृशेरिति ॥ संसारो नाम ज्ञातृत्वकर्तृत्वभोक्तृत्वादिलक्षणो विकाररूप उपचयस्तदात्यन्तिकापचयश्च मोक्षः, तथाच ताभ्यां क्रमेण संबध्यमानो विकारी स्यात्तत्र दृशेश्चैतन्यैकरसस्यापि न संसारिता भवेदिति संबन्धः ॥ तत्र हेतुरविकारित्वादिति । कूटस्थत्वादित्यर्थः । तथाऽऽभासस्यापि न संसारिता भवेदिति पूर्वनकारमादायान्वयः । तत्र हेतुरवस्तुत इति । पूर्वोक्तयुक्त्या तस्यावस्तुत्वनिश्चयादवस्तुनः शून्यस्य न कोऽप्यतिशयसंभव इत्यर्थः । अहंकर्तुरहंकारस्याभासाश्रयत्वेनाभिमतस्याचितित्वाज्जडत्वाच्च संसारिता भवेत् । नहि ज्ञातृत्वसुखदुःखादिभोक्तृत्वस्वरूपस्य संसारस्य जडाश्रयत्वसंभवोऽतस्त्वन्मते कस्य संसारिता भवेन्मोक्षो वेति च योज्यम् । न कस्यापीति यदतोऽनुभवविरोध इत्यभिप्रायः ॥ ४४ ॥

सिद्धान्ती यद्येवमनिरूपिताश्रयौ संसारमोक्षौ तर्हि माभूतां परमार्थः कस्यापीति परिहरति—

**अविद्यामात्र एवातः संसारोऽस्त्वविवेकतः ।**
**कूटस्थेनात्मना नित्यमात्मवानात्मनीव सः ॥ ४५ ॥**

अविद्येति ॥ यत एवमतः संसारोऽविद्यामात्र एव भ्रान्तिमात्र एव रज्जुसर्पवदस्तु । अविवेकत आत्मस्वरूपाविवेकात्संसार आत्मनीवात्मधर्म इवावभासत इति योजना । अवस्तुभूतस्यात्मन्यपरोक्षतया सदिति प्रतिभासे निमित्तमाह—कूटस्थेनेति । तत्राध्यस्तत्वात्तत्सत्तया सत्तावानित्यर्थः । नित्यमित्यन्याधीनात्मवत्तस्तत्राध्यस्ततां सूचयति ॥ ४५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्मसत्तया सत्तावानात्मधर्म इव भासते संसार इत्येतद्दृष्टान्तेन स्पष्टयति—

रज्जुसर्पो यथा रज्ज्वा सात्मकः प्राग्विवेकतः ।
अवस्तुसन्नपि ह्येष कूटस्थेनात्मना तथा ॥ ४६ ॥

रज्जुसर्पो यथेति ॥ स्पष्टार्थः ॥ ४६ ॥

मतान्तरमाश्रित्य कल्पनालाघवेन शङ्कते—

आत्माभासाश्रयश्चात्मा प्रत्ययैः स्वैर्विकारवान् ।
सुखी दुःखी च संसारी नित्य एवेति केचन ॥ ४७ ॥

आत्माभासाश्रय इति ॥ चकार एवकारार्थः । आत्मैवात्माभासाश्रय आत्माभासत्वाभिमतस्य जीवत्वस्याश्रयः, अतः स एव स्वैः स्वधर्मभूतैः प्रत्ययैर्विकारवान्सुखी दुःखी चेत्येवं संसारी भवति, तथापि नित्य एव तरङ्गादिभिर्विक्रियमाणस्यापि समुद्रस्य स्थैर्यदर्शनात्, अत आभासतदाश्रयात्मना भेदकल्पनात्तदविवेककल्पनात्तद्वशाद्वात्मनि संसारकल्पना च गुर्वी, आत्मैव संसारीति कल्पना लघीयसीति केचन मन्यत इत्यर्थः ॥ ४७ ॥

उक्तं पुरस्तादस्माभिः संभाव्यो गोचरे शब्द इत्यत्रात्मनि संसारित्वग्राहकं प्रमाणं नास्तीति तन्न विस्मर्तव्यं त्वयेत्यभिप्रेत्योत्प्रेक्षामात्रमूलैवैषा कल्पना न प्रमाणमूलेति परिहरति—

आत्माभासापरिज्ञानाद्याथात्म्येन विमोहिताः ।
अहंकर्तारमात्मेति मन्यन्ते ते निरागमाः ॥ ४८ ॥

आत्माभासापरिज्ञानादिति ॥ आत्मा परमार्थः कूटस्थनित्यः आभासस्तच्छायारूपोऽन्यत्र संक्रान्तो मिथ्याभूत इत्यात्माभासयोर्याथात्म्येनापरिज्ञानान्मोहिताः सन्तोऽहंकर्तारं साभासान्तःकरणमेवात्मेति ते मन्यन्ते । यतो निरागमाः । आगमरहस्यपरिचयशून्या इत्यर्थः । 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्', 'साक्षी चेता केवलो निर्गुणश्च', 'कृत्स्नः प्रज्ञानघन एव'। 'अत्रायं पुरुषः स्वयंज्योति'रित्यादिनित्यशुद्धत्वादिपरश्रुतिसंदर्भः। तथा 'अनीशया शोचति मुह्यमानः', 'अविद्यायामन्तरे वर्तमानाः', 'अनृतेन

-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

ई प्रत्यूढा' इत्यादिश्रुतिसंदर्भं चात्मन आविद्यकसंसारित्वानुवादपरं ते न पश्यन्ति । अतः स्वोत्प्रेक्षया यत्किंचिदेव वदन्तीत्यभिप्रायः ॥ ४८ ॥

मोक्षोऽप्येषां दुर्लभ इत्याह—

संसारो वस्तुसंस्तेषां कर्तृभोक्तृत्वलक्षणः ।
आत्माभासाश्रयाज्ञानात्संसरन्त्यविवेकतः ॥ ४९ ॥

संसार इति ॥ तेषां मते संसारो वस्तुसन्परमार्थसन्भवेत्, तथा च 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति नियमस्मृतेरविनाशी संसार इति तेषां मते मोक्षासिद्धिरित्यर्थः । यदि मोक्षाप्राप्तिभयात्संसारावस्तुत्वं तेऽपि मन्येरंस्तर्ह्यस्मदुक्तप्रकार एव स इत्यनुजानाति—आत्माभासाश्रयाज्ञानादिति । आत्मादित्रयाणां तत्त्वाज्ञानादविवेकतो भेदाग्रहात्संसरन्तीति योजना ॥ ४९ ॥

परपक्षे हानिं दोषमुक्त्वा स्वपक्षे स्वाभासाभ्युपगमे लाभविशेषमाह—

चैतन्याभासता बुद्धेरात्मनस्तत्स्वरूपता ।
स्याचेत्तं ज्ञानशब्दैश्च वेदः शास्तीति युज्यते ॥ ५० ॥

चैतन्येति ॥ बुद्धेरन्तःकरणस्य चैतन्याभासता आत्मनश्चैतन्यस्वरूपता च चेत्स्यान्नवेत्तदा वेदस्तमात्मानं ज्ञानशब्दैर्ज्ञानसत्यानन्तानन्दात्मादिभिः शब्दैः शास्ति प्रतिपादयतीति युज्यते घटत इत्यक्षरार्थः । अयं भावः—प्रकाशस्वभावं वस्तु यत्र प्रतिबिम्बते तत्र प्रकाशाभासोदयहेतुर्भवति । यथा जले प्रतिबिम्बितः सविता तथा बुद्धौ प्रतिबिम्बितं चैतन्यं तत्र चित्प्रकाशोदयहेतुर्भवति । ततः साभासायां बुद्धौ गृहीतसंबन्धैर्ज्ञानादिशब्दैर्वेद आत्मानं लक्षणया बोधयतीति संगच्छतेऽन्यथा निर्धर्मक आत्मनि शब्दप्रवृत्त्यनुपपत्तेर्वेदान्तवेद्यता तस्य न सिध्येन्मानान्तरं च तत्र न क्रमत इति असिद्धिरेवात्मनः स्यादित्याभासाभ्युपगमः श्रुतिस्मृतिन्यायविद्भिः कर्तव्य इति ॥ ५० ॥

यद्यप्येवमाभासाभ्युपगमे वेदप्रवृत्तिरात्मन्युपपद्यते तथाप्यस्मिन् ज्ञानादिशब्दा न प्रवर्तेरन्निति व्यवहारासिद्धिः प्रसज्येतेति शङ्कते । ननु ज्ञानशब्दो व्युत्पाद्यमान आत्मनि मुख्यां वृत्तिं लभत एव अतः कथं साभा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सद्बुद्धिवाचकः सन् आत्मनि लक्षणया वर्तिष्यत इति कल्पत इति वा शङ्कते—

प्रकृतिप्रत्ययार्थौ यौ भिन्नावेकाश्रयौ यथा ।
करोति गच्छतीत्यादौ दृष्टौ लोकप्रसिद्धितः ॥ ५१ ॥

प्रकृतीति ॥ प्रकृत्यर्थः क्रिया, प्रत्ययार्थः कर्तृत्वं तावुभौ स्वरूपतो भिन्नावेकस्मिन्नाश्रये स्थितौ करोति गच्छतीत्यादौ लोके दृष्टौ यथा तथा लोकप्रसिद्धित एव जानाति करोतीत्यादेरप्यात्मैकाश्रयत्वं युक्तमित्यर्थः ॥ ५१ ॥

यथैकाश्रयत्वमनयोर्दृष्टं तथा भिन्नाश्रयत्वमपि क्वचित् किं न स्यादित्यत आह—

नानयोर्व्याश्रयत्वं च लोके दृष्टं स्मृतौ तथा ।
जानात्यर्थेषु को हेतुर्व्याश्रयत्वे निगद्यताम् ॥ ५२ ॥

नानयोरिति ॥ अनयोः प्रकृतिप्रत्यययोः व्याश्रयत्वं न लोकप्रयोगेषु दृष्टं तथा स्मृतौ व्याकरणरूपायामपि न दृष्टमतो जानात्यर्थेषु व्याश्रयत्वे आत्मा प्रत्ययार्थाश्रयः बुद्धिः प्रकृत्यर्थाश्रया इति व्याश्रयत्वाभ्युपगमे को हेतुः स निगद्यतामित्यर्थः ॥ ५२ ॥

प्रकृतिप्रत्यययोरेकाश्रयत्वमात्रमस्मन्मते न सङ्गच्छत इत्युच्यते किंवा परमार्थतस्तयोरेकाश्रयत्वं, तत्र नाद्य इत्याह सिद्धान्ती—

आत्माभासस्तु तिङ्वाच्यो धात्वर्थश्च धियः क्रिया ।
उभयं चाविवेकेन जानातीत्युच्यते मृषा ॥ ५३ ॥

आत्माभास इति ॥ तुशब्दः शङ्कानिषेधार्थः । आत्माभासो बुद्धिगतस्तिङ्वाच्यः प्रत्ययवाच्यः । धियो बुद्धेः क्रिया वृत्तिरूपा धात्वर्थः प्रकृत्यर्थः । तथाचात्माभासो बुद्धिश्चेत्युभयं चाविवेकेन परमार्थात्माविवेकेन मृषैव जानातीत्युच्यते । तथाचात्माभासव्याप्तक्रियावद्बुद्ध्यैक्याध्यासादात्मा जानातीत्येकाश्रयत्वावभासः प्रकृतिप्रत्यययोरिहापि नानुपपन्न इत्यर्थः ॥५३॥

-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

द्वितीयं प्रत्याह—

**न बुद्धेरवबोधोऽस्ति नात्मनो विद्यते क्रिया ।**
**अतो नान्यतरस्यापि जानातीति च युज्यते ॥ ५४ ॥**

न बुद्धेरिति ॥ सम्यग्विचार्यमाणे क्रियावत्या बुद्धेरवबोधश्चित्प्रकाशो नास्ति नाप्यात्मनोऽवबोधस्वभावस्य क्रिया विद्यते अतो नान्यतरस्यापि जानात्यवगच्छतीति निर्देशो युज्यते। तथाच प्रतीतिमात्रशरणैरारोपिततदैक्य-विषयत्वं जानात्यादेराश्रयणीयमिति न लोकव्यवहारविरोधः स्मृतिविरोधो वा भवतीत्यर्थः ॥ ५४ ॥

यथा जानातीति ज्ञ इति कर्तृव्युत्पत्त्या बुद्ध्यात्मनोरेकैकस्मिन् जानात्य-र्थानुपपत्तिर्नापि मीलितयोस्तदुपपत्तिः, परमार्थतो जडाजडयोरैक्यायो-गात् । नान्यतरसंधिनिमित्तान्यतरस्मिन्नुभयाश्रयतेति घटते, अध्यासव्यतिरे-केण संनिधेरनिरूपणात् तथा ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्यापि ज्ञानशब्दप्र-योग आत्मनि न घटत इत्याह—

**नाप्यतो भावशब्देन ज्ञप्तिरित्यपि युज्यते ।**
**न ह्यात्मा विक्रियामात्रो नित्य आत्मेति शासनात् ॥ ५५ ॥**

नाप्यत इति ॥ भावशब्देन धात्वर्थसामान्यवचनेन ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्यापि ज्ञानशब्दप्रयोग आत्मनि न युज्यतेऽत इत्युक्तं हेतुं व्यनक्ति—न हीति । विक्रियामात्रत्वे पारतन्त्र्येणात्मनोऽनित्यत्वप्रसङ्गस्तच्चानिष्टं नित्य आत्मेति श्रुतिशासनादित्यर्थः ॥ ५५ ॥

यथा जानातीति ज्ञ इति कर्तृव्युत्पत्त्या ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्या चात्मनि ज्ञानशब्दानुपपत्तिस्तथा ज्ञायतेऽनेनेति करणव्युत्पत्त्या ज्ञायत इति ज्ञानमिति कर्मव्युत्पत्त्या चात्मनि ज्ञानशब्दप्रवृत्तिर्न युज्यत इत्याह—

**न बुद्धेर्बुद्धिवाच्यत्वं करणं न ह्यकर्तृकम् ।**
**नापि ज्ञायत इत्येवं कर्मशब्दैर्निरूप्यते ॥ ५६ ॥**

न बुद्धेरिति ॥ बुध्यतेऽनयेति बुद्धिरिति व्युत्पत्त्या बुद्धिशब्दवाच्यत्वं बुद्धेरन्तःकरणस्य स्यान्नात्मन इति योजना । तत्र हेतुः करणमिति । करण-व्युत्पत्तिपक्षे बुद्धिशब्दवाच्यस्यात्मनः करणत्वापत्तौ कर्त्रन्तराभावादकर्तृकं

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करणं स्यात् नहि करणमकर्तृकं क्वचिद्दृष्टमित्यर्थः । तथा ज्ञायते इति ज्ञानमिति कर्मशब्दैरप्यात्मा न निरूप्यते न सम्यगुच्यते स्वस्य स्ववेद्यत्वानुपपत्तेर्ज्ञात्रन्तरस्याभावाच्च न कर्मव्युत्पत्तिरपीहेत्यर्थः । ज्ञायतेऽस्मिन्निति ज्ञानमिति व्युत्पत्त्यन्तरमस्तीतिचेत्तत्र वक्तव्यं ज्ञेयाधारत्वमात्रं ज्ञानशब्देनेहोच्यते ज्ञातृत्वे सति ज्ञेयाधारत्वं वा । नाद्यः । ज्ञेयघटाद्याधारभूतलादेरपि व्युत्पत्तियोगाज्ज्ञानशब्दाभिधेयत्वप्रसङ्गात् । न द्वितीयः । आत्मनो ज्ञातृत्वस्य निराकृतत्वादित्ययं पक्षोऽतिस्थूल इत्याचार्यैरुपेक्षित इति द्रष्टव्यम् ॥५६॥

एवं मुख्यया वृत्त्या ज्ञानादिशब्दवाच्यत्वमात्मनो नोपपद्यत इति प्रतिपादिते तथाप्येतत्तुल्यमित्याशङ्क्येष्टापत्त्या परिहरति—

न येषामेक एवात्मा निर्दुःखोऽविक्रियः सदा ।
तेषां स्याच्छब्दवाच्यत्वं ज्ञेयत्वं चात्मनः सदा ॥ ५७ ॥

न येषामिति ॥ येषां मते एक एवात्मा सदा निर्दुःखादिलक्षणोऽभ्युपगतस्तेषामात्मनः सदा शब्दवाच्यत्वं ज्ञेयत्वं च न स्यात्परमार्थत इति योजना । यद्वात्मनि मुख्यशब्दप्रवृत्त्यभावमुक्तं व्यतिरेकमुखेनोपपादयति—न येषामिति । येषां मते एकएव यथानिर्दिष्ट आत्मा न भवति तेषां शब्दवाच्यत्वं ज्ञेयत्वं चात्मनः सदा स्यादस्त्विति योजना । तत्र कर्त्रादिव्युत्पत्तेः संभवात्, नत्वेकात्मवादे श्रौते तत्संभव इत्यर्थादिसिद्धमित्यर्थः ॥५७॥

तर्हास्तु शब्दार्थमुख्यत्वाय सविकार एवात्मेति शङ्कते—

यदाहंकर्तुरात्मत्वं तदा शब्दार्थमुख्यता ।
नाशनायादिमत्त्वात्तु श्रुतौ तस्यात्मतेष्यते ॥ ५८ ॥

यदेति ॥ अहं कर्तेत्याद्यभिमन्यमानाकारस्यात्मत्वमेव नास्तीति परिहरति—नेति । 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै तमात्मानं विदित्वे'ति श्रुतावात्मनोऽशनायाद्यतीतत्वस्याभाव्यावगमादशनायादिधर्मवत्त्वादहंकर्तुस्तस्यात्मता नेष्यत इति योजना । अतो ज्ञानादिशब्दा आत्मनि न साक्षात्प्रवर्तन्त इत्याभासद्वारत्वात्तदुक्ता तेषां सिद्धेति भावः ॥५८॥

नन्वेवमुक्तरीत्या यदि ज्ञानात्यादेरात्मन्यन्यत्र च मुख्यता न संभवेत्तर्हि

-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

इत्यन्तरेणाप्यात्मनि प्रवृत्तिरनुपपन्ना नहि क्काप्यमुख्यं क्कचिदुपचर्यत इति संभवतीति शङ्कते—

हन्त तर्हि न मुख्यार्थो नापि गौणः कथंचन ।
जानातीत्यादिशब्दस्य गतिर्वाच्या तथापि तु ॥ ५९ ॥

हन्त तर्हीति चतुर्भिः ॥ स्पष्टम् ॥ ५९ ॥
मास्तु मुख्याभावाद्गौणोऽपि तथापि किमिति गतिर्वाच्येति चेत्तत्राह—

शब्दानामयथार्थत्वे वेदस्याप्यप्रमाणता ।
सा च नेष्टा ततो ग्राह्या गतिरस्य प्रसिद्धितः ॥ ६० ॥

शब्दानामिति ॥ न केवलं लौकिकशब्दानामेव जानात्यादीनामप्रमाणता किंतु वेदस्यापीत्यपिशब्दयोजना । लोकसिद्धव्युत्पत्त्यपेक्षत्वाद्वेदबोधकत्वस्येत्यभिप्रायः । सा वेदस्याप्रमाणता नेष्टा । चकाराद्वेदस्यैवात्मनि प्रमाणतेष्टेति समुच्चीयते । अतो वेदप्रामाण्याङ्गीकारलोभादेव गतिर्वाच्येत्यर्थः । तर्हि प्रसिद्धैव गतिः किमिह वक्तव्यमिति सिद्धान्तिनः शङ्कां गृह्णाति—ततो ग्राह्येति । प्रसिद्धित इति चेदिति शेषः ॥ ६० ॥
तत्र वक्तव्यं प्राकृतजनप्रसिध्या गतिराश्रीयते पाणिन्याद्यभियुक्तप्रसिध्या वा । तत्राद्यमनूद्य दूषयति—

प्रसिद्धिर्मूढलोकस्य यदि ग्राह्या निरात्मता ।
लोकायतिकसिद्धान्तः सा चानिष्टा प्रसज्यते ॥ ६१ ॥

प्रसिद्धिर्मूढलोकस्येति ॥ प्राकृतप्रसिध्यभ्युपगमे देहात्मप्रसिद्धेरप्यभ्युपगमान्निरात्मवादाद्यापत्तिरनिष्टा प्रसज्येतेत्यर्थः ॥ ६१ ॥
द्वितीयमनूद्य प्रत्याह—

अभियुक्तप्रसिद्धिश्चेत्पूर्ववद्दुर्विवेकता ।
गतिशून्यं न वेदोऽयं प्रमाणं संवदत्युत ॥ ६२ ॥

अभियुक्तेति ॥ पूर्ववदिति बुद्धेरात्मनो वा ज्ञातृत्वं दुर्निरूपमिति प्रागुक्तदोषप्रसङ्ग इत्यर्थः । यद्येवं तर्ह्यात्मनो गतिशून्यमिव ज्ञातृत्वं वेदोऽनुवदिष्यतीति तत्राह—गतीति । प्रमाणमिति हेतुगर्भं वेदविशेषणम् ॥ ६२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चिदात्मन्येवौपाधिको ज्ञानात्यादिशब्दप्रयोगः संभवतीत्यभिप्रेत्य सिद्धान्ती दृष्टान्तमाह—

आदर्शे मुखसामान्यं मुखस्येष्टं हि मानवैः ।
मुखस्य प्रतिबिम्बो हि मुखाकारेण दृश्यते ॥ ६३ ॥

आदर्श इति ॥ आदर्शे दृश्यमानं यन्मुखं तेन सामान्यं समानत्वमेकत्वं मुखस्यादर्शाद्बहिःस्थितो मानवैरिष्टं हि प्रसिद्धमित्यक्षरार्थः। आदर्शे मुखव्यक्त्यन्तरोत्पादानुपपत्तिसहकृततया मदीयं मुखमिति प्रत्यभिज्ञया बिम्बप्रतिबिम्बभावेनोपाधितो भेदावभासेऽपि मुखैक्यं मानवैरिष्यत एवेत्युक्तं भवति । उक्तमेवैकत्वं स्फुटयति—मुखस्येति ॥ ६३ ॥

यथा कल्पितमुखस्य परमार्थमुखस्य चान्योन्याविवेकान्मलिनं मुखमल्पं वक्रमित्यादिव्यपदेश उपाधिनिबन्धनस्तथात्मन्यपि ज्ञातृत्वादिव्यपदेश उपाधिनिबन्धन इत्युपपन्नमिति दार्ष्टान्तिकमाह—

यत्र यस्यावभासस्तु तयोरेवाविवेकतः ।
जानातीति क्रियां सर्वो लोको वक्ति स्वभावतः ॥ ६४ ॥

यत्रेति ॥ अवभास आभासः, प्रतिबिम्बभाव इति यावत् ॥ ६४ ॥

यच्छब्दाभ्यामुक्तमर्थं स्पष्टयति—

बुद्धेः कर्तृत्वमध्यस्य जानातीति ज्ञ उच्यते ।
तथा चैतन्यमध्यस्य ज्ञत्वं बुद्धेरिहोच्यते ॥ ६५ ॥

बुद्धेरिति ॥ बुद्ध्यात्मनोस्तादात्म्याध्यासे सत्यन्योन्यधर्मसंकरादात्मा जानात्यहं जानामीति च व्यपदेशो भवतीति समुदायार्थः ॥ ६५ ॥

ननु बुद्ध्यादिभिरात्मनि ज्ञानमुत्पद्यते ततः कथमिदमुच्यते आत्मचैतन्यं बुद्धावध्यस्तत इति तत्राह—

स्वरूपं चात्मनो ज्ञानं नित्यं ज्योतिःश्रुतेर्यतः ।
न बुद्ध्या क्रियते तस्मान्नात्मनान्येन वा सदा ॥ ६६ ॥

स्वरूपं चेति ॥ ज्ञानमात्मनः स्वरूपं 'तद्देवा ज्योतिषां ज्योतिरायु-

-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

शस्य ज्योतिः', 'अत्रायं पुरुषः स्वयंज्योतिः', 'साक्षी चेते' इत्यादिश्रुतेः। अतश्च नित्यमेव यत्तस्मान्न बुद्ध्या ज्ञानं क्रियते आत्मना वान्येन वा चक्षुरादिना ज्ञानं सदा कदापि न क्रियत इत्यर्थः ॥ ६६ ॥

बुद्ध्यात्मनोरन्योन्यधर्माध्यासेनैव व्यवहार इत्युक्तेऽर्थे दृष्टान्तमाह—

देहेऽहंप्रत्ययो यद्वज्जानातीति च लौकिकाः ।
वदन्ति ज्ञानकर्तृत्वं तद्वद्बुद्धेस्तथात्मनः ॥ ६७ ॥

देह इति ॥ रूपादिमत्त्वेन घटादिवदहंप्रत्ययायोग्येऽपि देहे चेतनामध्यस्य यथाहं मनुष्यः कृशः स्थूल इत्यादिप्रत्ययो दृश्यते तथा बुद्धेर्जडत्वेन ज्ञातृत्वायोग्यत्वेऽपि चिदाभासव्याप्त्या ज्ञातृत्वमारोप्य जानामीति लौकिका वदन्ति व्यवहरन्ति। दार्ष्टान्तिकमाह—तथात्मन इति । विकाररहितस्यात्मनो विकारित्वितो विवेकाद्विकारित्वादिव्यपदेशसिद्धिरित्यर्थः । यद्वा स्थूलदेहे यद्वदहंप्रत्ययो मनुष्योऽहमित्येवमादिरहंप्रत्ययायोग्येऽपि व्यवह्रियते सर्वैः । लौकिकाश्च शास्त्रसंस्काररहिताः देवदत्तो जानाति मनुत इति च देहस्यैव ज्ञातृत्वं वदन्ति तद्वद्बुद्धेर्ज्ञानकर्तृत्वं तथाऽऽत्मनो ज्ञानाश्रयत्वं विकारित्वं च व्यवहारास्पदं भवतीत्यर्थः ॥ ६७ ॥

ननु तार्किका ज्ञानस्योत्पत्तिविनाशौ पश्यन्तो ज्ञानमात्मना क्रियत इत्याहुः तत्कथं नित्यं ज्ञानमात्मस्वरूपमित्युक्तमित्यत आह—

बौद्धैस्तु प्रत्ययैरेवं क्रियमाणैश्च चिन्निभैः ।
मोहिताः क्रियते ज्ञानमित्याहुस्तार्किका जनाः ॥ ६८ ॥

बौद्धैस्त्विति ॥ एवं पूर्वोक्तप्रकारेणात्मबुद्ध्योरन्योन्याध्यासाच्चिन्निभैश्चिच्छायापत्त्या चिदिव भासमानैर्बौद्धैर्बुद्धिप्रभवैः क्रियमाणैः प्रत्ययैर्वृत्तिविशेषैर्मोहितास्तार्किका जना ज्ञानं क्रियते जायते इत्याहुर्वदन्ति तेषां बुद्ध्यात्माविवेक एवापराधो ननु ज्ञानं क्रियते । तथासति प्रत्ययोत्पत्तिविनाशयोरसाक्षिकतयाऽसिद्धिप्रसङ्गादिति भावः ॥ ६८ ॥

यस्मादेवं विचार्यमाणे प्रमाणसिद्धकौटस्थ्यस्यात्मनो न विकारित्वं प्रामाणिकं, यस्माच्च ज्ञानमात्मस्वरूपत्वश्रवणान्नित्यमेवेति न केनापि क्रियते, यस्माच्च बुद्धिसंसर्गं विनात्मनो न ज्ञातृत्वमुपलभ्यते सुषुप्तावदर्शनात्, बुद्धिश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नात्मनः पृथग्ज्ञातृत्वाद्याकारोपलभ्यते तस्मादात्मबुद्धितत्स्थाभासानामविवेकाद्यथाप्रसिद्धमेव व्यावहारिकं बुद्ध्यात्मनोरेकत्वं गृहीत्वा जानात्यादिव्यपदेश उपपद्यते न परमार्थतो मुख्यमन्यदालम्बनमस्तीति प्रकृतमुपसंहरति—

तस्माज्ज्ञाभासबुद्धीनामविवेकात्प्रवर्तिताः ।
जानातीत्यादिशब्दश्च प्रत्ययो या च तत्स्मृतिः ॥ ६९ ॥

तस्मादिति ॥ जानातीत्यादिशब्दश्च, तदनन्तरभावी तद्विषयः प्रत्ययश्च, या च तत्संस्कारजा स्मृतिः सा चेति त्रयोऽर्थाः । ज्ञाभासबुद्धीनामविवेकात्प्रवर्तिता इति योजना ॥ ६९ ॥

ज्ञाभासबुद्धीनामविवेकमूलः सर्वो व्यवहारो न पारमार्थिक इत्युक्तमर्थं दृष्टान्तेन स्पष्टयति—

आदर्शानुविधायित्वं छायाया अस्यते मुखम् ।
बुद्धिधर्मानुकारित्वं ज्ञाभासस्य तथेष्यते ॥ ७० ॥

आदर्शेति ॥ छायाया मुखाभासस्य यदादर्शानुविधायित्वं तन्मुखे अस्यतेऽध्यस्यते यथेति शेषः । तथाध्यस्तस्य चिदाभासस्य बुद्धिधर्मानुकारित्वं ज्ञे आत्मनीष्यते । अध्यस्य व्यवह्रियत इत्यर्थः ॥ ७० ॥

यस्मादेवं चिदाभासाविविक्ता बुद्धिस्तस्मात्तत्परिणामेषु ग्राहकत्वप्रतिभाससिद्धिरित्याह—

बुद्धेस्तु प्रत्ययास्तस्मादात्माभासेन दीपिताः ।
ग्राहिका इव भासन्ते दहन्तीवोल्मुकादयः ॥ ७१ ॥

बुद्धेस्त्विति ॥ निगदव्याख्यातं पद्यम् ॥ ७१ ॥

एवमाभासविविक्तपदार्थस्वरूपाज्ञानाद्यथा तार्किकाणां व्यामोहो ज्ञानं क्रियते इति तथा बौद्धानामपि बुद्धिव्यतिरिक्तो ग्राहको नास्तीति व्यामोह एवेत्याह—

स्वयमेवावभास्यन्ते ग्राहकाः स्वयमेव च ।
इत्येवं ग्राहकास्तित्वं प्रतिषिद्ध्यन्ति सौगताः ॥ ७२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वयमेवेति ॥ स्वयमेव च प्रत्यया इति शेषः ॥ ७२ ॥

यद्येवं प्रत्ययानां ग्राहकमन्यं स्थिरमनादृत्य प्रत्ययमेव ग्राह्यग्राहकाकारं बौद्धा मन्यन्ते तर्हि तन्मतस्यानुभवानुसारित्वादाभासानभ्युपगमे कथं ते निराकर्तव्या इत्याशयेन स्वयूथ्यं पृच्छति—

यद्येवं नान्यदृश्यास्ते किं तद्वारणमुच्यताम् ।
भावाभावौ हि तेषां यौ नान्यग्राह्यौ सता यदि ॥ ७३ ॥

यद्येवमिति ॥ ते प्रत्यया नान्यदृश्याः अन्येन साक्षिणा नित्यसिद्धेन न ग्राह्या इति यद्येवं बौद्धा वदन्ति तन्मतवारणं किमस्ति तदुच्यतां इत्युक्ते स्वयूथ्यः प्रत्याह—भावाभावाविति । तेषां प्रत्ययानां यौ भावाभावौ उत्पत्तिविनाशौ सता स्वतःसिद्धेन साक्षिणान्येन ग्राह्यौ यद्यपि तथापि यस्मिन्प्रत्ययानां भावाभावौ सोऽहमिति प्रत्यभिज्ञाबलात्तेषां ग्राहकोऽन्वयी स्थाय्यात्मा सिध्यति किमाभासकल्पनयेति योजना ॥ ७३ ॥

एवं स्वयूथ्येनोक्ते नैतावता बौद्धो वारयितुं शक्यत इति दूषयति—

अन्वयी ग्राहकस्तेषामित्येतदपि तत्समम् ।
अचितित्वस्य तुल्यत्वादन्यस्मिन्ग्राहके सति ॥ ७४ ॥

एतदपीति ॥ एतदपि प्रत्यभिज्ञानसिद्धमपि ग्राहकरूपं तत्समं प्रत्ययसमं जडमेवेत्यत्र हेतुमाह—अचितित्वस्येति । अयमर्थः । प्रत्ययग्राहकः अप्रकाशः स्वप्रकाशो वा । आद्यं प्रत्याह—अचितित्वस्येति । अन्यस्मिन्ग्राहके सति ग्राहककोटिपतितत्वेन जाड्यापरिहारात्स्वयमप्यसिद्धः कथं प्रत्ययानां ग्राहक इत्यर्थः । अथवा अन्यस्मिन्ग्राहकेऽसति स्वतःसिद्धे साक्षिण्यविद्यमाने प्रत्यभिज्ञाग्राहकस्याप्यचितित्वस्य तुल्यत्वाद्ग्राहकत्वासिद्धिरित्यर्थः । अविद्यमाने द्वितीये स्वप्रकाशस्य साक्षिणो निर्विकारत्वाभाससिद्धिरिति द्रष्टव्यम् ॥ ७४ ॥

स्वप्रकाशे साक्षिण्यसति प्रत्ययानां भावाभावासिद्धिश्चेत्तर्हि साक्षिसांनिध्यमात्रेणैव तत्सिद्धेः कृतमाभासाभ्युपगमेनेति शङ्कते—

अध्यक्षस्य समीपे तु सिद्धिः स्यादिति चेन्मतम् ।
नाध्यक्षेऽनुपकारित्वादन्यत्रापि प्रसङ्गतः ॥ ७५ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अध्यक्षस्येति ॥ तत्र वक्तव्यं किं साक्षिसंधानमात्रं प्रत्ययसिद्धिहेतुः किंवा तत्कृतविशेषयोगोऽपीति तत्र द्वितीयं तावद्दूषयति—नेति । निर्विकारेऽध्यक्षे उपकारित्वानिरूपणादित्यर्थः । पाठान्तरे अध्यक्षे साक्ष्येऽहंकारादावनुपकारित्वादुपकारपदवाच्यातिशयाजनकत्वादित्यर्थः । प्रथमं दूषयति—अन्यत्रापीति । साक्षिणः पूर्णतया सर्वत्र सदा सान्निध्याविशेषात्काष्ठलोष्टादीनामपि सिद्धिप्रसङ्गादित्यर्थः ॥ ७५ ॥

एवमाभासानभ्युपगमे बौद्धादिमतसाम्यदोषपरिहारानुपपत्तिं स्वयूथ्यान्प्रत्युक्त्वा शास्त्रीयो बन्धमोक्षव्यवहारोऽपि तेषां न सिध्यतीति वक्तुं विकल्पयति—

अर्थी दुःखी च यः श्रोता सत्वध्यक्षोऽथवेतरः ।
अध्यक्षस्य च दुःखित्वमर्थित्वं च न ते मतम् ॥ ७६ ॥

अर्थीति ॥ यो दुःखित्वेन मोक्षार्थित्वेन च प्रसिद्धो गुरूपदेशश्रोता स एवाध्यक्षो मतस्ततोऽन्यो वेति विकल्पार्थः । आद्ये निरनुग्रहाध्यक्षवादिनस्तवापसिद्धान्तप्रसङ्ग इति दूषयति—अध्यक्षस्येति । आत्माभासानङ्गीकारवादिनस्ते द्वाराभावादविघातत्कार्यसंबन्धासिद्धेस्तेन च विनार्थित्वाद्यसिद्धेराभासाभ्युपगमप्रसङ्ग इत्यर्थः ॥ ७६ ॥

द्वितीयं दूषयति—

कर्ताध्यक्षः सदसीति नैव सद्ग्रहमर्हति ।
सदेवासीति मिथ्योक्तिः श्रुतेरपि न युज्यते ॥ ७७ ॥

कर्तेति ॥ श्रोतुरर्थिनोऽध्यक्षस्य च भेदपक्षे कर्ता कर्तृत्वादिधर्मको विकारी श्रोता जडवर्गपतितत्वात्सदहमध्यक्षोऽस्मीति सद्ग्रहं सदादिशब्दनिर्दिष्टवस्त्वात्मग्रहं नार्हति विरोधादित्यर्थः । यद्वा सदध्यक्षो निर्विकार आत्माहमसीति सद्ग्रहं यथार्थबोधं नार्हति न लभत इत्यर्थः । श्रुतिबाधप्रसङ्गाच्चायं पक्षो न युक्त इत्याह—सदेवेति ॥ ७७ ॥

चिदाभासानभ्युपगमपक्षे बन्धमोक्षानुपपत्तिमुपपाद्य स्वपक्षे तदुपपत्तिमाह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

अविविच्योभयं वक्ति श्रुतिश्चेत्स्याद्ग्रहस्तथा ।
असदस्तु विविच्यैव त्वमेवेति वदेद्यदि ।
प्रत्ययान्वयिनिष्ठत्वमुक्तदोषः प्रसज्यते ॥ ७८ ॥

अविविच्येति ॥ उभयमात्मानमहंकारं च द्वयमाभासद्वारेण विवेकाभावमविविच्य विविक्तमकृत्वा यथाप्राप्तमर्थित्वाद्युपादाय श्रोतृत्वेन स्थितं प्रति 'तत्त्वमसी'ति श्रुतिर्वक्त्यात्मतत्त्वमिति चेत्पक्षस्तदा तथा यथाश्रुत्युक्तस्य बोधो ग्रहणं स्यादिति योजना । अयमभिप्रायः—अन्तःकरणादौ चिदाभासान्वयेऽपि सति तद्गतविकाराध्यासादविविक्ताहंकार आत्मार्थित्वादिसंपन्नो मुमुक्षुतां प्रतिपद्यते । तं तथैवाविवेकावस्थं त्वमित्यनूद्याभासद्वारा साभासान्तःकरणसाक्षितया लक्षयित्वा तेजोयन्नादिजगत्कारणत्वेनोपलक्षितं सच्छब्दवाच्यं ब्रह्म तदित्यनूद्य जीवेनात्मना नामरूपसंघातानुप्रविष्टत्वेनापरोक्षप्रक्रियया लक्षयित्वा त्वं तदसीति श्रुतिरुपदिशत्यात्मतत्त्वमिति तया ग्रहणमुपपद्यत इति । अहंकार एव श्रोता स्यात्किमात्माभासाभ्युगमेनेति सांख्यमतमनूद्य दूषयति—असदस्त्विति । प्रत्ययान्वय्यहंकारः यदि वाक्यमसदः प्रत्यक्चैतन्यादहंकारं विविच्यैव त्वमेवेति प्रत्ययान्वयिनिष्ठत्वं वदेत्तदोक्तो दोषः श्रुतेर्मिथ्योक्तित्वप्रसङ्गरूपः प्रसज्यत इत्यर्थः ॥ ७८ ॥

तर्ह्यहंकर्तृविषयोऽप्युपदेशोऽध्यक्षे पर्यवस्यतीत्याशङ्क्याभासानभ्युपगमे तदपि दुर्घटमित्याह—

त्वमित्यध्यक्षनिष्ठश्चेदहमध्यक्षयोः कथम् ।
संबन्धो वाच्य एवात्र येन त्वमिति लक्षयेत् ॥ ७९ ॥

त्वमिति ॥ पदं अहंकारवाचि सदध्यक्षं बोधयति चेदहंकाराध्यक्षयोः संबन्धग्रहमन्तरेण वाक्यार्थबोधानुपपत्तेरहमध्यक्षयोः संबन्धोऽत्र वाच्य स कथमुपपद्यते येन संबन्धेन त्वमिति पदमध्यक्षं लक्षयेदित्यर्थः ॥७९॥

अस्ति संबन्ध इहेत्याशङ्क्य परिहरति—

द्रष्टृदृश्यत्वसंबन्धो यद्यध्यक्षे क्रियेत्कथम् ॥ ८० ॥

द्रष्टृदृश्यत्वेति ॥ यदि द्रष्टृदृश्यत्वसंबन्धोऽभ्युपगम्यते तदापि संबन्ध-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहणमनुपपन्नम् । अहंकारस्य जडत्वात्संबन्धग्रहणायोगादध्यक्षस्य तद्ग्रहणमिति वक्तव्यम् । अक्रिये निर्विकारेऽध्यक्षे कथं संबन्धग्रहणकर्तृत्वमित्यर्थः ८०

मास्तु संबन्धग्रहणं तथापि तादात्म्योपदेशो भविष्यतीति शङ्कामनूद्य दृष्टविरोधान्नैवमिति परिहरति—

अक्रियत्वेऽपि तादात्म्यमध्यक्षस्य भवेद्यदि ।
आत्माध्यक्षे ममास्तीति संबन्धाग्रहणे न धीः ॥ ८१ ॥

अक्रियत्वेऽपीति ॥ यथा लोके घटस्य शौक्ल्यमिति घटशौक्ल्ययोः संबन्धाग्रहणे शुक्लो घट इति वाक्यतादात्म्यधीर्नोदेति तथा ममात्माध्यक्षोऽस्तीति संबन्धाग्रहणे सति न तादात्म्यधीः श्रुतितो जायेतेत्यर्थः ॥ ८१ ॥

'एष म आत्मान्तर्हृदये अणीयान् एष म आत्मान्तर्हृदये एतद्ब्रह्मेति' शास्त्रादस्त्यहंकाराध्यक्षयोः संबन्धग्रह इति शङ्कामुत्थाप्य निराकरोति—

संबन्धग्रहणं शास्त्रादिति चेन्मन्यसे नहि ।
पूर्वोक्ताः स्युस्त्रिधा दोषा ग्रहो वा स्यान्ममेति च ॥ ८२ ॥

संबन्धग्रहणमिति ॥ नहीत्युक्तं व्यनक्ति—पूर्वोक्ता इति । अहंकारस्य जडत्वात्संबन्धग्रहीतृत्वं न घटते, नाप्यध्यक्षस्य निर्विकारत्वादिति द्वौ दोषौ, जडंप्रति श्रुतेर्बोधकत्वासंभवस्तृतीयो दोष इति त्रिधा दोषाः स्युः, यदि कथंचित्संबन्धग्रहणं कल्प्येत तदापि ममाध्यक्षोऽस्तीति संबन्धग्रहणं स्यात् त्वहमेवाध्यक्षोऽस्मीति तादात्म्याध्यासानङ्गीकाराच्चकारान्ममाध्यक्षोऽस्तीत्यपि न घटतेऽहंकारस्य जडत्वादित्यभ्युच्चयः ॥ ८२ ॥

एवमात्मानात्मनोः परपक्षे संबन्धासिद्धिमुक्त्वा स्वपक्षे मिथ्यातादात्म्यसंबन्ध इति दर्शयति—

अदृशिर्दृशिरूपेण भाति बुद्धिर्यदा तदा ।
प्रत्यया अपि तस्याः स्युस्तप्तायोविस्फुलिङ्गवत् ॥ ८३ ॥

अदृशिरिति ॥ यदाऽदृशिरचेतना बुद्धिर्दृशिरूपेण सदा भातीत्यभ्युपगम्यते तदा तस्या बुद्धेः प्रत्यया वृत्तयोऽपि तप्तायोविस्फुलिङ्गानामग्न्यात्मवद्दृशिरूपाः स्युरित्यर्थः ॥ ८३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्मिन्पक्षे लौकिकवैदिकव्यवहारसिद्धिरपि सुसंपादेत्याह—

**आभासस्तदभावश्च दृशेः सीम्नो न चान्यथा ।**
**लोकस्य युक्तितः स्यातां तद्ग्रहश्च तथासति ॥ ८४ ॥**

आभास इति ॥ सीम्नोऽवधिभूताया दृशेश्चिदात्मनः सकाशादेव लोक- ाभासस्तदभावश्च प्रत्ययश्च तदभावश्च स्यातां युक्तितो युक्तेरुपपत्तेर्नचा- था । तथासति आभासानभ्युपगमेसति प्रत्ययभावाभावयोः प्रत्ययग्रा- त्वायोगात्ततोऽत्यन्तमेव विविक्तस्य चात्मनस्तद्ग्राहकत्वानुपपत्तेराभासद्वारा संबन्धादात्मनो बुद्धिवृत्तिभावाभावसाक्षित्वमुपपद्यते बुद्धेश्च तद्ग्रह आत्म- ोऽहमस्मीत्युपपन्नः स्यादित्यर्थः ॥ ८४ ॥

तप्तायोविस्फुलिङ्गवदिति दृष्टान्ताभिधानादात्मनो विकारप्राप्तिं शङ्कते—

**नन्वेवं दृशिसंक्रान्तिरयःपिण्डेऽग्निवद्भवेत् ।**
**मुखाभासवदित्येतदादर्शे तन्निराकृतम् ॥ ८५ ॥**

नन्वेवमिति ॥ अयःपिण्डेऽग्निसंक्रान्तिवद् बुद्धौ दृशिसंक्रान्तिर्विकारो ेदित्यर्थः । परिहरति—मुखाभासवदिति । तदेतच्चोद्यमादर्शे मुखाभा- वदिति दृष्टान्तेन प्रबन्धेन निराकृतमित्यर्थः । यथा मुखस्यादर्शे प्रतिबि- तस्य तत्स्थत्वेन रूपेण मिथ्यात्वं तथा बुद्धौ प्रतिबिम्बितस्य चिदात्मनो द्धिधर्मत्वेनावभासे मृषेति पूर्वमुक्तं सर्वमिहानुसंधेयमिति भावः ॥ ८५ ॥

तर्हि कथं तप्तायोविस्फुलिङ्गदृष्टान्त उक्तस्तत्र विकारप्रसिद्धेर्दार्ष्टान्तिकान- ुरूपत्वादित्याशङ्क्य विवक्षितांशस्येहापि संभवान्नैवमित्याह—

**कृष्णायोलोहिताभासमित्येतद्दृष्टमुच्यते ।**
**दृष्टदार्ष्टान्ततुल्यत्वं न तु सर्वात्मना क्वचित् ॥ ८६ ॥**

कृष्णवर्णमयो लोहिताभासं लोहितवर्णमवभास इत्येतदेतावदेव दृष्टं न्त उच्यते । जडाया बुद्धेः चैतन्याभासत्वमित्यर्थः । सर्वांशसाम्य- मनुपपन्नमित्याह—दृष्टदार्ष्टान्तेति । अप्रकाशायात्मनो मुखादेश्चन्द्रादिदृष्टा- ोभावमसङ्गादिति भावः ॥ ८६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

दृष्टान्ते विवक्षितमंशमुक्त्वा दार्ष्टान्तिकेऽपि तथाविधमंशं दर्शयति—

तथैव चेतनाभासं चित्तं चैतन्यवद्भवेत् ।
मुखाभासो यथादर्शे आभासश्चोदितो मृषा ॥ ८७ ॥

तथैवेति ॥ चेतनाया आभासो यस्मिंस्तच्चेतनाभासं चित्तं चैतन्यवच्चेतनमिव भवेत्स चाभासो यथादर्शे मुखाभासोऽविकृत एवमेवेहापि द्रष्टव्यः। आभासश्चोपाधिस्थतया दृश्यमानो मृषा मिथ्येत्युदितः । उक्त एवेत्यर्थः ॥८७॥

कस्माचिदाभासव्याहत्या चित्तस्य चेतनतावभासोऽभ्युपगम्यते न त्वत इति शङ्का न कार्या, तत्र प्रमाणन्याययोरभावादित्याह—

चित्तं चेतनमित्येतच्छास्त्रयुक्तिविवर्जितम् ।
देहस्यापि प्रसङ्गः स्याच्चक्षुरादेस्तथैव च ॥ ८८ ॥

चित्तमिति ॥ उत्पत्तिविनाशवत्तयान्यदृश्यस्यापि चित्तस्य चेच्चेतनतास्वभावः स्यात्तदातिप्रसङ्गश्च दुष्परिहर इत्याह—देहस्येति ॥ ८८ ॥

इष्टापत्तिमाशङ्क्य परिहरति—

तदप्यस्त्विति चेत्तन्न लोकायतिकसंगतेः ।
न च धीर्दशिरसीति यद्याभासो न चेतसि ॥ ८९ ॥

तदपीति ॥ अवैदिकत्वप्रसङ्गादित्यर्थः । किंचाभासानभ्युपगमे द्वाराभावादहं ब्रह्मास्मीति आगन्तुकं वाक्यजन्यमैक्यज्ञानं न सिद्ध्येदित्याह—न च धीरिति । चेतसि यद्याभासो न भवेत्तदा दृशिर्ब्रह्मास्मीति धीर्न भवेत् । केवलस्य चित्तस्य जडत्वाच्चिन्मात्रस्य च कूटस्थत्वादित्यर्थः ॥ ८९ ॥

ब्रह्मास्मीति धियोऽभावे का क्षतिरित्यत आह—

सदसीति धियोऽभावे व्यर्थं स्यात्तत्त्वमस्यपि ।
युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ॥ ९० ॥

सदसीति ॥ अपिरवधारणार्थः । तत्त्वमसिवाक्यमैक्यग्राहकबुद्धियोऽभावे व्यर्थमेव । अप्रमाणमेव स्यादित्यर्थः । अस्तु वैयर्थ्यं तद्वाक्यश्रोतॄणां सर्वेषां झटिति ब्रह्मास्मीति बुभुत्स्वदर्शनादित्याशङ्क्याह—युष्मदस्मदिति ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

धिकारिणः प्रमितिजनको वेद इति न्यायात्सम्यक्पदार्थविज्ञानवत एव क्यार्थबोधेऽधिकारादात्मानात्मविभागज्ञानवत्येव पुंसीदं वाक्यमर्थवत्त त्तांप्रति झटितीत्यर्थः ॥ ९० ॥

तमेव युष्मदस्मद्विवेकं दर्शयितुमुपक्रमते—

**ममेदंप्रत्ययौ ज्ञेयौ युष्मद्येव न संशयः ।**
**अहमित्यस्मदीष्टः स्यादयमस्मीति चोभयोः ॥ ९१ ॥**

ममेदमित्यादिना ॥ इदं पुत्रादि ममेति च प्रत्ययौ युष्मद्यनात्मन्येव यौ पुत्रादिबाह्यार्थस्य देहाध्यासप्रणालिकयैवास्मदर्थे प्रवेशाद्बाह्यार्थसंबन्धो- नात्मधर्म एवेति युक्तमुक्तम् । ममेदमिति प्रत्ययौ युष्मद्येवेति न संशय ति सर्वत्रानुपज्यते । अहमिति प्रत्यय आभासद्वारात्मभूते व्यावहारिकेऽस्म- त्मनि अहंकर्तरीष्टः स्यादहमित्येवोल्लेखदर्शनात् । अयं देहादिरस्मीति भयोरात्मानात्मनोः प्रत्यय इत्यर्थः ॥ ९१ ॥

आत्मानात्मविषयाणां प्रत्ययानां संकीर्णतयाऽसंकीर्णतया च विष- नुक्त्वोक्तविवेकसिद्ध्यर्थं तेषां गुणप्रधानभावेन विशेषणविशेष्यभावो ह्य इत्याह—

**अन्योन्यापेक्षया तेषां प्रधानगुणतेष्यते ।**
**विशेषणविशेष्यत्वं तथा ग्राह्यं हि युक्तितः ॥ ९२ ॥**

अन्योन्येति ॥ स्पष्टम् ॥ ९२ ॥

विशेषणविशेष्यत्वं युक्तितो ग्राह्यमित्युक्तमेव विविच्य दर्शयति—

**ममेदं द्वयमप्येतन्मध्यमस्य विशेषणम् ।**
**धनी गोमान्यथा तद्वद्देहोऽहंकर्तुरेव च ॥ ९३ ॥**

ममेदं द्वयमिति ॥ मध्यमस्य पूर्वश्लोके मध्ये निर्दिष्टस्याऽस्मदर्थस्या- त्मनो विशेषणमिदं ममेति च द्वयं मनुष्योऽहमिति प्रत्ययापेक्षयेत्यर्थः । त्रोदाहरणं धनी गोमान्यथेति । यथा धनादीदंस्वास्पदं सदेहापेक्षया मम- स्पदमहंकर्तुः सिद्धं तद्वत्स्थूलो देहोऽहंकर्तुरात्मनो बाह्यधनाद्यपेक्ष्याहं- स्पदतया विशेषणमेवेत्यर्थः । चकारादात्मनोऽपि सोऽहं ज्ञातेत्याद्युल्लेखे स्थूलदेहमपेक्ष्य प्रधानभूतोऽप्यहंकर्ता विशेषणमिति योज्यम् ॥ ९३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतत्सर्वं यदधीनसत्ताप्रकाशकं तत्रारोपितं सत्तस्य सदा विशेषणं भवेदपि तेन साक्षिणा न संस्पृश्यत इत्यादिषु यो निरपेक्षसिद्धः स शुद्ध आत्मेति युष्मदस्मद्विभागज्ञस्य भवेदेव वाक्याद्वाक्यार्थज्ञानमिति प्रमाणमेव वेदान्तवाक्यमित्यभिप्रेत्योपसंहरति—

बुद्ध्यारूढं सदा सर्वं साहंकर्ता च साक्षिणः ।
तस्मात्सर्वावभासो ज्ञः किंचिदप्यस्पृशन्सदा ॥ ९४ ॥

बुद्ध्यारूढमिति ॥ बुद्ध्यारूढं बुद्धिवृत्तिक्रोडीकृतं सर्वं देहतत्संबन्धि विषयजातं साक्षिणो विशेषणं गुणभूतमिति योजना । न केवलमेतावत्किंच साहंकर्त्रा अहंकर्त्रा साभासमनसा सहितः सूक्ष्मोऽपि संघातः साक्षिणो विशेषणम् । तस्मिन्नध्यस्ततया तदवभासत्वादित्यर्थः । यस्मादेवं परमार्थतः किंचिदप्यस्पृशन् सदा सर्वं साभासद्वारावभासयतीति सर्वावभासस्तस्माज्ज्ञो ज्ञानस्वरूप एव सदात्मेति विवेको युक्त इत्यर्थः ॥ ९४ ॥

एष विवेकिनां मार्गो विपरीतं त्वविवेकिनां क्षेत्रादावप्यात्मनो विशेषणत्वप्रतीतेरित्याह—

प्रतिलोममिदं सर्वं यथोक्तं लोकबुद्धितः ।
अविवेकधियामस्ति नास्ति सर्वं विवेकिनाम् ॥ ९५ ॥

प्रतिलोममिति ॥ बाह्यार्थोपहतचेता लोकस्तस्य बुद्धिर्लोकबुद्धिस्तस्या इति बाह्यार्थसत्त्वप्रधानं लोकबुद्धिमपेक्ष्येति यावत् । तथाच बाह्यार्थं प्रधानीकृत्य यदिदं यथोक्तविशेषणविशेष्यादि सर्वं प्रतिलोममनात्मभूतं तदविवेकधियां विवेकज्ञानशून्यानां दृष्ट्यास्ति वर्तते । विवेकिनां तु दृष्ट्या सर्वमेतद्विशेषणादिकं दृश्यरूपं नास्ति न वर्तते । अतो विवेकिनां बुद्धिमात्मन्यवतारयितुं विशेषणविशेष्यादिप्रबन्धकल्पना यथा प्रतीतिसत्तामादाय क्रियतेऽध्यारोपापवादन्यायेनेति भावः ॥ ९५ ॥

नन्वन्वयव्यतिरेकाभ्यामेव सर्वसंसारविनिर्मुक्तात्मावगमात्किं वाक्येनेत्याशङ्क्याह—

अन्वयव्यतिरेकौ हि पदार्थस्य पदस्य च ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यादेतदहमित्यत्र युक्तिरेवावधारणे ॥ ९६ ॥

अन्वयव्यतिरेकौ हीति ॥ पदार्थस्यान्वयव्यतिरेकौ नाम आत्मपदार्थो द्रष्टा साक्षी न कदापि दृश्यः साक्ष्यो वा भवति, तस्यालुप्तप्रकाशसन्मात्रतया स्वतःसिद्धत्वात्, अतोऽनन्याश्रयत्वान्न कदापि कस्यापि विशेषणमात्मा । तथा यद्दृश्यं साक्ष्यं चाहंकारादि विषयान्तं तदन्याधीनप्रकाशसत्ताकतया-न्याश्रयं सत्सदा विशेषणभावं न व्यभिचरति, तस्मादनागमापायि दृगात्मरूपं सत्यं शुक्त्यादिवत्तद्विपरीतमसत्यं रजतादिवदित्यनृतजडपरिच्छिन्नपराधीन-रागर्थव्यावृत्तः सत्यज्ञानानन्तप्रत्यगानन्दरूप आत्मेति विवेचनम्, पदस्या-न्वयव्यतिरेकौ नाम आत्मा चैतन्यं प्रज्ञानं ब्रह्म सदित्यादिपदानि कर्मत्वाद्यु-पपदविधुराणि केवलस्यैवात्मनः समर्पकाणि न विशेषणतद्विशिष्टविषयाणि, असामर्थ्यात् । कर्ता भोक्ता ज्ञाता द्रष्टा श्रोता वक्ता गन्ता कृशः स्थूल इत्यादीनि तु न केवलपूर्णात्मविषयाणि अन्याधीनक्रियाद्युपरागदशायामेव प्रयुज्यमानत्वादिति विवेचनं, एवं पदस्य पदार्थस्य वाऽन्वयव्यतिरेकाविति स्यादेतदहमित्यत्रासदर्थविषयेऽवधारणे युक्तिरेव स्याद्विवेकावधारणोपाय-मात्रं स्यात्तु वाक्यार्थे पदार्थैक्ये व्यापारोऽस्येत्यर्थः । तस्मादेतावतापि विवेकेन देहादिवैलक्षण्येऽवधारितेऽपि कोऽहं तर्हीति जिज्ञासाया अनुवृत्ते-स्तत्त्वमसीति वाक्यं जिज्ञासितस्वरूपविशेषसमर्पकमवश्यमपेक्षितव्यमेवेति भावः ॥ ९६ ॥

किंचावस्थात्रयं परस्परव्यभिचारि, चैतन्यात्मा तु न कदापि व्यभिचारीति प्रकारान्तरेणात्मानात्मविवेकं दर्शयति—

नाद्राक्षमहमित्यस्मिन्सुपुप्तेऽन्यन्मनागपि ।
न वारयति दृष्टिं स्वां प्रत्ययं तु निषेधति ॥ ९७ ॥

नाद्राक्षमिति ॥ अस्मिन्सुपुप्तेऽत्रात्मनि अत्र स्थाने वा मनागपि ईषद-प्यन्यदात्मस्वरूपातिरिक्तमहं नाद्राक्षं न दृष्टवानस्मीति परामृशन् जनो न स्वां स्वात्मनो दृष्टिं चैतन्यं वारयति, प्रत्ययं तु पुनर्निषेधति, प्रतीयत इति प्रत्यय इति व्युत्पत्त्या प्रमातृप्रमाणप्रमेयादिरूपः सर्व एव विशेषो गृह्यते, तस्मात्परस्परव्यभिचारितया दृष्टनष्टस्वभावाभ्योऽवस्थाभ्यो मिथ्याभूताभ्यो व्यभिचारी चिद्रूपः साक्षी सत्य आत्मेति विवेकः सिध्यतीत्यर्थः ॥ ९७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवमुक्तावन्वयव्यतिरेकौ शास्त्रसंमतौ न स्वबुद्ध्युत्प्रेक्षामात्रकृताविति विश्वासाय शास्त्रमुदाहरति—

स्वयंज्योतिर्न हि द्रष्टुरित्येवं संविदोऽस्तिताम् ।
कौटस्थ्यं च तथा तस्याः प्रत्ययस्य तु लुप्तताम् ।
स्वयमेवाब्रवीच्छास्त्रं प्रत्ययावगती पृथक् ॥ ९८ ॥

स्वयंज्योतिरिति सार्धेन ॥ 'अत्रायं पुरुषः स्वयंज्योतिः', 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्येवमादिशास्त्रं संविदश्चेतनाया अस्तितां सद्भावं तस्याः संविदः कौटस्थ्यं निर्विकारतां च स्वयमेवाब्रवीदिति संबन्धः। तथा प्रत्ययस्य प्रमात्रादिभेदस्य लुप्ततामसत्तां च 'नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त'मित्यादिशास्त्रं स्वयमेवाब्रवीदिति पुनरेवान्वयः । एवं प्रत्ययावगती पृथगसंकीर्णे शास्त्रेणैव विवेचिते इति शेषः। प्रत्ययो व्याख्यातः। अवगतिश्चैतन्यम् ॥ ९८ ॥

एवमवान्तरवाक्यकृतं युष्मदस्मद्विवेकमुपपत्तित उक्त्वा विज्ञातपदार्थतत्त्वे पुरुषे महावाक्यं फलवद्विज्ञानं जनयतीत्याह—

एवं विज्ञातवाक्यार्थे श्रुतिलोकप्रसिद्धितः ।
श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये ॥ ९९ ॥

एवमिति ॥ एवमुक्तप्रकारेण श्रुतिप्रसिद्धितो लोकप्रसिद्धितोऽन्वयव्यतिरेकतश्च विज्ञातावान्तरवाक्यार्थे पुंसि सति महावाक्यात्मिका श्रुतिः श्रोतुर्जिज्ञासोर्मोहापनुत्तये सकार्याविद्यानिवृत्तिप्रयोजनाय तत्सदाख्यं ब्रह्म त्वमसीत्याह। उपदिशतीत्यर्थः ॥ ९९ ॥

वाक्यश्रवणमात्रान्मोहापोहे दृष्टान्तं पुराणसिद्धमाह—

ब्रह्मा दाशरथेर्यद्वदुक्त्यैवापानुदत्तमः ।
तस्य विष्णुत्वसंबोधे न यत्रान्तरमूचिवान् ॥ १०० ॥

ब्रह्मेति ॥ दाशरथिना रामेण देवकार्यसिद्धये मनुष्यावतारनाट्येन स्वमाहात्म्याच्छादनं संकल्पपूर्वकं यत्कृतं तदिह तमःशब्देनोच्यते। नत्वीश्वरस्य संमोहः संभवति । तदुक्तं संक्षेपशारीरके—'संकल्पपूर्वकमभूद्रघुन-

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नस्य नाहं विजान इति कंचनकालमेतत् । ब्रह्मोपदेशमुपलभ्य निमित्त मात्रं तचोत्ससर्ज स कृते सति देवकार्ये' इति । हे राम, त्वं विष्णुरसि न दशरथपुत्रमात्रस्य इत्युक्त्यैव ब्रह्मा दाशरथेः संकल्पमात्रकृतं तमो विष्णुत्वाच्छादनरूपमपानुदत् । एवकारार्थमाह—तस्येति । यत्नान्तरं वाक्योपदेशग्रहणातिरिक्तमित्यर्थः ॥ १०० ॥

दार्ष्टान्तिकमाह—

**अहंशब्दस्य निष्ठा या ज्योतिषि प्रत्यगात्मनि ।**
**सैवोक्ता सदसीत्येवं फलं तत्र विमुक्तता ॥ १०१ ॥**

अहंशब्दस्येति ॥ एवंशब्दः प्रथमं योज्यः । यथायं दृष्टान्त एवं सदसीति वाक्येन सा निष्ठोक्तैव केवलं नानुष्ठापितेति योजना । सा का निष्ठेति तामाह—अहंशब्दस्येति । प्रत्यगात्मनि परागर्थेभ्यो व्यावृत्ते शोधिते आत्मनि निरुपाधिके ज्योतिषि साक्षिस्वप्रकाशस्वभावे अहंशब्दस्य या निष्ठा लक्षणया पर्यवसिता वृत्तिः सैवेत्यर्थः । तत्र त्वं तदसीत्युपदेशमात्रादहं सत् ब्रह्मास्मीति वाक्यार्थज्ञानोदयमात्रे सति विमुक्तता मोहापोहरूपा फलं भवतीत्यर्थः । यद्वा दृष्टान्तस्य दार्ष्टान्तिकमेव विज्ञातवाक्यार्थ इति पूर्वश्लोक एव स्थितं द्रष्टव्यम् । अयं त्वन्यथोत्थाप्यते । ननु दाशरथेर्भवेदेव विष्णुत्वोपदेशमात्राद्विष्णुरहमस्मीति झटिति बोधोदयस्तस्य महामहिमसंपन्नत्वात्कथमिदानींतनस्य कर्ताभोक्तेत्यादिप्रत्यक्षाभिमतमिथ्याप्रत्ययगृहीतस्योपदेशमात्रादहं ब्रह्मास्मीति निर्विचिकित्सं ज्ञानं संभाव्यत इत्याशङ्क्य, अशोधितत्वंपदार्थस्य पुंसः कर्त्रादिसाक्षिण एवाहमादिशब्दलक्षितस्य ब्रह्मत्वोपदेशान्नानुपपत्तिरत्रापीति परिहरति—अहंशब्दस्येति । सदसीत्येवं वाक्येन सैव निष्ठोक्तेति संबन्धः । अन्यत्समानम् ॥ १०१ ॥

एवमवगतपदार्थतत्त्वस्य वाक्यादेव समूलसंसारनिवृत्तिफलं ज्ञानं जायत एवेति स्थिते श्रुतेः प्रामाण्यसिद्ध्यर्थं कार्यपरत्वं कल्प्यमित्याग्रहो निरर्थको विद्वदनुभवविरोधादित्यभिप्रेत्याह—

**श्रुतमात्रेण चेन्न स्यात्कार्यं तत्र भवेद्ध्रुवम् ।**
**व्यवहारात्पुरापीष्टः सद्भावः स्वयमात्मनः ॥ १०२ ॥**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतमात्रेणेति ॥ यथोक्तन्यायेन वाक्यस्य श्रुतमात्रेण चेदुक्तफलं विज्ञानं न स्यात्तत्र तदा कार्यं कल्प्यं ध्रुवमवश्यं भवेत्। अन्यथार्थवादादिवाक्यवत्स्वार्थे प्रामाण्यानुपपत्तेः । इह तु तथा कल्प्यमस्ति फलस्य सद्य एवानुभवसिद्धत्वादित्यर्थः । स्वयं ज्योतिर्नहि द्रष्टुरितिश्लोके पूर्वमर्धश्लोकोऽधिकः स्थित इहवायमर्ध एव श्लोक इति सह गणनीयम् । किंच सिद्धे ब्रह्मात्मनि शास्त्रस्याप्रामाण्यं नाम विपर्यासलक्षणं वा निष्फलत्वं वा संशयलक्षणं वाऽनुत्पत्तिलक्षणं वेति विकल्पान्क्रमेण दूषयति—व्यवहारादित्यादिना । नाद्यः । यस्मा-द्व्यवहारादहं ब्रह्मास्मीति शास्त्रोपदेशव्यवहारात्पुरा पूर्वमप्यात्मनः स्वयमेव सद्भाव इष्टो बाधकाभावात्तस्यायथावस्थितात्मस्वरूपस्यैव श्रुत्या निवेदनाच्च शुक्तिरूप्यज्ञानवदप्रामाण्यमित्यर्थः ॥ १०२ ॥

न द्वितीयोऽनुभवविरोधादित्याह—

अशनायादिनिर्मुक्त्यै तत्काला जायते प्रमा ।
तत्त्वमस्यादिवाक्यार्थे त्रिषु कालेऽप्यसंशयः ॥ १०३ ॥

अशनायादीति ॥ तत्कालस्तद्वाक्यश्रवणकाल एव कालो यस्याः सा तत्काला प्रमा अशनायाद्युपलक्षितसंसारस्य निर्मुक्त्यै निवृत्त्यर्थं जायते, विदुषां प्रत्यक्षमेवैतदित्यतो न निष्फलत्वशङ्कावकाश इत्यर्थः । तृतीयमप्यनुभवविरोधेन निराकरोति—तत्त्वमसीति ॥ असंशयः संशयो नास्तीत्यर्थः ॥ १०३ ॥

चतुर्थं प्रत्याह—

प्रतिबन्धविहीनत्वात्स्वयं चानुभवात्मनः ।
जायेतैव प्रमा तत्र स्वात्मन्येव न संशयः ॥ १०४ ॥

प्रतिबन्धेति ॥ पदार्थाज्ञानं हि वाक्यार्थज्ञानोत्पत्तिप्रतिबन्धस्तद्विहीनत्वादवगतपदार्थस्य पुंसस्तत्र तस्मिन्नेव वाक्यश्रवणकाले आत्मन्येव प्रमा जायेतैव न संशय इति योजना । आकाशपुष्पमस्तीत्यादिवाक्यार्थवदनुभवायोग्यार्थत्वशङ्कां वारयति—स्वयं चेति । अनुभवस्वरूपत्वात्स्वयमात्मनः प्रत्याख्यातुमशक्यत्वादित्यर्थः । अतो हुंफडादिशब्दवदनुत्पत्तिलक्षणमप्यप्रामाण्यं नास्तीति सिद्धं सिद्धे ब्रह्मात्मनि वाक्यस्य प्रामाण्यमित्यर्थः ॥ १०४ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं प्रमाणस्वरूपनिरूपणेनाहंब्रह्मास्मीति ज्ञानमुपपाद्येदानीं प्रतिपत्त्यर्थस्वभावनिरूपणेनापि तदुपपादयितुं विकल्पयति—

किं सदेवाहमस्मीति किंवान्यत्प्रतिपद्यते ।
सदेव चेदहंशब्दः सता मुख्यार्थ इष्यताम् ॥ १०५ ॥

किं सदेवेति ॥ तत्त्वमसीति वाक्यश्रवणसमनन्तरं प्रतिपत्तावहमस्मीति किं सदेव प्रतिपद्यते किंवान्यदिति विकल्पार्थः । आद्यमनूद्य तत्र परस्यानिष्टापत्तिरित्याह–सदेव चेदिति । सता सच्छब्दार्थेनाहंशब्दो मुख्यार्थ इष्यतां तदा सच्छब्दाहंशब्दयोरेकार्थपर्यवसानादैकात्म्यमेव वाक्यार्थो न संसर्ग इत्यपरोक्षज्ञानसिद्धिरित्यर्थः ॥ १०५ ॥

द्वितीये दोषमाह—

अन्यच्चेत्सदहंग्राह्यप्रतिपत्तिर्मृषैव सा ।
तस्मान्मुख्यग्रहे नास्ति वारणावगतेरिह ॥ १०६ ॥

अन्यच्चेदिति ॥ प्रत्यगात्मनोऽन्यच्चेत्सत्तदाहंग्राह्यप्रतिपत्तिर्मृषैव सा भवेत्संपदादिज्ञानवत् । तत्र वाक्यस्याप्रामाण्यमेव प्रसज्येतेत्यर्थः । प्रमाणप्रमेयस्वभावपर्यालोचनया वाक्यादेवापरोक्षं फलवदात्मतत्त्वविज्ञानमुत्पद्यत इत्युपपन्नमित्युपसंहरति—तस्मादिति । इह वाक्ये मुख्यग्रहेति अवगतेर्यथार्थानुभवस्य वारणा निवारणं नास्तीत्यर्थः ॥ १०६ ॥

नन्वात्मनः कूटस्थत्वेन प्रतिपत्तृत्वानुपपत्तौ फलसंबन्धो नोपपद्यत इत्यस्यात्मग्रहे निवारणेत्याशङ्क्याह—

प्रत्ययी प्रत्ययश्चैव यदाभासौ तदर्थता ।
तयोरचितिमत्त्वाच्च चैतन्ये कल्प्यते फलम् ॥ १०७ ॥

प्रत्ययीति ॥ प्रत्ययी परिणाम्यन्तःकरणं तत्परिणामश्च यदाभासौ यस्य चिदात्मन आभासो ययोस्तौ यदाभासौ तयोस्तदर्थता । तच्छेषभूततेति यावत् । तस्मिंश्चैतन्ये चिदात्मनि तदाभासद्वारा फलं कल्प्यते । किंच तयोः प्रत्ययिप्रत्यययोरचितिमत्त्वाज्जडत्वादपि फलसंबन्धायोगात्फलस्यात्मसंबन्धः स्यादित्यर्थः ॥ १०७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निर्व्यापारस्यापि फलसंबन्धे दृष्टान्तमाह—

कूटस्थेऽपि फलं योग्यं राजनीव जयादिकम् ।
तदनात्मत्वहेतुभ्यां क्रियायाः प्रत्ययस्य च ॥ १०८ ॥

कूटस्थ इति ॥ ननु राजतद्भृत्ययोः स्वस्वामिभावसंबन्धोऽस्ति राजनि जयादिसंबन्धनिमित्तमिहत्वध्यक्षाध्यक्ष्ययोस्तादृशस्यादर्शनात्कथमयं दृष्टान्तः प्रकृते संगतः स्यादित्याशङ्क्य, अत्राप्यस्त्यधिष्ठानाधिष्ठेयभावः फलसंबन्धहेतुरित्याह—तदिति । हेतुभ्यामित्यत्र हेतुत्वाभ्यामिति भावप्रधानता योज्या । क्रियाहमात्मिका वृत्तिः । प्रत्यर्थमयतीति व्युत्पत्तेः प्रत्ययोऽन्तःकरणसाभास उच्यते साभासवृत्तिवृत्तिमतोरिति यावत् । आत्मत्वं च हेतुत्वं चात्महेतुत्वे तस्य फलस्य न आत्मत्वहेतुत्वे तदनात्महेतुत्वे ताभ्यां तदनात्मत्वहेतुत्वाभ्यामिति योजना । तथाच क्रियाप्रत्यययोर्जडयोः फलस्वरूपत्वाभावात्फलोपादानत्वाभावाच्च तद्व्यापारनिबन्धनं फलं तदधिष्ठान एव निर्व्यापारेऽपि कूटस्थे योग्यमित्यस्ति दृष्टान्तदार्ष्टान्तिकसंगतिरित्यर्थः ॥ १०८ ॥

शुद्धस्यात्मना प्रमातृत्वं नास्तीत्यभिप्रेत्येदं विशिष्टप्रमातृकृतं फलं कूटस्थे उपचर्यत इति राजदृष्टान्तेनोक्तं, वस्तुतस्तु चित्प्रतिबिम्बस्यैव स्वोपाधिव्यापारेण स्वात्मन्यध्यस्ते न विद्यत एव प्रमातृत्वमिति चिदात्मन एवाविकृतस्य प्रतिबिम्बभावनिबन्धनः फलसंबन्ध इति सदृष्टान्तमाह—

आदर्शस्तु यदाभासो मुखाकारः स एव सः ।
यथैवं प्रत्ययादर्शो यदाभासस्तदा ह्ययम् ॥ १०९ ॥

आदर्शस्त्विवति ॥ येन मुखाकारेण विशिष्टतया आभासत इति यदाभासः सन्नादर्शो मुखाकारः स एव ग्रीवास्थ एव स न ततोऽन्यो यथा बिम्बप्रतिबिम्बयोरैक्यं लोके प्रसिद्धमित्यर्थः । एवं प्रत्ययादर्शोऽहंकारो यदाभासो येन चित्प्रतिबिम्बेन आभास्यत इति यदाभासः स चित्प्रतिबिम्बपरमात्मैव न ततोऽन्योऽहंकारेऽहमवभासगोचरस्तथासत्यहं ब्रह्मेति वाक्यार्थधीर्घटतेऽध्यस्तांशापोहमात्रेण विना नात्मनः कर्मत्वमित्यर्थः ॥ १०९ ॥

अयमेव पक्ष आदरणीय इत्याह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्येवं प्रतिपत्तिः स्यात्सदस्मीति च नान्यथा ।
तत्त्वमित्युपदेशोऽपि द्वाराभावादनर्थकः ॥ ११० ॥

इत्येवमिति ॥ एवंसति चिदाभासाभ्युपगमेसति सदहमस्मि चकारादहं सदस्मीत्येवमाकारा प्रतिपत्तिः स्यान्नान्यथा आत्मन एव वाहंकारस्यैव वा प्रमातृत्वाभ्युपगमे इति यतोऽतोऽयमेव मार्गोऽनिच्छद्भिरप्यादरणीय इति योजना । एवमनभ्युपगमे न केवलं प्रतिपत्त्यनुपपत्तिरपि तूपदेशस्याप्यनुपपत्तिरित्याह—तत्त्वमिति । त्वमर्थोऽनुवादद्वारेण हि तदर्थभाव उपदेष्टव्यस्तत्रानूद्यमानस्य चित्प्रतिबिम्बस्याभावस्तदर्थोपदेशो निरालम्बनोऽनर्थकः स्यादित्येतदाह—द्वाराभावादिति ॥ ११० ॥

एतदेव विशदयति—

श्रोतुः स्यादुपदेशश्चेदर्थवत्त्वं तथा भवेत् ।
अध्यक्षस्य न चेदिष्टं श्रोतृत्वं कस्य तद्भवेत् ॥ १११ ॥

श्रोतुरिति ॥ तथा सतीत्यर्थः । तच्च श्रोतृत्वमध्यक्षादन्यत्र संभवतीत्याह—अध्यक्षस्येति । न कस्यापीत्यर्थः ॥ १११ ॥

यद्यप्यध्यक्षस्य नोपदेशस्तथापि न वैयर्थ्यमिति शङ्कते—

अध्यक्षस्य समीपे स्याद्बुद्धेरेवेति चेन्मतम् ।
न तत्कृतोपकारोऽस्ति काष्ठाद्यद्वन्न कल्प्यते ॥ ११२ ॥

अध्यक्षस्येति ॥ तत्र बुद्धेः श्रोतृत्वं किमध्यक्षसंनिधिसत्तामात्रापेक्षमाहोस्वित्तत्कृतोपकारापेक्षमिति विकल्प्याद्यं प्रत्याह—न तदिति । तत्कृतः संनिहिताध्यक्षकृत उपकारोऽतिशयो बुद्धेर्नास्त्येव यद्वत्काष्ठादिन्धनादेः संनिहिताद्बुद्ध्यावतिशयो न कल्प्यते तद्वदित्यर्थः ॥ ११२ ॥

द्वितीयमुत्थाप्य दूषयति—

बुद्धौ चेत्तत्कृतः कश्चिन्नन्वेवं परिणामिता ।
आभासेऽपि च को दोषः सति श्रुत्याद्यनुग्रहे ॥ ११३ ॥

बुद्धौ चेदिति ॥ एवंसति आभासानभ्युपगमेऽध्यक्षस्य परिणामिता ननु निश्चितं प्रसज्येतेत्यर्थः । अतो 'रूपंरूपं प्रतिरूपो बभूव', 'एकधा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बहुधा चैव दृश्यते जलचन्द्रवदि'त्यादिश्रुतिस्मृत्यनुगृहीत आभासपक्षो निर्दुष्ट उपादेय इत्यभिप्रेत्याह—आभासेऽपि चेति। यद्वाऽस्तु परिणामिताध्यक्षस्येति चेत्तर्ह्याभासेऽपि च प्रमाणसिद्धेऽभ्युपगम्यमाने तव को दोषो भविष्यतीत्याह—आभासेऽपीति ॥ ११३ ॥

आभासपक्षे चिदात्मनः परिणामप्रसङ्गाभावं वक्तुं शङ्कामुत्थापयति—

आभासे परिणामश्चेन्न रज्ज्वादिनिभत्ववत् ।
सर्पादेश्च तथावोचमादर्शे च मुखत्ववत् ॥ ११४ ॥

आभासे परिणामश्चेदिति ॥ नैवमाभासस्य मृषात्वोपपत्तेरिति परिहारमाह—न रज्ज्वादीति। रज्ज्वज्ञानकल्पितस्य सर्पादे रज्जुनिभत्ववदनिदमात्मकस्य रजतादेरिदमात्मकत्ववच्च चिदात्माज्ञानकल्पितस्य बुद्ध्यादेर्मृषैव चिन्निभत्वं चकाराद्भोक्तृस्वरूपस्यात्मनो भोक्तृत्वाभासो मृषैवेति सूच्यते। यथैवं मृषात्वं तथा पूर्वमवोचमादर्शे च मुखत्ववन्मुखाकारत्ववदिति दृष्टान्तप्रणयनेनेत्यर्थः। चकारान्मुखस्येवात्मनोऽविकृतत्वमप्यवोचमित्यर्थः॥ ११४॥

अहंकृतेरेवात्मत्वमिति मन्यमानस्तस्य चिन्निभत्वमाक्षिपति—

नात्माभासत्वसिद्धिश्चेदात्मनो ग्रहणात्पृथक् ।
मुखादेश्च पृथक्सिद्धिरिह त्वन्योन्यसंश्रयः ॥ ११५ ॥

नात्मेति ॥ आत्मनः केवलस्य ग्रहणादवभासनात्पृथगेवात्माभासत्वस्य सिद्धिश्चेन्न भवेदाभासावभासेनैवात्मावभासो भवेत्तदा इह त्वस्मिन्मतेऽन्योन्यसंश्रय इति योजना, दृष्टान्तश्च विषम इत्याह—मुखादेरिति। दर्पणादिगताभासव्यतिरेकेण ग्रीवास्थत्वेन मुखस्य सदा सिद्धिरस्तीति न तत्रान्योन्यसापेक्षतेत्यर्थः ॥ ११५ ॥

अन्योन्याश्रयमेव स्पष्टयति—

अध्यक्षस्य पृथक्सिद्धावाभासस्य तदीयता ।
आभासस्य तदीयत्वे ह्यध्यक्षव्यतिरिक्तता ॥ ११६ ॥

अध्यक्षस्येति ॥ तथाचाहमिति प्रतीयमानोऽहंकृत्यात्मक एव चेतन आत्मेति युक्तमित्यभिप्रायः ॥ ११६ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

अहंकृत्यात्मकस्यान्तःकरणस्य स्वप्ने दृश्यत्वेनैव व्यवस्थितत्वात्तद्भासनिरपेक्ष एवात्मा तत्र सिद्ध इति नोक्तदृष्टान्तासंगतिरिति परिहरति—

नैवं स्वप्ने पृथक्सिद्धेः प्रत्ययस्य दृशेस्तथा ।
रथादेस्तत्र शून्यत्वात्प्रत्ययस्यात्मना ग्रहः ॥ ११७ ॥

नैवं स्वप्न इति ॥ प्रत्ययस्यान्तःकरणस्य दृशेरात्मनश्च स्वप्नावस्थायां तथा मुखतत्प्रतिबिम्बवत्पृथगन्योन्यनिरपेक्षतयैव सिद्धेरित्यर्थः । कुत एतदित्यपेक्षायामाह—रथादेरिति । 'न तत्र रथा न रथयोगा न पन्थानो भवन्ती'त्यादिना स्वप्ने रथादिदृश्यराहित्यस्य श्रूयमाणत्वात्प्रत्ययस्यैव रथाद्याकारमापन्नस्य तत्रात्मना स्वप्रकाशचैतन्येन ग्रहः । तथाचात्मा प्रत्ययसंवलनविनिर्मुक्तः स्वप्रकाशतया भासमान एव स्वप्ने विषयाकाराकारितप्रत्ययसाक्षी सिद्ध इत्यर्थः ॥ ११७ ॥

स्वप्नपर्यालोचनया चिदात्मनः प्रत्ययाद्विवेकं दर्शयित्वा जाग्रत्स्वभावालोचनयापि तमाह—

अवगत्या हि संव्याप्तः प्रत्ययो विषयाकृतिः ।
जायते स यदाकारः स बाह्यो विषयो मतः ॥ ११८ ॥

अवगत्या हीत्यादिना ॥ विषयस्याकृतिरिवाकृतिर्यस्याथवा विषयस्याकृतिरेवाकृतिर्यस्य स विषयाकृतिरिति विग्रहः । आत्मचैतन्यव्याप्ते विषयाकारे प्रत्यये जायमाने तस्मिन्यो विषयाकारः स बाह्यो विषय इष्ट इत्यर्थः ॥११८॥

किंच स बाह्यो विषय ईप्सिततमत्वात्कर्तुः साध्यत्वोद्देश्यत्वेनेष्टतमत्वात्कर्म भवति, तद्वांस्तद्विषयेच्छावान्कार्ये नियुज्यते कुर्विति प्रेर्यते यत इत्यध्याहारः । आकारसमर्पकस्य कर्मकारकतया विषयत्वमुक्त्वा प्रत्ययस्य करणत्वमाह—

कर्मेप्सिततमत्वात्स तद्वान्कार्ये नियुज्यते ।
आकारो यत्र चार्प्येत करणं तदिहोच्यते ॥ ११९ ॥

आकारो यत्रेति ॥ यत्र बुद्धिपरिणामे विषयेण आकारोऽर्प्येत अर्प्यते तदिह विषयाभिव्यक्तौ करणमुच्यते तत्तद्वाह्येन्द्रियविशेषिता तत्तदर्थाकारबुद्धिवृत्तिर्विषयप्रमितिं प्रति करणमित्यर्थः ॥ ११९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिपयकरणे व्युत्पाद्य कर्तारं व्युत्पादयति—

यदाभासेन संव्याप्तः संज्ञातेति निगद्यते ।
त्रयमेतद्विविच्यात्र यो जानाति स आत्मवित् ॥ १२० ॥

यदाभासेनेति ॥ यस्य चित्प्रतिविम्बस्याभासेन संव्याप्तोऽहंकारः परिणमते स चिदात्मप्रतिविम्बो ज्ञातेति निगद्यते कथ्यते । एवं साक्ष्यं निर्दिश्य ततः साक्षिणं पृथगुपलम्भयति—त्रयमिति । एतत्त्रयं ज्ञाता ज्ञानं ज्ञेयं चेति विविच्यासाधारण्येनावगम्यात्र त्रये परस्परापेक्षसिद्धिके आगमापायिनि वर्तमानं स्वतःसिद्धं तदवधिभूतमनागमापायि साक्षिणं यो जानाति सम्यगवगच्छति स आत्मवित् त्वंपदलक्ष्यप्रत्यगात्मविद्विति योजना । तदुक्तं श्रीभागवते 'एकमेकतराभावे यदा नोपलभामहे । त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः' इति ॥ १२० ॥

विवेकप्रकारमेव विशदयति—

सम्यक्संशयमिथ्योक्ताः प्रत्यया व्यभिचारिणः ।
एकैवावगतिस्तेषु भेदस्तु प्रत्ययार्पितः ॥ १२१ ॥

सम्यगिति ॥ स्पष्टम् ॥ १२१ ॥

भेदस्तु प्रत्ययार्पित इत्येतद्दृष्टान्तेन स्पष्टयति—

आधिभेदाद्यथा भेदो मणेरवगतेस्तथा ।
अशुद्धिः परिणामश्च सर्वं प्रत्ययसंश्रयात् ॥ १२२ ॥

आधिभेदादिति ॥ मणेः स्फटिकादेः प्रत्ययसंश्रयादहंकारप्रतिविम्बकृताभाससंश्रयान्निमित्तादित्यर्थः ॥ १२२ ॥

ननु ग्राह्यग्रहणग्राहकातिरिक्तात्मसिद्धौ किं प्रमाणमुक्तमेतावता भवतीत्यपेक्षायां तदाह—

प्रथमं ग्रहणं सिद्धिः प्रत्ययानामिहान्यतः ।
आपरोक्ष्यात्तदेवोक्तमनुमानं प्रदीपवत् ॥ १२३ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रथनमिति ॥ प्रत्ययानां विषयाकाराणां जाग्रत्स्वप्नावस्थानां प्रथनं स्फुरणं
ग्रहणमुपादानं स्थितिर्वा व्यवहारो वा सिद्धिः स्वरूपलाभश्चेह व्यवहारभूमौ
अन्यतोऽन्यस्मादपरोक्ष्यादपरोक्षस्वभावाद्भवितुमर्हति अचिरस्वभावत्वात् ।
अचिरस्वभावत्वं चागमापायित्वात्प्रदीपवदित्येतदेवानुमानमिहोक्तमित्यर्थः ।
सम्मताः प्रत्ययाः स्वविलक्षणान्याधीनप्रथनग्रहणसिद्धिका अचिरस्वभावत्वा-
त्प्रदीपादिवदिति प्रयोगः । एवं सामान्यतो दृष्टानुमानेन 'अत्रायं पुरुषः
स्वयंज्योतिरात्मैवास्य ज्योतिः', 'तस्य भासा सर्वमिदं विभाति' इत्यादिश्रुति-
स्मृतिप्रसिद्धस्वप्रकाश आत्मनि संभावना दर्शितेति द्रष्टव्यम् ॥ १२३ ॥

एवमनुमानमात्मन्युपन्यस्य विधिमुखेन प्रमाणेनात्मसिद्धिरुक्ता तत्र
केचिन्निषेधमुखेनैव प्रमाणेनात्मसिद्धिर्न विधिमुखेनापीति मन्यन्ते तन्मत-
निराकरणाय विकल्पयति—

किमन्यद्ग्राहयेत्कश्चित्प्रमाणेन तु केनचित् ।
विनैव तु प्रमाणेन निवृत्त्यान्यस्य शेषतः ॥ १२४ ॥

किमन्यदिति ॥ प्रथमस्तुशब्द एवकारार्थः । द्वितीयस्तु वाशब्दार्थः ।
किं कश्चिद्वादी केनचित्प्रमाणेनैव देहादिभ्योऽन्यदात्मतत्त्वं ग्राहयेत्किंवा
प्रमाणेन विनैवान्यस्य निवृत्त्या परिशेषित इति विकल्पार्थः ॥ १२४ ॥

प्रथमपक्षे विधिमुखेनैव प्रमाणप्रवृत्तिः सिध्यतीतीष्टहानिः स्पष्टेत्यभिप्रेत्य
द्वितीयं प्रत्याह—

शब्देनैव प्रमाणेन निवृत्तिश्चेदिहोच्यते ।
अध्यक्षस्याप्रसिद्धत्वाच्छून्यतैव प्रसज्यते ॥ १२५ ॥

शब्देनैवेति ॥ शब्देन प्रमाणेनानात्मनिवृत्तिरेव चेदिहोच्यते इति
संबन्धः । तदाध्यक्षस्य अध्यक्षसद्भावस्यान्यतोऽप्रसिद्धत्वात्परिशेषासिद्धेः
शून्यतैवावशिष्येत नात्मेत्यर्थः ॥ १२५ ॥

ननु चेतनाचेतनयोर्विरुद्धरूपत्वकथनेनान्यनिवृत्तिः शब्देन क्रियते तथा-
चाचेतनाद्विरुद्धश्चेतनः परिशिष्यत इति न शून्यताप्रसङ्ग इत्याशङ्क्य
परिहरति—

चेतनस्त्वं कथं देह इति चेन्नासिप्रद्धितः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चेतनस्यान्यतः सिद्धावेवं स्यादन्यहानतः ॥ १२६ ॥

चेतनस्त्वमिति ॥ अप्रसिद्धितो नैवमित्युक्तं साधयति—चेतनस्येति। अयमर्थः—सिद्धे हि धर्मिणि प्रतियोगिनि चायमयं न भवतीति तादात्म्यनिषेधेन विरुद्धरूपत्वोपदेशः स्यान्न चाद्यापि चेतनपदार्थः पृथक्सिद्ध इत्यनेनैव तत्साधनेऽन्योन्याश्रयः स्यादिति ॥ १२६ ॥

आत्मा नात्यन्तमप्रसिद्धस्तस्य स्वतःसिद्धत्वादित्याशङ्कते—

अध्यक्षः स्वयमस्त्येव चेतनस्यापरोक्षतः ।
तुल्य एवं प्रबोधः स्यादन्यस्यासत्त्ववादिना ॥ १२७ ॥

अध्यक्ष इति ॥ चेतनस्य स्वतोऽपरोक्षत्वादित्यर्थः । दूषयति—तुल्य इति । एवं सत्यन्यस्यासत्त्ववादिना शून्यवादिना तुल्यः समः प्रबोधः स्यात्। यथा शून्यवादिनः प्रमाणं विना स्वतःसिद्धं शून्यमात्मेति न प्रबोधसिद्धिस्तथाध्यक्षस्यापि तवेत्यर्थः ॥ १२७ ॥

इदानीं स्मृतिबलेन स्वतःसिद्धाध्यक्षसिद्धिं शङ्कते—

अहमज्ञासिपं चेदमिति लोकस्मृतेरिह ।
करणं कर्म कर्ता च सिद्धास्त्वेकक्षणे किल ॥ १२८ ॥

अहमज्ञासिषमिति ॥ अहमिदमज्ञासिषमितीह व्यवहारे लोकस्य युगपत्स्मृतिदर्शनादननुभूते स्मृत्यभावात्करणकर्मकर्तारस्त्रयोऽप्येकक्षणे प्राग्येन सिद्धाः सोऽस्त्यध्यक्षः स्वतःसिद्ध इति गम्यते । किलेत्यनभिमतत्वद्योतनात्पूर्वपक्षता द्योतितेत्यर्थः ॥ १२८ ॥

एतन्निराकरोति—

प्रामाण्येऽपि स्मृतेः शैघ्र्याद्यौगपद्यं विभाव्यते ।
क्रमेण ग्रहणं पूर्वं स्मृतेः पश्चात्तथैव च ॥ १२९ ॥

प्रामाण्येऽपीति ॥ स्मृतेः पूर्वानुभवगमकत्वेन प्रामाण्येऽपि न युगपत्त्रितयसिद्धिगमकत्वं, यतः पूर्वं क्रमेण कर्त्रादीनां ग्रहणमभूत्तथैव च पश्चादुत्तरकालं स्मृतेः संभवोऽतः शैघ्र्याद्वैरन्तर्येणाविलम्बाद्यौगपद्यं विभाव्यते

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[रू]पैवेत्यक्षरार्थः । अर्थत्रयस्यैकस्मृत्यवभास्यत्वे निश्चिते सत्येवं स्यान्नतु श[ङ्क्य]ते, यतोऽहमिदं जानामीति क्रमेण व्यपदिश्यतेऽतो ग्राह्यस्फुरणस्य ग्राह[क]ग्रहणाकारतासंभवात्तत्काले तयोर्न भानं संभवति, एवं ग्राहकस्य प्रतीचः [स्फु]रणसमये ग्राह्यस्य पराचो नास्ति स्फुरणं विरुद्धाकारद्वयस्यैकस्मिन्प्रमाण[ज्ञा]ने स्फुरणासंभवात्तथा ज्ञानस्यापि विषयैकाकारत्वात्तत्स्फुरणेन ज्ञातृस्फू[र्ति]रिति क्रमेणैव ज्ञात्रादिसिद्धिः प्रागुन्नेया । तस्मादुत्पलपत्रशतभेदनयौगप[द्या]भिमानवद्युगपत्स्मृतिरित्यभिमानः शैघ्र्यनिबन्धन इति भावः ॥ १२९ ॥

स्मृतेर्यौगपद्याभावे कारणान्तरमाह—

अज्ञासिषमिदं मां चेत्यपेक्षा जायते ध्रुवम् ।
विशेषोऽपेक्ष्यते यत्र तत्र नैवैककालता ॥ १३० ॥

अज्ञासिषमिति ॥ इदमित्याकारो हि प्रत्यगपेक्षयोल्लिख्यते । तथा [मा]मिति परागपेक्षया धीर्जायते । तथाच यत्र विशेषोऽन्यप्रतियोगिकोऽ[पेक्ष्]यते तत्रैककालता यौगपद्यं नैव घटत इत्यर्थः ॥ १३० ॥

स्मृतेर्विषयतः स्वरूपतश्च यौगपद्यासंभवात्कर्त्रादिसिद्ध्यैक्यानुमापकत्वा[नु]पपत्तिरित्युक्तं, संप्रति कर्त्रादीनां युगपदनुभवसाधनाभावादपि न युगप[त्सि]द्धिसंभावनेत्याह—

आत्मनो ग्रहणे चापि त्रयाणामिह संभवात् ।
आत्मन्यासक्तकर्तृत्वं न स्यात्करणकर्मणोः ॥ १३१ ॥

आत्मन इति ॥ अयमर्थः—यथा विषयस्य ग्रहणे कर्ता करणं कर्म [इ]ति त्रितयमपेक्षते एवं प्रत्येकं कर्त्रादिग्रहणेऽपि त्रितयमपेक्षणीयं, तथा[त्]मना प्रमातुश्चकारात्प्रमेयस्य प्रमाणज्ञानस्य च ग्रहणेऽपि त्रयाणां कर्त्रा[दी]नामिह्रापेक्षासंभवात्तत्तत्कर्त्रादिस्फुरणमन्तरेण तत्तदर्थस्य तदनुभूतत्वनि[श्च]यासिद्धेः कर्त्राद्यनवस्था प्रसज्येतेत्यर्थः । तैरेव कर्त्रादिभिः स्वस्वरूपसि[द्धि]संभवात्किमित्यनवस्थेति शङ्कां वारयति—आत्मनीति । आत्मन्येकस्मि[न्] स्वसिद्धावासक्तमुपक्षीणं यत्कर्तृत्वं तदेव करणकर्मणोः सिद्धौ न स्या[दि]त्यर्थः । तथाचैकस्मिन्नवभासे कर्त्रादिभावेनान्वीयमानानां तदैवावभासा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तरसाधनत्वान्वयायोगान्न कर्त्रादित्रितयस्य युगपदनुभवसाधनसंभावनेति तदसिद्धिस्तदवस्थेत्यर्थः ॥ १३१ ॥

कर्त्रादीनां युगपत्सिद्ध्यभ्युपगमे व्याकरणविरोधोऽपि स्यादित्याह—

व्याप्तुमिष्टं च यत्कर्तुः क्रियया कर्म तत्स्मृतम् ।
अतो हि कर्तृतन्त्रत्वं तस्येष्टं नान्यतन्त्रता ॥ १३२ ॥

व्याप्तुमिति ॥ कर्तुः क्रियया यद्व्याप्तुमिष्टतमं तत्कर्म स्मृतम् । 'कर्तुरीप्सिततमं कर्मे'ति पाणिनिना स्मृतमित्यर्थः । हि यस्मादेवमतस्तस्य कर्मणः सकलकारकप्रयोक्तृस्वतन्त्रकर्तृतन्त्रत्वमिष्टं न तद्व्यतिरिक्ताध्यक्षतन्त्रता । उक्तन्यायेन तत्साधकासिद्धिरित्यर्थः ॥ १३२ ॥

तस्माद्विधिरूपेण प्रवृत्तादेव प्रमाणादभिमतवस्तुसिद्धिर्नान्यनिषेधमात्रावसानादिति निर्णीतमित्युपसंहरति—

शब्दाद्वानुमितेर्वापि प्रमाणाद्वा ततोऽन्यतः ।
सिद्धिः सर्वपदार्थानां स्यादज्ञं प्रति नान्यथा ॥ १३३ ॥

शब्दाद्वेति ॥ अन्यतोऽन्यस्मात् । प्रत्यक्षादेवेत्यर्थः ॥ १३३ ॥

जडानां प्रवृत्तप्रमाणादेव सिद्धिरस्तु न स्वयं चेतनस्येत्याशङ्क्याह—

अध्यक्षस्यापि सिद्धिः स्यात्प्रमाणेन विनैव वा ।
विना स्वस्य प्रसिद्धिस्तु ज्ञानं प्रत्युपयुज्यते ॥ १३४ ॥

अध्यक्षस्यापीति ॥ येयमध्यक्षस्य सिद्धिरज्ञस्य सा प्रमाणाधीना नवेति विकल्प्यान्त्ये स्वरूपप्रकाशमात्रस्य विनाप्रमाणेन सिद्धावपि ज्ञानं प्रत्यध्यक्षता तस्य सिध्यतीति दूषयति—विना स्वस्येति ॥ १३४ ॥

अध्यक्षस्वरूपमपि विकल्प्य प्रमाणाधीनसिद्धिकतां तस्य दर्शयन्नाद्यं पक्षमभ्यनुजानाति—

तस्यैवाज्ञत्वमिष्टं चेज्ज्ञानत्वेऽन्या मतिर्भवेत् ।
अन्यस्यैवाज्ञतायां च तद्विज्ञाने ध्रुवा भवेत् ॥ १३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्यैवेति ॥ तस्यैव ज्ञानस्वरूपस्य चेतनस्यैवाज्ञत्वमिष्टं चेत्तदा तस्य ज्ञानत्वे चेतनत्वेऽन्या प्रमाणजन्या मतिरपेक्षणीया भवेत्, अन्यस्यैवाचेतनस्याहंकारस्यैवाज्ञतायां तद्विज्ञानेऽध्यक्षविज्ञाने चान्या मतिर्ध्रुवा भवेदिति योजना । उभयथापि विधिमुखप्रमाणाधीनाध्यक्षसिद्धिरित्यर्थः ॥ १३५ ॥

अध्यक्षस्य सिद्धस्वरूपत्वान्मानापेक्षा नास्तीत्याशङ्क्य सिद्धिशब्दार्थ एव तर्हि वक्तव्य इत्याह—

**ज्ञातता स्वात्मलाभो वा सिद्धिः स्यादन्यदेव वा ।**
**ज्ञातत्वेऽनन्तरोक्तौ त्वं पक्षौ संस्मर्तुमर्हसि ॥ १३६ ॥**

ज्ञाततेति ॥ किं ज्ञानं सिद्धिः स्वरूपलाभो वा स्यादन्यदेव वोभयान्यप्रकारो वेति विकल्पार्थः । तत्राद्ये दोषमाह—ज्ञातत्वे इति । अनन्तरोक्तौ 'तस्यैवाज्ञत्वमिष्टं चेदि'त्यादिना पूर्वश्लोकोक्तौ पूर्वोक्तविकल्पदूषणप्रसरात्राद्यः कल्पः साधुरित्यर्थः ॥ १३६ ॥

द्वितीयमनूद्य दूषयति—

**सिद्धिः स्यात्स्वात्मलाभश्चेद्यत्नस्तत्र निरर्थकः ।**
**सर्वलोकप्रसिद्धत्वात्स्वहेतुभ्यस्तु वस्तुतः ॥ १३७ ॥**

सिद्धिः स्यादिति ॥ निरर्थकत्वे हेतुमाह—सर्वलोकेति । वस्तुतः सर्वस्य स्वहेतुभ्यः स्वात्मलाभरूपा सिद्धिरिति सर्वलोकप्रसिद्धत्वात्तत्र प्रमाणप्रमाणप्रयासो व्यर्थः स्यादित्यर्थः ॥ १३७ ॥

तृतीयं पक्षमप्रसिद्धिपराहतं मत्वा वक्ष्यमाणपक्षविशेषज्ञापनार्थमुक्तं पक्षं निगमयति—

**ज्ञानज्ञेयादिवादेऽतः सिद्धिर्ज्ञातत्वमुच्यते ।**
**अध्यक्ष्याध्यक्षयोः सिद्धिर्ज्ञेयत्वं नात्मलाभता ॥ १३८ ॥**

ज्ञानज्ञेयादीति ॥ ज्ञानं ज्ञेयं ज्ञाता चास्तीति यस्य वादस्तस्मिन्वादे ज्ञातत्वमेव सिद्धिरुच्यते, अध्यक्ष्याध्यक्षयोस्तु पुनर्ज्ञेयत्वमेव सिद्धिर्न स्वा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्मलाभतेत्यर्थः। अध्यक्षस्यापीत्यादेरपरा योजना—अहमज्ञासिषं चेदमित्यारभ्येयता ग्रन्थेन कर्तृकर्मकरणानां विधिमुखेन प्रवृत्तप्रमाणादेव सिद्धिर्नान्यथेति प्रासङ्गिकमुपपादितमुपसंहृत्याध्यक्षस्यापि वस्तुत्वाविशेषात्प्रवृत्तप्रमाणादेव सिद्धिरिति प्रकृतमनुसरन्नाह—अध्यक्षस्यापीति। वाशब्दः कटाक्षे। अध्यक्षस्यापि द्रष्टुरपि प्रमाणेन विनैव सिद्धिः स्याद्वेति योजना। नैव स्यादित्यर्थः। चेतनत्वादध्यक्षस्य प्रमाणेन विना कथं न सिद्धिरित्यत आह—विनेति। प्रमाणेन विना स्वस्य वस्तुनः प्रसिद्धिस्तु ज्ञानं प्रमितिं प्रत्युपयुज्यते, ज्ञानस्यैव स्वरूपस्फुरणे प्रमाणानपेक्षा न ज्ञातुरध्यक्षस्येत्यर्थः। कथमितिचेत्तत्र वक्तव्यं—अध्यक्ष एवाज्ञः सन्प्रमाणेन विनार्थसिद्धिं साधयिष्यति किं वान्योऽन्तःकरणादिरिति। तत्राद्यमनूद्य दूषयति—तस्यैवेति। चेतनस्याध्यक्षस्यैवेत्यर्थः। ज्ञानत्वेऽहमध्यक्ष इति। ज्ञानवत्त्वेऽन्या मतिः प्रवृत्तप्रमाणजन्या मतिरपेक्षिता भवेदागन्तुकसिद्धेरन्यनिमित्तत्वादित्यर्थः। द्वितीयमनूद्य दूषयति—अन्यस्यैवेति। तद्विज्ञान इति। तस्यान्यस्यान्तःकरणादेरध्यक्षविषयविज्ञानेऽन्या प्रमाणजन्या मतिर्ध्रुवा भवेदिति योजना। उभयथापि विधिमुखेन प्रवृत्तप्रमाणादेवाध्यक्षसिद्धिरित्यर्थः। ज्ञाततेति। ज्ञातता ज्ञानवत्ता सिद्धिरिति पक्षे तस्यैवाज्ञत्वमिष्टं चेदिति पूर्वश्लोकोक्तविकल्पदूषणप्रसरणमनिवारणं स्यादित्याह—ज्ञातत्वेऽनन्तरोक्ताविति। यथा व्याख्यातौ स्वपक्षावित्यर्थः। अन्यत्समानम्॥ १३८॥

ननु ज्ञाततात्मलाभातिरिक्ताप्यस्ति स्पष्टता नाम सिद्धिरतो नाप्रसिद्धं पक्षान्तरमिति भट्टमतमाशङ्क्य परिहरति—

स्पष्टत्वं कर्मकर्त्रादेः सिद्धिता यदि कल्प्यते।<br>
स्पष्टताऽस्पष्टते स्यातामन्यस्यैव न चात्मनः॥ १३९॥

स्पष्टत्वमिति॥ स्पष्टत्वं प्राकट्यं कर्मकर्त्रादेः, स्पष्टतास्पष्टतेप्यन्यस्यैव कर्त्रादिविलक्षणस्य साक्षिणश्चिदाभासजननेन स्यातां नत्वात्मनः, कर्त्रादिस्वरूपस्य जडत्वादित्यर्थः॥ १३९॥

एतदेव व्यतिरेकप्रदर्शनेन स्पष्टयति—

अद्रष्टुर्नैव चान्धस्य स्पष्टीभावो घटस्य तु।<br>
कर्त्रादेः स्पष्टतेष्टा चेद्द्रष्टृताऽध्यक्षकर्तृका॥ १४०॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अद्रष्टुरिति ॥ अन्धस्य दर्शनवृत्तिरहितस्य ज्ञातुर्विषयीभूतस्य घटस्य यः नष्टीभावः स नैव ज्ञानविषयतातिरिक्तो भट्टमते संभवतीत्यर्थः । एवंसति भट्टमतानुसारिणा कर्त्रादेः स्पष्टता प्राकट्यरूपेष्टा चेत्तदा द्रष्टृता तद्विलक्षणाध्यक्षकर्तृकावश्यमेष्टव्या, तस्मात्कर्मादेर्जडस्य स्पष्टतायाः प्रकाशापरपर्यायाया असंभवान्न स्पष्टता सिद्धिशब्दार्थो किंतु ज्ञानविषयतैवेति कर्त्रादिगतचिदाभासनद्वारा तदधिष्ठानभूतश्चिदात्मा विधिमुखेनैव प्रदीपादिदृष्टान्तानुमानादिना प्रमाणेनावगन्तव्य इति भावः ॥ १४० ॥

अत्र कर्तृकर्मविहीन एव प्रत्ययः स्वमहिम्ना भासत इति वदन्विज्ञानवादी बौद्धः प्रत्यवतिष्ठते—

अनुभूतेः किमन्यस्मिन्स्यात्तवापेक्षया वद ।
अनुभवितरीष्टा स्यात्सोऽप्यनुभूतिरेव नः ॥ १४१ ॥

अनुभूतेरिति ॥ अनुभूतेः संवेदनस्यान्यस्मिन्कर्त्रपेक्षया तव किं फलं स्यात्तद्वद, न किंचित्फलं तस्याः स्वप्रकाशत्वादित्यर्थः । अनुभवितरि आश्रयभूते सैष्टव्या स्यात्तस्यास्तदधीनत्वदर्शनादिति चेत् त्वं ब्रूयास्तर्हि सोऽप्यनुभविता नोऽस्माकं मतेऽनुभूतिरेव न ततः पृथक् तत्सत्त्वे प्रमाणाभावादित्यर्थः ॥ १४१ ॥

कथं तर्ह्यनुभूतिरनुभावितानुभाव्य इति भेददर्शनमित्यत आह—

अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ १४२ ॥

अभिन्नोऽपि हीति ॥ बुद्ध्यात्मा बुद्धिस्वभावोऽभिन्नोऽप्येकोऽपि विपर्यासितदर्शनैर्भ्रान्तिबुद्धिभिः पुरुषैर्ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते प्रतीयते । संवित्तिशब्दो ग्रहणशब्दपर्यायः ॥ १४२ ॥

बुद्धेः कारकत्वानङ्गीकाराच्च न कर्त्राद्यपेक्षतेत्याह—

भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ।
सत्त्वं नाशित्वमस्याश्चेत्सकर्तृत्वं तथेष्यताम् ॥ १४३ ॥

भूतिरिति ॥ येषां मते या भूतिरनुभूतिः सैव क्रिया सैव कारक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुच्यते क्षणभङ्गुरत्वेन विरम्यव्यापारायोगात्तेषां मते कस्तस्याः स्वव्यतिरिक्तोऽपेक्षणीयः स्यादित्यर्थः । प्रथममनुभूतेरन्यानपेक्षत्वं निराकरोति सिद्धान्ती—सत्त्वमिति । अनुभूतेरस्याः सत्त्वं स्वरूपसत्त्वं नाशित्वं क्षणभङ्गुरत्वमिष्टं चेत्तव तर्हि तथा सकर्तृत्वमपीष्यतामनुभवस्यात्रापि सद्भावादित्यर्थः ॥ १४३ ॥

अथ सत्त्वादिरपि धर्मो नेष्यते इति मतं तदा क्षणिकत्वपक्षस्याप्यसिद्धिरित्याह—

न कश्चिन्नेष्यते धर्म इति चेत्पक्षहानता ।
नन्वस्तित्वादयो धर्मा नास्तित्वादिनिवृत्तयः ।
न भूतेस्तर्हि नाशित्वं स्वालक्षण्यं मतं हि ते ॥ १४४ ॥

न कश्चिदिति ॥ ननु नास्माभिर्विज्ञानस्य क्षणिकत्वादयो धर्मा इष्यन्ते किंत्वक्षणिकत्वाद्यपोहरूप एव क्षणिकत्वादिरिष्यतेऽतो नोक्तदोष इति शङ्कते—नन्विति । निराकरोति—नेति । एवं चेत्तर्हि भूतेरनुभूतेर्नाशित्वं न सिध्येत् । हि यस्मात्ते तव भूतेः स्वालक्षण्यं मतं स्वेनैव लक्ष्यते ज्ञायते इति स्वलक्षणं तस्य भावः स्वालक्षण्यं निर्विकल्पमात्रमिति यावत् । ततः सविकल्पकत्वादक्षणिकत्वसत्त्वान्नाशित्वाज्ञत्वादिव्यावृत्तेरनुभूतेश्च सविकल्पकज्ञानागोचरत्वाच्च सत्त्वनाशवत्त्वादिधर्मसिद्धिरित्यर्थः ॥ १४४ ॥

एतदेव स्फुटयति—

स्वलक्षणावधिर्नाशोऽनाशो नाशनिवृत्तिता ।
अगोरसत्त्वं गोत्वं ते ननु तद्गोत्वलक्षणम् ॥ १४५ ॥

स्वलक्षणेति ॥ अयमर्थः—कार्यं विनश्यच्च निरवधि नश्यति इदमत्र नास्ति इदमिदानीं नास्ति नष्टमिति वा नाशो व्यवह्रियते यस्मात्तस्मात्किमप्यस्ति विनाशावधिभूतमविनश्यदनुत्पन्नं स्वतःसिद्धं चेत्यभ्युपेयं तदेतदाह—स्वलक्षणावधिर्नाश इति । स्वरूपमेव लक्षणं प्रमाणं धर्मो वा यस्य स स्वलक्षणः सोऽवधिः सीमा यस्य विनाशस्य स तथेति विग्रहः । तथाच त्वन्मते आविर्भावतिरोभावयोरवधिभूतस्य स्थिरस्याभावान्न सत्त्वविनाशयोः सिद्धिरित्यर्थः । किंचापोहपक्षेऽन्योन्याश्रयश्च प्रसज्येतेत्याह—नाश इति ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिद्धे नाशे तद्विरोधिनोऽनाशस्य सिद्धिस्तत्सिद्धौ तदपोहरूपनाशसिद्धिरित्यर्थः । यत्तु सामान्यमनभ्युपगच्छता बौद्धेनागोव्यावृत्तिर्गोलक्षणमित्यभ्युपगम्यते तदनुपपन्नं, अन्योन्याश्रयस्य तादवस्थ्यादित्यभिप्रेत्याह— अगोरिति । गोरन्यस्याश्वत्वादेरगोपदाभिधेयस्यासत्त्वं निवृत्तिरभावो गोत्वमिति ते मतं तत्तु न गोत्वलक्षणं सिद्ध्यति अश्वत्वस्यापि गोत्वव्यावृत्तिलक्षणतया परस्परापेक्षसिद्धित्वादित्यर्थः ॥ १४५ ॥

अपोहवादे दोषान्तरमाह—

क्षणवाच्योऽपि योऽर्थः स्यात्सोऽप्यन्याभाव एव ते ॥१४६॥

क्षणवाच्योऽपीति ॥ अन्याभावोऽक्षणिकाभावः क्षण इति ते प्रसज्यते अतः स्थिरोऽपि क्षणिकताविरोधी त्वयाभ्युपगतः स्यादित्यर्थः ॥ १४६ ॥

नन्वभावो नाम न सतो निवृत्तिरिष्यते येनातिप्रसङ्गः स्यात्किंतु निरुपाख्य एवान्यव्यावृत्त्यात्मनाभिलप्यत इति शङ्कते—

भेदाभावेऽप्यभावस्य भेदो नामभिरिष्यते ।
नामभेदैरनेकत्वमेकस्य स्यात्कथं तव ॥ १४७ ॥

भेदाभावेऽपीति ॥ अभावस्य स्वरूपतो भेदाभावेऽपि अगोत्वमश्वत्वं अनश्वत्वं गोत्वमित्यादिनामभिः स्वरूपभेद इष्यत इत्यर्थः । दूषयति— नामभेदैरिति । एकस्य निःस्वभावस्याभावस्य नामभेदैर्निरर्थकसंज्ञाभेदैरनेकपदार्थासाधारणतया व्यावृत्त्यात्मत्वं कथं घटेतेत्यर्थः ॥ १४७ ॥

किंच भिन्नानां व्यावृत्तिरपोहोऽभिन्नानां वा तत्राद्यमनूद्य दूषयति—

अपोहो यदि भिन्नानां वृत्तिस्तस्य कथं गवि ।
नाभावा भेदकाः सर्वे विशेषा वा कथंचन ॥ १४८ ॥

अपोहो यदीति ॥ भेदप्रतियोगिनामानन्त्यात्तदवगममन्तरेण तदपोहानवगमात्तस्यापोहस्य गवि वृत्तिः कथं सिध्येदिति शेषः । तदसिद्धौ च किंचिदभावस्य क्वचित्सुलभत्वाद्व्यवहारानियमप्रसङ्ग इति भावः । द्वितीये दोषमाह— नाभावा इति । सर्वेऽप्यभावा अजत्वाश्वत्वाद्यपोहरूपा न भेदका न गोरितरेतरव्यावृत्तत्वबुद्धिजनकाः स्युस्तथा विशेषा वा भावरूपाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

खण्डमुण्डत्वादयो भेदका न स्युः, भेद्यभेदकयोर्भेदासिद्धेरित्यर्थः ॥ १४८ ॥

एवंचापोहवादे खण्डा गौर्नीलमुत्पलमित्यादिविशिष्टव्यवहारासिद्धिरियं गौरित्याद्यवधारणस्वरूपव्यवहारासिद्धिश्च स्यादित्यभिप्रेत्यापोहनिराकरणमुपसंहरति—

नामजात्यादयो यद्वत्संविदस्तेऽविशेषतः ॥ १४९ ॥

नामजात्यादय इत्यर्धेन ॥ ते तव मते संविदोऽविशेषतो निर्विशेषत्वान्नामजात्यादयो यद्वन्न विशेषणं एवं गवादीनां अगवादिव्यावृत्तयः खण्डादयो वा न विशेषणमिति विशिष्टव्यवहारलोप एवेति जीवनमपि ते दुर्लभमिति भावः ॥ १४९ ॥

यदुक्तं भूतिर्येषां क्रिया सैवेत्यत्र संविदः क्रियाकारकभेदापेक्षा नास्तीति तत्प्रत्यक्षमनुमानं चेति प्रमाणद्वयाभ्युपगमविरुद्धमित्याह—

प्रत्यक्षमनुमानं वा व्यवहारे यदीच्छसि।
क्रियाकारकभेदैस्तदभ्युपेयं ध्रुवं भवेत् ॥ १५० ॥

प्रत्यक्षमिति ॥ स्पष्टार्थः ॥ १५० ॥

तथाच संवेदनातिरिक्तवेद्यवेदितृस्वरूपमनिच्छताप्यभ्युपेयमिति बौद्धमतनिराकरणमुपसंहरति—

तस्मान्नीलं तथा पीतं घटादिर्वा विशेषणम्।
संविदस्तदुपेयं स्याद्येन चाप्यनुभूयते ॥ १५१ ॥

तस्मादिति ॥ येन चाप्यनुभूयते सोऽपि ज्ञाताभ्युपेयः स्यादित्यर्थः ॥ १५१ ॥

संवित्साक्षिण्यनुमानं प्रमाणमाह—

रूपादीनां यथान्यः स्याद्ग्राह्यत्वाद्ग्राहकस्तथा।
प्रत्ययस्तत्तथान्यः स्याद्व्यञ्जकत्वात्प्रदीपवत् ॥ १५२ ॥

रूपादीनामिति ॥ यद्ग्राह्यं तत्स्वान्यग्राह्यं यथा रूपादिग्राह्या च संविदिति बौद्धं प्रति प्रयोगो योज्यः। तथावभासकोऽवभास्यादन्यो व्यञ्जकत्वा-

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

द्दादेः प्रदीपवदिति आस्तिकान्प्रति प्रयोक्तव्यमित्यर्थः । यथा रूपादीनां ग्राह्यत्वाद्ग्राहकोऽन्यः स्यात्तथा प्रत्ययस्य ग्राह्यत्वाद्ग्राहकोऽन्यः स्यात्तथा ग्राहकश्च ग्राह्यादन्यः स्याद्व्यञ्जकत्वात्प्रदीपवदिति श्लोकयोजना ॥ १५२ ॥

कर्त्तर्हि प्रत्ययाध्यक्षयोः संबन्ध इत्यपेक्षायामाह—

अध्यक्षस्य दृशेः कीदृक्संबन्धः संभविष्यति ।
अध्यक्षेण तु दृश्येन मुक्त्वान्यो द्रष्टृदृश्यताम् ॥ १५३ ॥
अध्यक्षेण कृता दृष्टिर्दृश्यं व्याप्नोत्यथापि वा ।
नित्याध्यक्षकृतः कश्चिदुपकारो भवेद्धियाम् ॥ १५४ ॥

अध्यक्षस्येति ॥ द्रष्टृदृश्यसंबन्धाभ्युपगमे बलादाभासोऽभ्युपगन्तव्य इति विकल्पयति—अध्यक्षेणेति । अध्यक्षेण प्रत्ययेन दृशेरात्मनः कीदृक्संबन्धो भविष्यति पारमार्थिको वाऽपारमार्थिको वेति विमर्शार्थः । तत्राद्यो दृशेः परिणामादिविकारप्राप्तिप्रसङ्गात्सावयव इत्यभिप्रेत्य द्वितीयमङ्गीकरोति—नित्याध्यक्षेति ॥ १५३ ॥ १५४ ॥

कोऽसावुपकार इत्यपेक्षायामाह—

स चोक्तस्तन्निभत्वं प्राक्संव्याप्तिश्च घटादिषु ।
यथालोकादिसंव्याप्तिर्व्यञ्जकत्वाद्धियस्तथा ॥ १५५ ॥

स चोक्त इति ॥ स च नित्याध्यक्षकृतो बुद्धेरुपकारस्तन्निभत्वं प्राक् पूर्वमेव मुखप्रतिबिम्बदृष्टान्तेनोक्त इत्यर्थः । उक्ताभासद्वारात्मनो दृश्यबाह्यविषयसंबन्धं वक्तुं साभासाया बुद्धेर्विषयव्याप्तिं सदृष्टान्तमाह—संव्याप्तिश्चेति । यथा घटादिष्वालोकादिसंव्याप्तिर्व्यञ्जकत्वात्तथा धियो दृश्यघटादिव्याप्तिरित्यर्थः ॥ १५५ ॥

उक्तमेव स्फुटयति—

आलोकस्थो घटो यद्वद्बुद्ध्यारूढो भवेत्तथा ।
धीव्याप्तिः स्याद्घटारोहो धियो व्याप्तौ क्रमो भवेत् ॥१५६॥

आलोकस्थ इति ॥ यद्वद्यथाऽऽलोकनिविष्टो घट आलोकारूढो भवेत्तथा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बुद्धिनिविष्टो बुद्ध्यारूढो भवेत् । आरूढ इत्युक्ते पुरुपाश्वयोरिवोपर्यधोभाव इति शङ्कां वारयति—धीव्याप्तिः स्यादिति । यद्येवं विपयव्याप्तिमात्रमेव धियो विपयव्यञ्जकत्वं तर्ह्यात्मनो बुद्धेश्च को विशेप इत्याशङ्क्य विशेपमाह—धियो व्याप्तौ क्रमो भवेदिति ॥ १५६ ॥

धियो विपयव्याप्तौ क्रमो भवेन्नात्मन इत्यर्थादुक्तं विशेपं विशदयति—

पूर्वं स्यात्प्रत्ययव्याप्तिस्ततोऽनुग्रह आत्मनः ।
कृत्स्नाध्यक्षस्य नो युक्तः कालाकाशादिवत्क्रमः ॥ १५७ ॥

पूर्वमिति ॥ धियो विपयव्याप्तिः पूर्वं प्रथममिव प्रथमं स्यात्ततो विपयाकारतायां सिद्धायामात्मनोऽनुग्रहस्तदाकारे प्रतिबिम्बभावस्तद्बलाच्च विपयव्यञ्जकत्वमिति क्रमद्दष्टृत्वमन्यशेपत्वं च धियः सिध्यति न तथात्मन इत्याह—कृत्स्नाध्यक्षस्येति । प्रत्यर्थं परिणामभेदेन व्यञ्जकत्वाद्बुद्धेरेव क्रमो युक्तः कृत्स्नाध्यक्षस्य सर्वविक्षेपास्पदतया सर्वदा सर्वत्रानुगतप्रकाशरूपस्यापरिच्छिन्नस्यात्मनो न युक्तः स क्रम इत्यर्थः । देशतः कालतो वा क्रमाभावे दृष्टान्तः—कालाकाशादिवदिति ॥ १५७ ॥

नन्वध्यक्षस्यापि भोग्यविपयावभासकत्वाद्बुद्धेरिव परिणामः प्राप्नोतीत्याशङ्क्याह—

विपयहग्रणं यस्य कारणापेक्षया भवेत् ।
सत्येव ग्राह्यशेपे च परिणामी स चित्तवत् ॥ १५८ ॥

विपयग्रहणमिति ॥ कारणापेक्षया कर्त्रादिकारकापेक्षया ग्राह्यशेपे स्वासंसृष्टविपयान्तरावशेपे च सति यस्य विपयग्रहणं भवेत्स परिणामी स्याच्चित्तवन्नैवमात्मनो विपयावभासनं किंतु नित्यसिद्धप्रकाशस्वभावेन युगपत्स्वाध्यस्तसमस्तावभासनमित्यतो न तस्मिन्परिणामशङ्कावकाश इत्यर्थः ॥ १५८ ॥

यद्यपि तस्योक्तरीत्या भोग्यविपयाकारपरिणामो नास्ति तथापि ब्रह्मज्ञानाकारेण परिणामः स्याद्ब्रह्मणः स्वात्मत्वे सत्यपि तदाकारावभासस्यागन्तुकज्ञानसापेक्षत्वादित्याशङ्क्याह—

अध्यक्षोऽहमिति ज्ञानं बुद्धेरेव विनिश्चयः ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

नाध्यक्षस्याविशेपत्वान्न तस्यास्ति परो यतः ॥ १५९ ॥

अध्यक्षोऽहमितीति ॥ तत्त्वमस्यादिवाक्याद्ध्यक्षः परमात्मैवाहमिति यज्ज्ञानं जायते तन्नाध्यक्षस्य साक्षिणः परिणामस्तस्याविशेपत्वात्स्वतः परतो वा निरवयवस्यासङ्गस्य विशेपासंभवात्किंतु बुद्धेरेव साभासाया विनिश्चयोऽवस्थाविशेप इत्यक्षरार्थः । एतदुक्तं भवति—अनेकजन्मानुष्ठितयज्ञादिकापहृतादृष्टदोपनिवृत्तिसंस्कारवत्याः सगुणब्रह्मोपासनानिराकृतचाञ्चल्यायाः सांप्रतं विवेकवैराग्यशमादिगुणसंस्कृतायाः पदार्थद्वयपरिशोधनज्ञानाहितदृढसंस्कारायाश्च बुद्धेस्तत्त्वमस्यादिवाक्यश्रवणसमनन्तरशोधितपदार्थगतकल्पितभेदांशतिरोधानेनाखण्डाकारा काचिदवस्था जायते तस्यां प्रतिबिम्बितश्चिदात्मा तादृगृत्त्यविविक्ताकारेणाहमिति परामृश्येत, अतो विविक्ताकारमेवोपाध्यंशापोहेन स्वमेव रूपं ब्रह्मेति प्रतिपद्यत इति न तस्मिन्कोऽपि विशेप उपजायत इति चिदात्मनः परिणामाभ्युपगमे परिणामिनश्चित्तवत्स्वान्यवेद्यत्वनियमादात्मनोऽप्यन्यः साक्षी कल्प्येत, तदनुपपन्नमनवस्थानादप्रमाणकत्वाच्चेत्यभिप्रेत्याह—न तस्यास्ति परो यत इति ॥ १५९ ॥

यद्यप्येवमन्तःकरणस्यैव ज्ञानाकारपरिणामस्तथापि तस्य न ज्ञानफलभागिता किंत्वात्मन एवेत्यभिप्रेत्याहंकर्तुः फलसंबन्धे दोपमाह—

कर्त्रा चेदहमित्येवमनुभूयेत मुक्तता ।
सुखदुःखविनिर्मोको नाहंकर्तरि युज्यते ॥ १६० ॥

कर्त्रा चेदिति ॥ कर्त्रा विकारिणा चेदहं मुक्त इति मुक्ततानुभूयेत तदा नाहं कर्तेति कर्तृत्वोपमर्दनेन सुखदुःखविनिर्मोकोऽसंबन्धस्तस्मिन्न युज्यते कर्तुः सुखादिमत्त्वानुभवविरोधादित्यर्थः । कर्तुरपि क्रियया सह तदा विलीयमानत्वान्न तस्य फलसंबन्ध इति भावः ॥ १६० ॥

आत्मन्यपि कथं फलसंबन्धस्तस्य कूटस्थनित्यत्वादित्याशङ्क्य तत्त्वज्ञानोदयाद्यान्तरीयकतया बाध्यमानाध्यस्तानात्मसंभेदावभासस्य फलत्वोपचारात्तस्य चात्मन्येवोपपत्तेरित्यभिप्रेत्याह—

वाध्यते प्रत्ययेनेह विवेकेनाविवेकवान् ।
देहादावभिमानोत्थो दुःखीति प्रत्ययो ध्रुवम् ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

कुण्डलीप्रत्ययो यद्वत्प्रत्यगात्माभिमानिना ॥ १६१ ॥

देहादाविति ॥ दुःखीत्युपलक्षणम् । सुखी कृशः स्थूलः कामी क्रोधीत्यादयः कुण्डलस्य स्वसंबन्धित्वाभिमानकृते तत्संयोगवियोगयोः सुखदुःखे यद्वदिति दृष्टान्तार्थः । एवं बाध्यस्याध्यस्तत्वमुक्त्वा तस्य बाधमाह—प्रत्यगात्माभिमानिनेति । अविवेकवानाभिमानिकः प्रत्ययो विवेकेन प्रत्यगात्माभिमानिना शुद्धत्वंपदार्थात्माभिमानिना प्रत्ययेन बाध्यत इत्यन्वयः । प्रत्यगात्माभिमानिनेति पाठान्तरे सुगमम् ॥ १६१ ॥

अत्र प्राग्वृद्धेनार्धेन सह गणनयेह वृद्धमर्धमेकीकृत्य अविवेकवता विवेकिप्रत्ययः कस्मान्न बाध्यते विरोधस्य समत्वादित्यत आह—

विपर्यासे सदन्तं स्यात्प्रमाणस्याप्रमाणतः ॥ १६२ ॥

विपर्यास इति ॥ वैपरीत्ये प्रमाणस्याप्रमाणतापातात्सर्वमसदन्तं शून्यान्तं स्यात् । प्रामाणिकस्यार्थस्यासत्त्वे प्रतिभासस्य निरालम्बनत्वापत्तौ निरवधिको बाध इति शून्यान्ततापसङ्ग इत्यर्थः । अयमर्थोऽप्येकः ॥ १६२ ॥

विवेकेनाविवेकबाधो भवतीति पूर्वमुक्तं प्रपञ्चयति—

दाहच्छेदविनाशेषु दुःखित्वं नान्यथात्मनः ।
नैव ह्यन्यस्य दाहादावन्यो दुःखी भवेत्क्वचित् ॥ १६३ ॥

दाहच्छेदेति ॥ दाहादिदेहोपघातनिमित्तं हि दुःखमनुभूयते नान्यथा, तच्च देहाभिमाननिबन्धनमन्यथा सुषुप्तावपि प्रसङ्गात्, आत्मा च देहादेरन्य इति प्रमाणसिद्धमतोऽन्यगतदाहादिनान्यस्य दुःखेऽतिप्रसङ्गादध्यासनिबन्धनं दुःख्यहमस्मीति ज्ञानमित्यर्थः ॥ १६३ ॥

आत्मनः स्वतो दाहादिसंबन्धाभावे प्रमाणमाह—

अस्पर्शत्वाददेहत्वान्नाहं दाह्यो यतः सदा ।
तस्मान्मिथ्याभिमानोत्थं मृते पुत्रे मृतिर्यथा ॥ १६४ ॥

अस्पर्शत्वादिति ॥ फलितं सदृष्टान्तमुपसंहरति—तस्मादिति ॥ १६४ ॥

प्रागुक्तं दृष्टान्तं विवृण्वन् विवेकिप्रत्ययेनाविवेकी बाध्यत इत्युपपादितमुपसंहरति—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुण्डल्यहमिति ह्येतद्वाध्येतैव विवेकिना ।
दुःखीति प्रत्ययस्तद्वत्केवलाहंधिया सह ॥ १६५ ॥

कुण्डलीति ॥ केवले शुद्धे ब्रह्मण्येवाहंधीः केवलाहंधीस्तयेति विग्रहः १६५

नन्वदुःखिनो मोक्षोपदेशानुपपत्तेरात्मनोऽपि दुःखित्वमवगम्यते तत्त्व-त्सिद्धये शक्तिमत्त्वं गम्यतेऽतो नान्यगतेन निमित्तेनैव दुःखी किंतु स्वतोऽ-पीति सुषुप्त्यादावपि शक्तिमत्त्वमनिवारितमिति चेत्तत्राह—

सिद्धे दुःखित्व इष्टं स्यात्तच्छक्तिश्छन्दसात्मनः ।
मिथ्याभिमानतो दुःखी तेनार्थापादनक्षमः ॥ १६६ ॥

सिद्ध इति ॥ कस्यांचिदप्यवस्थायां यद्यात्मनः केवलस्य दुःखित्वं प्रमा-णसिद्धं स्यात्तथासति छन्दसा इच्छया तच्छक्तिर्दुःखित्वशक्तिः कल्प्येत, न सा कल्पयितुं शक्यते दुःखदर्शनस्यान्यथोपपत्तेरित्याह—मिथ्येति । अत्र ह्यन्वयव्यतिरेकौ दर्शितौ तेन मिथ्याभिमाननिबन्धनत्वेनार्थापादनक्षमो दुःखित्वानुभव इति योजना । अर्थादनुपपत्त्या यतः दुःखित्वशक्तिम-त्त्वापादनं तस्य क्षमः समर्थोऽयमनुभव इत्यन्यथोपपत्तिरित्यर्थः । तथाच यथादर्शनं दुःखशक्तिमत्त्वमपि मिथ्यैवेति भावः ॥ १६६ ॥

तामेवान्यथोपपत्तिं साधयति—

अस्पर्शोऽपि यथा स्पर्शमचलश्चलनादि च ।
अविवेकात्तथा दुःखं मानसं चात्मनीक्षते ॥ १६७ ॥

अस्पर्शोऽपीति ॥ निरवयवस्य पूर्णस्यात्मनो यथा स्पर्शचलनादिदर्श-नमविवेकादेव । आदिशब्दाच्छयनोत्थानोपवेशनादि गृह्यते । चकारात्परि-च्छिन्नत्वाभिमानः । तथा मानसं मनःकल्पितं च दुःखमविवेकादेवात्म-नीक्षत इत्यर्थः ॥ १६७ ॥

अविवेकादेव दुःखदर्शनमात्मनीत्येतदन्वयव्यतिरेकाभ्यामुपपादयति—

विवेकात्मधिया दुःखं नुद्यते चलनादिवत् ।
अविवेकस्वभावेन मनो गच्छत्यनिच्छतः ॥ १६८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विवेकेति ॥ विवेकरूपयात्मवियेत्यर्थः। यस्मात्स्थूलदेहविवेकात्मज्ञानेन चलनादिस्थूलदेहसंबन्धिमिथ्याध्यस्तमात्मनि निवर्त्यते तथा सूक्ष्मदेहाविवेकनिमित्तं दुःखं ब्रह्मात्मज्ञानेन समूलं निवर्त्येत इत्यर्थः ॥ १६८ ॥

अनिच्छतोऽप्यविवेकस्वभावान्मनश्चलतीति निमित्तमुक्त्वा नैमित्तिकमाह—

तदानुदृश्यते दुःखं नैश्चल्येनैव तस्य तत्।
प्रत्यगात्मनि तस्मात्तद्दुःखं नैवोपपद्यते ॥ १६९ ॥

तदेति ॥ नैश्चल्ये सति तस्यात्मनस्तद्दुःखं नैवेत्यन्वयः। उपसंहरति—प्रत्यगात्मनि तस्मादिति ॥ १६९ ॥

एवं युक्तितः प्रत्यगात्मनो निर्दुःखस्वाभाव्ये सिद्धे वाक्यादेव ब्रह्मास्मीत्यपरोक्षज्ञानं भवतीत्याह—

त्वंसतोस्तुल्यनीडत्वान्नीलाश्ववदिदं भवेत् ॥ १७० ॥

त्वंसतोरित्यर्धेन ॥ इदं वाक्यमखण्डार्थनिष्ठं भवेत्त्वंसतोस्त्वंसत्पदयोस्तुल्यनीडत्वादेकार्थवृत्तित्वान्नीलाश्वपदवदित्यक्षरार्थः। नीलोऽश्व इति पदयोर्यद्यपि गुणगुणिरूपेण संसृष्टार्थविषयत्वं तथाप्येकद्रव्यपर्यवसायित्वेन सामानाधिकरण्ये दृष्टान्त इति द्रष्टव्यम् ॥ १७० ॥

कथं पदयोरेकार्थनिष्ठत्वं तद्दर्शयति—

निर्दुःखवाचिना योगात्त्वंशब्दस्य तदर्थता।
प्रत्यगात्माभिधानेन तच्छब्दस्य युतेस्तथा ॥ १७१ ॥

निर्दुःखेति ॥ निर्दुःखवाचिना सच्छब्देन योगात्सामानाधिकरण्यात्त्वंशब्दस्य तदर्थता तथा प्रत्यगात्माभिधानेन त्वंशब्देन तच्छब्दस्य सच्छब्दस्य युतेर्योगात्सामानाधिकरण्यादपरोक्षात्मता सिध्यतीत्यर्थः ॥ १७१ ॥

वाक्यमप्यपरोक्षवस्तुप्रतिपादकमित्यत्र दृष्टान्तमाह—

दशमस्त्वमसीत्येवं वाक्यं स्यात्प्रत्यगात्मनि ॥ १७२ ॥

दशमस्त्वमसीति ॥ स्पष्टम् ॥ १७२ ॥

ननु तत्त्वंपदयोरेकार्थनिष्ठत्वे पर्यायत्वापत्तौ सहप्रयोगोऽनुपपन्न इति चेन्नास्ति पर्यायत्वं प्रवृत्तिनिमित्तभेदादित्यभिप्रेत्याह—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वार्थस्य ह्यप्रहाणेन विशिष्टार्थसमर्पकौ ।
प्रत्यगात्मावगत्यन्तौ नान्योऽर्थोऽर्थाद्विरोध्यतः ॥ १७३ ॥

स्वार्थस्य हीति ॥ प्रत्यक्षत्वपरोक्षत्वलक्षणस्वार्थस्य स्ववाच्यार्थस्याप्रहाणेनैवापरित्यागेनैव त्वंसच्छब्दौ विशिष्टार्थसमर्पकौ । अतो वाच्यभेदान्न पर्यायतेत्यर्थः । एवं तर्ह्यखण्डार्थत्वेन स्यादित्याशङ्क्याह—प्रत्यगात्मेति । प्रत्यगात्मनः शुद्धसाक्षिणोऽवगतिस्तत्त्वावगतिरन्तोऽवसानं ययोस्तौ । तथा श्रूयमाणं पदयोः सामानाधिकरण्यं मिथो विरुद्धवाच्यार्थसंसर्गेऽन्यतरविशिष्टेऽन्यतरे वा पर्यवसानमगच्छत्कल्पितभेदपरामर्शेन लक्षणया विगतपरोक्षत्वाद्यंशे स्वरूपमात्रे सोऽयं देवदत्त इतिवदखण्डे पर्यवस्यतीति प्रत्यगात्मावगत्यन्तौ तत्त्वंशब्दावुक्तावित्यर्थः । ननु तत्त्वंपदयोः सामानाधिकरण्यमंशांशित्वादिविषयतयाप्युपपत्स्यते किमित्यखण्डार्थतापक्षपात इत्यत आह—नान्योऽर्थ इति । अतोऽस्मादुक्तादखण्डार्थादेकरसाद्विरोधी अन्योऽर्थो न वेदान्तेषु प्रतिपाद्यत इत्यर्थः । तदिदं विवक्षितं तत्त्वमर्थयोः सुवर्णकुण्डलमितिवन्न कार्यकारणभावेन संसर्गः संभवति 'अन्यत्रास्मात्कृताकृता'-दिति श्रुतिविरोधात्, नापि भूम्यक्षरादिवदंशांशिभावेन 'निष्कलं निष्क्रिय'मित्यादिकूटस्थैकरसप्रतिपादकश्रुतिविरोधात्, नापि गुणगुणिभावेन नीलमुत्पलमितिवन्निर्गुणत्वश्रुतिविरोधात्, नापि जातिव्यक्तिविशिष्टस्वरूपादिप्रकारेण संसर्गः 'एकमेवाद्वितीयं' 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतिविरोधात्, तस्माद्विशिष्टसंसर्गविरोधिवस्तुमात्रनिष्ठत्वं वाक्यस्याखण्डार्थत्वमिह विवक्षितम् । तथाच विमतमखण्डार्थनिष्ठमुपाधिपरामर्शमन्तरेणाविभाव्यमानं भेदवस्तुनिष्ठत्वात्सोऽयं देवदत्तः खं छिद्रमित्यादिवाक्यवदिति ॥ १७३ ॥

नन्वेवमखण्डार्थनिष्ठत्वेऽपि वाक्यस्य न तावन्मात्रे पर्यवसानं युक्तं बोधमात्रात्फलासिद्धेर्यत्नान्तरमेष्टव्यमिति क्रियापर्यवसायिता कस्मान्न कल्प्यत इत्याशङ्क्य मुमुक्षोर्जिज्ञासितमर्थं विहायार्थान्तरपरत्वकल्पनेऽबुभुत्सितार्थपरत्वेन वाक्यस्याप्रामाण्यप्रसङ्गान्मैवमित्यभिप्रेत्य ज्ञानमात्रादेव फलसिद्धिं दृष्टान्तेनोपपादयति—

नवबुद्ध्यपहाराद्धि स्वात्मानं दशपूरणम् ।
अपश्यञ्ज्ञातुमेवेच्छेत्स्वमात्मानं जनस्तथा ॥ १७४ ॥



C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नवबुद्धीत्यादिना ॥ नवैव वयमिति बुध्या भ्रमरूपयापहारात्तिरोहितत्वात्तिरोधानमात्रनिवृत्तिफलतया दशत्वसंख्यायाः पूरणं स्वात्मानमपश्यन् ज्ञातुमेवेच्छेन्नतु किंचित्कर्तुमित्यर्थः। यथायं दृष्टान्तस्तथा जनो मुमुक्षुरपि स्वमात्मानं केनापि हेतुना विस्मृतं ज्ञातुमेवेच्छति भ्रमनिवृत्तिफलायैवातः क्रियापरत्वकल्पना नावकाशं लभत इत्यर्थः ॥ १७४ ॥

प्रकृते स्वात्मनः केनापहारः कृत इत्यपेक्षायां दार्ष्टान्तिकं विवृण्वंस्तदाह—

**अविद्याबद्धचक्षुष्ट्वात्कामापहृतधीः सदा।**
**विविक्तं दृश्यमात्मानं नेक्षते दशमं यथा ॥ १७५ ॥**

अविद्याबद्धेति ॥ अविद्यालाख्यज्ञानं तया बद्धमाच्छादितं चक्षुर्विवेकदर्शनं यस्य स जीवस्तथा तस्य भावस्तत्त्वं तस्मादिति विग्रहः। आवरणमुक्त्वा विक्षेपमाह—कामापहृतधीरिति। बहिर्विक्षिप्तचित्त इत्यर्थः। सदा सर्वदा दृश्यसंघाताद्विविक्तमेव परमार्थं दृगात्मतत्त्वं नेक्षते न पश्यति यथा नवस्वेव विक्षिप्तचित्तो दशमं नवभ्यो वस्तुतो विविक्तं नेक्षते तथेत्यर्थः १७५

कथं तर्ह्यात्मानं जानातीत्यपेक्षायां शास्त्राचार्योपदेशान्निमित्तमात्राज्जानातीति सदृष्टान्तमाह—

**दशमस्त्वमसीत्येवं तत्त्वमस्यादिवाक्यतः।**
**स्वमात्मानं विजानाति कृत्स्नान्तःकरणेक्षणम् ॥ १७६ ॥**

दशमस्त्वमसीत्येवमिति ॥ कृत्स्नान्तःकरणेक्षणमहंकर्तुरपि विविक्तं तत्साक्षिणमित्यर्थः ॥ १७६ ॥

ननु 'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्। तच्छब्द एवकारश्च स्यादुपादेयलक्षण'मिति न्यायेन प्रथमनिर्दिष्टमुद्देश्यं चरमनिर्दिष्टमुपादेयमिति न्यायेन प्रथमनिर्दिष्टमुपादेयमिति नियमो वक्तव्यः स इह नोपपद्यते यतस्तत्त्वमित्यत्र तच्छब्दार्थस्य प्राथम्यं श्रूयते। 'अहं ब्रह्मास्मी'त्यत्र त्वमर्थस्य एवं तत्रतत्रान्यथान्यथा श्रूयमाणत्वात्कथमिहोद्देश्यविधेयनियम इत्याशङ्क्य वेदपदानामर्थवशादेव संबन्धो न पाठवशादाहर पात्रं पात्रमाहरेतिवदर्थनियमं विवक्षन्नाह—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदं पूर्वमिदं पश्चात्पदं वाक्यं भवेदिति ।
अन्वयव्यतिरेकाभ्यां ततो वाक्यार्थबोधनम् ॥ १७७ ॥

इदं पूर्वमिति ॥ पाठस्यानियमेऽपि 'प्रसिद्धमुद्दिश्यानूद्याप्रसिद्धो बोध्यत' इति न्यायादिदं प्रसिद्धार्थकं त्वमहमादिपदं पूर्वमिदमप्रसिद्धार्थकं ब्रह्म सदादिपदं पश्चादित्येवं पदं विन्यस्तं वाक्यं भवेदित्यन्वयव्यतिरेकाभ्यामवधार्य ततो वाक्यार्थबोधनं त्वमर्थस्य तदर्थात्मत्वप्रतिपत्तिरूपं भवेदित्यर्थः ॥ १७७ ॥

उक्तेऽर्थे हेतुमाह—

वाक्ये हि श्रूयमाणानां पदानामर्थसंस्मृतिः ।
नियमो नैव वेदेऽस्ति पदसांगत्यमर्थतः ॥ १७८ ॥

वाक्ये हीति ॥ स्पष्टम् ॥ १७८ ॥

आचार्येण ब्रह्मासीत्युपदिष्टः खलु शिष्यः कथमहं ब्रह्म स्यामिति पृच्छति । तदन्यथानुपपत्त्या वाक्यं साक्षाद्बोधजननसमर्थं न भवतीति गम्यते इत्याशङ्क्याह—

यदा नित्येषु वाक्येषु पदार्थस्तु विविच्यते ।
वाक्यार्थज्ञानसंक्रान्त्यै तदा प्रश्नो न युज्यते ॥ १७९ ॥

यदा नित्येष्विति ॥ नित्येष्वर्थाव्यभिचारिष्वित्यर्थः ॥ १७९ ॥

पदार्थतत्त्वानभिज्ञस्यैव प्रश्नो घटत इत्युक्तं स्पष्टयति—

अन्वयव्यतिरेकोक्तिः पदार्थस्मरणाय तु ।
स्मृत्यभावे न वाक्यार्थो ज्ञातुं शक्यो हि केनचित् ॥ १८० ॥

अन्वयेति ॥ अन्वयव्यतिरेकोक्तिशब्देनावान्तरवाक्यैस्तदनुकूलैश्च तर्कैरात्मानात्मविवेचनमुच्यते । पदार्थस्मृतिः पदोपस्थापितवाक्यार्थज्ञानकारणमित्यत्र लोकप्रसिद्धिमाह—स्मृत्यभाव इति ॥ १८० ॥

तत्रापि त्वंपदार्थविवेकेऽतीव प्रयत्नः कार्य इत्यभिप्रेत्याह—

तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः ।
व्यज्यते नैव वाक्यार्थो नित्यमुक्तोऽहमित्यतः ॥ १८१ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

तत्त्वमस्यादीति ॥ त्रिभिः श्लोकैः ॥ १८१ ॥

विचारप्रयोजनं द्रढयति—

अन्वयव्यतिरेकोक्तिस्तद्विवेकाय नान्यथा ।
त्वंपदार्थविवेके हि पाणावर्पितबिल्ववत् ॥ १८२ ॥
वाक्यार्थो व्यज्यते चैवं केवलोऽहंपदार्थतः ।
दुःखीत्येतदपोहेन प्रत्यगात्मविनिश्चयात् ॥ १८३ ॥

अन्वयव्यतिरेकोक्तिरिति ॥ अत इति पूर्वश्लोकगतं पदमस्मिन्योज्यम् । तद्विवेकाय त्वंपदार्थविवेकायेत्यर्थः । पदार्थविवेकफलं स्पष्टयति—त्वंपदार्थविवेके हीति । केवलो भेदसंसर्गशून्यो वाक्यार्थ इत्यन्वयः । तत्र हेतुमाह—अहंपदार्थतो दुःखीत्येतदपोहेनेति । अहमिति प्रतीयमानात्पदार्थाद्दुःखीत्येतस्येदमंशस्यापोहेन प्रत्यगात्मनः साक्षिणो विशेषेण निश्चयादित्यर्थः ॥ १८२ ॥ १८३ ॥

एवमुक्तेन न्यायेन वाक्यादेवापरोक्षाखण्डब्रह्मात्मज्ञानमुपपाद्येदानीं पूर्ववादिकल्पनाया निर्मूलतामाह—

तत्रैवं संभवत्यर्थे श्रुतहानाश्रुतार्थधीः ।
नैव कल्पयितुं युक्ता पदवाक्यार्थकोविदैः ॥ १८४ ॥

तत्रैवमिति ॥ स्पष्टम् ॥ १८४ ॥

यथाव्याख्यानं वाक्यस्य यथाश्रुतार्थे संभवति सति श्रुतहान्यादिकल्पनमनवकाशमित्युक्तमयुक्तं, 'प्रत्यक्षादिविरुद्धेर्थे वाक्यस्याबाधदर्शनादि'ति पूर्ववादी दृष्टान्तेन शङ्कते—

प्रत्यक्षादीनि बाधेरन्कृष्णलादिषु पाकवत् ।
अक्षजादिनिर्भरैतैः कथं स्याद्वाक्यबाधनम् ॥ १८५ ॥

प्रत्यक्षादीनीति ॥ यथा 'कृष्णलान्श्रपये'दिति कृष्णलशब्दवाच्यसुवर्णमयकणेषु श्रुतोऽपि पाकः प्रत्यक्षेण बाध्यते, तेषु विक्लित्तेरदर्शनात्किंत्वदृष्टार्थ एव संस्कारस्तत्र पाकक्रियासाध्यः एवमिहाप्यखण्डार्थतां वाक्यस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्यक्षादीनि प्रमाणानि भेदग्राहकाणि बाधेरन् । श्रुतेऽप्यात्मनो ब्रह्मत्वे पूर्णत्वादर्शनादतः प्रसंख्यानेनात्मसंस्कारार्थता वाक्यस्येति चेत्तत्रोत्तरमाह—अक्षजादीति । भवेदेवं यदि कर्तृत्वादिप्रतिभासस्य प्रत्यक्षप्रमाणता स्यान्नैतदस्ति, अध्यस्ताहंकाराद्युपरागमन्तरेण स्वत आत्मनि दुःखित्वादिधर्मसंबन्धस्य निराकृतत्वादतः प्रत्यक्षाद्याभासैरेतैः प्रमाणभूतवाक्यबाधनं कथं स्यात् । नैव स्यादित्यर्थः । प्रयाजे कृष्णलं जुहोतीतिवद्ब्रह्मज्ञाने संस्कृतस्यात्मनोऽन्यत्र विनियोगादर्शनादिह न संस्कारार्थत्वं वाक्यस्योपपद्यते सद्यो ब्रह्मत्वादर्शनं तु पदार्थमतिदार्ढ्याभावादित्युक्तमेवेति भावः ॥ १८५ ॥

नन्वेवंविरोधिता न क्षणाप्रामाण्याभावेऽपि स्यादनुत्पत्तिलक्षणमप्रामाण्यं वाक्यस्येति पूर्ववादी शङ्कते—

दुःख्यसीति सति ज्ञाने निर्दुःखीति न जायते ।
प्रत्यक्षादिनिभत्वेऽपि वाक्यान्न व्यभिचारतः ॥ १८६ ॥

दुःख्यसीति सतीति ॥ दुःखित्वादिभानस्योक्तरीत्या प्रत्यक्षाद्याभासत्वेऽपि दुःख्यसीति विरोधिगन्धिनि ज्ञाने सति वाक्यान्निर्दुःखीति विज्ञानं न जायत इति योजना । पूर्वसिद्धतया प्रत्यक्षस्यासंजातविरोधित्वेन प्राबल्यमस्तीत्यभिप्रायः । दूषयति—न व्यभिचारत इति ॥ १८६ ॥

तमेव व्यभिचारमाह—

स्वप्ने दुःख्यहमध्यासं दाहच्छेदादिहेतुतः ।
तत्कालभाविभिर्वाक्यैर्न बाधः क्रियते यदि ॥ १८७ ॥

स्वप्न इति ॥ स्वप्ने दाहच्छेदादिहेतुतो निमित्तादहं दुःख्यासं तदाप्नोपदेशान्निर्दुःखोऽभूवमित्यनुभवसिद्धत्वाच्चात्मधर्मो दुःखित्वादीत्यर्थः । तत्र पराभिनिवेशमनुभवति—तत्कालेति ॥ १८७ ॥

तथापि दुःखमात्मव्यभिचारीत्याह—

समाप्तेस्तर्हि दुःखस्य प्राक् तद्बाध इष्यताम् ।
न हि दुःखस्य संतानो भ्रान्तेर्वा दृश्यते क्वचित् ॥ १८८ ॥

समाप्तेरिति ॥ दुःखस्य समाप्तेरूर्ध्वं तद्बाधो दुःखबाध इष्यते एवं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राक् पूर्वमपि दुःखं नाभूदिति तद्बाध इष्यतां मध्ये दृश्यमानस्य शुक्तिरूप्यवन्मिथ्याव्यभिचारादित्यर्थः । कुतो बाध इष्यत इत्यत्र हेतुमाह—नहीति । भ्रान्तेर्वेति दृष्टान्तार्थो वाशब्दस्तस्मात्तद्दुःखित्वादेरात्मनि सति व्यभिचारादागन्तुकस्य चाविकारिण्यात्मन्यनुपपत्तेरारोपितत्वसिद्धौ प्रमाणज्ञानं शुक्तितत्त्वज्ञानमिव रजतादिबाधनेन दुःखित्वादिबाधनं कुर्वदेव वाक्यादुदेतीति न वाक्यस्यासामर्थ्यशङ्कावकाश इति तात्पर्यार्थः ॥ १८८ ॥

इतश्च वाक्यं न प्रत्यक्षाद्दुर्बलमित्याह—

प्रत्यगात्मन आत्मत्वं दुःख्यसीत्यस्य बाधया ।
दशमं नवमस्येव वेद चेदविरुद्धता ॥ १८९ ॥

प्रत्यगात्मन इति ॥ स्पष्टार्थः ॥ १८९ ॥

विस्तरेणोक्तं न्यायार्थं संक्षिप्याह श्लोकचतुष्टयेन—

नित्यमुक्तत्वविज्ञानं वाक्याद्भवति नान्यतः ।
वाक्यार्थस्यापि विज्ञानं पदार्थस्मृतिपूर्वकम् ॥ १९० ॥
अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् ।
एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते ॥ १९१ ॥

नित्यमुक्तत्वेत्यादिना ॥ १९० ॥ १९१ ॥

सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत् ।
दशमस्त्वमसीत्यस्माद्यथैवं प्रत्यगात्मनि ॥ १९२ ॥
प्रबोधेन यथा स्वाप्नं सर्वदुःखं निवर्तते ।
प्रत्यगात्मधिया तद्वद्दुःखित्वं सर्वदात्मनः ॥ १९३ ॥

प्रमा स्फुटतरा अपरोक्षा । निगदव्याख्याताः श्लोकाः ॥ १९२ ॥ १९३ ॥

पुरोक्तकृष्णलादिपाकदृष्टान्तवैषम्यं स्फुटयति—

कृष्णलादौ प्रमाऽजन्म तदन्यार्थोऽमृदुत्वतः ।
तत्त्वमस्यादिवाक्येषु न त्वेवमविरोधतः ॥ १९४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

कृप्णलाद्राविति ॥ प्रमाया अजन्म यत्कृप्णलादौ तद्युज्यते यतस्तत्त्रान्यार्थो प्रमा दृष्टार्थो न पाकार्थोऽमृदुत्वतो मृदुत्वात्कृप्णलानामिति योजना। कृप्णलपाके पुरुषस्यानैश्वर्यादशक्यार्थे च नियोगानुपपत्तेरित्यर्थः ॥ १९४ ॥

प्रकृते न तथाविधो विरोधोऽस्तीत्याह—

वाक्ये तत्त्वमसीत्यस्मिञ्ज्ञातार्थं तदसिद्वयम् ।
त्वमर्थे सत्यसाहाय्याद्वाक्यं नोत्पादयेत्प्रमाम् ॥ १९५ ॥

वाक्य इति ॥ 'तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः । व्युत्पद्यते नैव वाक्यार्थ' इत्युक्तं प्रपञ्चयंस्त्वंपदार्थविवेचने यत्नाधिक्यं सूचयति—वाक्ये तत्त्वमिति । पदत्रयात्मकेऽस्मिन्वाक्ये तत्पदमसिपदं चेति द्वयं ज्ञातार्थं प्रसिद्धार्थं त्वमर्थं त्वंपदार्थे सत्यविज्ञातेऽसाहाय्यात्साहाय्यशून्यत्वात्सहकारिविरहाद्वाक्यमेतत्प्रमां नोत्पादयेदपरोक्षनिश्चयरूपामित्यर्थः ॥ १९५ ॥

असिपदस्योपयोगमाह—

तत्त्वमोस्तुल्यनीडार्थमसीत्येतत्पदं भवेत् ॥ १९६ ॥

तत्त्वमोरिति ॥ तुल्यनीडार्थं कुरु चिन्तयेत्यादिक्रियाकाङ्क्षानिवारणेन सामानाधिकरण्यसिद्ध्यैक्यालम्बनत्वस्पष्टीकरणार्थमस्यसीत्यादिपदमुपयुज्यत इत्यर्थः ॥ १९६ ॥

निराकाङ्क्षे सामानाधिकरण्ये सति को लाभ इत्यपेक्षायामाह—

तच्छब्दः प्रत्यगात्मार्थस्तच्छब्दार्थस्त्वमस्तथा ।
दुःखित्वाप्रत्यगात्मत्वं वारयेतामुभावपि ॥ १९७ ॥

तच्छब्द इति ॥ प्रत्यगात्मार्थो यस्य स प्रत्यगात्मार्थस्तच्छब्दः स्यात्त्वंपदेन सामानाधिकरण्यादिति योज्यम् । तथा त्वमस्त्वंपदस्य तच्छब्दार्थोऽर्थो भवेत्तत्पदेन सामानाधिकरण्यादिति योजना । तदा वा को लाभ इति तमाह—दुःखित्वेति । उभावपि शब्दौ त्वमर्थस्य दुःखित्वांशं तदर्थस्याऽनात्मत्वं परोक्षत्वांशं च वारयेतामित्यर्थः ॥ १९७ ॥

एवं वाक्यार्थवर्णनेऽद्वितीयत्वपरश्रुत्या विरोधः सिध्यतीत्यसिप्रेत्योपसंहरति—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं च नेतिनेत्यर्थं गमयेतां परस्परम् ॥ १९८ ॥

एवं चेति ॥ नेतिनेतिवाक्यसिद्धमर्थमित्यर्थः ॥ १९८ ॥

पूर्वपक्षे श्रुतहान्यश्रुतकल्पना निःप्रामाणिकेत्युक्तमुपसंहरति—

एवं तत्त्वमसीत्यस्य गम्यमाने फले कथम् ।
अप्रमाणत्वमस्योक्त्वा क्रियापेक्षत्वमुच्यते ॥ १९९ ॥

एवमिति ॥ कथंशब्द आक्षेपार्थः ॥ १९९ ॥

यस्मादेवं विचार्यमाणे क्रियाया अनवकाशस्तस्मादित्युपसंहरति—

तस्मादाद्यन्तमध्येषु कुर्वित्येतद्विरोधतः ।
न कल्पामोऽश्रुतत्वाच्च श्रुतत्यागोऽप्यनर्थकः ॥ २०० ॥

तस्मादिति ॥ आदौ तत्त्वमसीति प्रथमोपदेशे मध्ये पदार्थपरिशोधनान्वयव्यतिरेकग्रहणकालेऽन्ते च निर्विचिकित्सब्रह्मानुभवकाले कुर्वित्येतदनुष्ठानकल्पनं तत्तदर्थप्रतिपत्तिविरोधि यतोऽतो न कल्पामः न कल्पयामः क्रियामिति शेषः । किंच अश्रुतत्वादपि न कल्पयामः । न केवलमश्रुतत्वात्क्रिया त्याज्या श्रुतत्यागस्यानर्थकत्वादपीत्याह—श्रुतेति । नहि तत्त्वमर्थयोः स्वरूपमप्राप्तं चिन्तनीयतया विधातुं शक्यते तत्प्राप्तेश्चान्यतोऽसंभवादस्मादेव तत्प्राप्तिमाशंसतो वाक्यभेदादिदोषप्राप्तिरपरिहार्या स्यात्त्वमोस्तत्त्वंसिद्धमनपेक्ष्यैव यथाकथंचिच्चिन्तनविधानाभ्युपगमेऽचिन्त्यब्रह्मसाक्षात्कारस्याप्रमात्वादविद्यानिवृत्तिफलासिद्धेर्निरर्थकः प्रसंख्यानविधिरिति भावः ॥२००॥

उक्तार्थानभिज्ञः पुनराक्षिपति—

यथानुभूयते तृप्तिर्भुजेर्वाक्यान्न गम्यते ।
वाक्यस्य विधृतिस्तद्वद्गोशकृत्पायसीक्रिया ॥ २०१ ॥

यथेति ॥ भुजेर्भोजनात्तृप्तिः फलं वाक्याद्वाक्यार्थज्ञानमात्रान्न गम्यते मोक्षफलमिति शेषः । तस्माद्यथा गोशकृतो गोमयात्पायसीक्रिया पायसकरणं नोपपद्यते तस्य तदसाधनत्वात्तद्वद्वाक्यस्य विधृतिर्विधारणमर्थतोऽवधारणं न वाक्यार्थापरोक्षसाधनमित्यर्थः ॥ २०१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्सर्गतो वाक्यं नार्थापरोक्ष्यार्थमित्येतदङ्गीकुर्वन्प्रकृते तस्यापवादक-माह सिद्धान्ती—

सत्यमेवमनात्मार्थवाक्यात्पारोक्ष्यबोधनम् ।
प्रत्यगात्मनि न त्वेवं संख्याप्राप्तिवदध्रुवम् ॥ २०२ ॥

सत्यमिति ॥ प्रत्यगात्मनि तु नैवमध्रुवमनिश्चितं किंतु संख्याप्तिवद्दश-मसंख्यावदपरोक्षज्ञानसाधनत्वं वाक्यस्य ध्रुवमेवेत्यर्थः ॥ २०२ ॥

कुत इत्यपेक्षायां स्वतोऽपरोक्षप्रत्यगात्मन एव ब्रह्मत्वोपदेशादित्याह—

स्वयंवेद्यत्वपर्यायः स्वप्रमाणक इष्यताम् ।
निवृत्तावगमः सिद्धः स्वात्मनोऽनुभवश्च नः ॥ २०३ ॥

स्वयंवेद्यत्वेति ॥ स्वप्रमाणकः प्रमाणनिरपेक्षप्रकाशमानतास्वभाव आत्मेष्यतां स्वयंज्योतिष्ट्वादिश्रुतेरित्यर्थः । तथाच वाक्यादहमोऽहंकारस्य ग्रहमेदकनिवृत्तौ स्वात्मनोऽनुभवश्च सिद्ध एव नोऽस्माकमिति न किंचिदनु-पपन्नमित्यर्थः । विमतं परोक्षाज्ञानजनकं वाक्यत्वात्संमतवदित्यादिप्रयोगे-नात्मविषयत्वमुपाधिर्दशमस्त्वमसीत्यादौ व्यभिचारश्चेत्युक्तं भवति ॥ २०३ ॥

अत्र दुःखानुभवविरोधशङ्का न कार्या दुःखस्य व्यभिचारित्वेनात्मधर्मत्वस्य निरस्तत्वाद्विषयधर्मत्वाच्चेत्यभिप्रेत्याह—

बुद्धीनां विषयो दुःखं नो यस्य विषया मताः ।
कुतोऽस्य दुःखसंबन्धो दृशेः स्वात्प्रत्यगात्मनः ॥ २०४ ॥

बुद्धीनामिति ॥ दुःख्यहमस्मीति दुःखधर्मवत्त्वेनाहंकर्तुरेवानुभवा-त्तस्य विषयभूतं दुःखं न बुद्धिवृत्त्याश्रयाहंकर्तृसाक्षिण आत्मनो धर्मः । संभवतीत्यर्थः ॥ २०४ ॥

सर्वधर्मरहितश्चेत्प्रत्यगात्मा कथं तस्यानुभव इत्यत आह—

दृशिरेवानुभूयेत स्वेनैवानुभवात्मना ।
तदाभासतया जन्म धियोऽस्यानुभवः स्मृतः ॥ २०५ ॥

दृशिरेवेति ॥ दृशेरनुभवस्वभावत्वात्तस्य स्वरूपे कोनामान्योऽनुभवो-

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

ऽपेक्षेतेत्यर्थः । तर्हि कथं तस्य विशेषानुभव इति तत्स्वरूपमाह—तदाभासतयेति । चैतन्याभासव्याप्ततया धियो जन्मैवात्मन आगन्तुकोऽनुभवः स्मृतो विद्वद्भिरित्यर्थः ॥ २०५ ॥

प्रकारान्तरेण प्रसंख्यानप्राप्तिं निराकरोति—

अशनायादिनिर्मुक्तः सिद्धो मोक्षस्त्वमेव सः ।
श्रोतव्यादि तवेत्येतद्विरुद्धं कथमुच्यते ॥ २०६ ॥

अशनायादीति ॥ सर्वसंसारनिर्मुक्तो नित्यसिद्धो मोक्षो ब्रह्मत्वमेवेत्याचार्योपदेशे सति तव श्रोतव्याद्यनुष्ठेयं विद्यत इति कथं विरुद्धमुच्यते । नह्यविक्रियं ब्रह्मत्वं कर्ता चेति वचः प्रमाणं स्यादित्यर्थः ॥ २०६ ॥

अथ तत्त्वम्—

सेत्स्यतीत्येव चेत्तत्स्याच्छ्रवणादि तदा भवेत् ।
मोक्षस्यानित्यतैवं स्याद्विरोधे नान्यथा वचः ॥ २०७ ॥

सेत्स्यतीति ॥ विपरिणाम उपदेशवाक्यस्याभ्युपेयत इति शङ्कामनूद्यैकं संधित्सतोऽपरं प्रच्यवत इति न्यायेन मोक्षानित्यत्वप्रसङ्गदोषमाह—सेत्स्यतीति । एवमुभयथाविरोधे सति वचो वाक्यं नान्यथा न विपरिणामवद्युक्तमित्यर्थः ॥ २०७ ॥

इतश्च प्रसंख्यानवादोऽनुपपन्न इत्यत आह—

श्रोतृश्रोतव्ययोर्भेदो यदीष्टः स्याद्भवेदिदम् ।
इष्टार्थकोप एवं स्यान्न युक्तं सर्वथा वचः ॥ २०८ ॥

श्रोतृश्रोतव्ययोरिति ॥ श्रोत्रादिभेदो यदीष्टः स्यात्तदैवं प्रसंख्यानं भवेत्कर्तृकर्मभेदाभावे कार्यानुपपत्तेरित्यर्थः । अस्तु भेद इति चेत्तत्राह—इष्टार्थेति । जीवस्य ब्रह्मभावो हीष्टार्थः सोऽन्यस्यान्यभावायोगाद्विहन्येतातः सर्वथा वचो वाक्यं न युक्तमयुक्तप्रमाणमेव प्रसंख्यानपक्षे भवेदित्यर्थः ॥ २०८ ॥

न युक्तं वच इत्येतत्प्रकटयति—

सिद्धो मोक्षोऽहमित्येव ज्ञात्वात्मानं भवेद्यदि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

चिकीर्षुर्यः स मूढात्मा शास्त्रं चोद्घाटयत्यपि ॥ २०९ ॥

सिद्ध इति ॥ उक्तप्रकारेणात्मानं ज्ञात्वा यो यदि चिकीर्षुर्भवेत्स मूढात्मेत्यन्वयः । उद्घाटयत्युत्सादयतीत्यर्थः ॥ २०९ ॥

मूढात्मत्वं प्रकटयति—

नहि सिद्धस्य कर्तव्यं सत्कार्यस्य न सिद्धता ।
उभयालम्बनं कुर्वन्नात्मानं वञ्चयत्यपि ॥ २१० ॥

नहीति ॥ स्पष्टम् ॥ २१० ॥

ननु किमित्यस्माच्छिन्दथास्मदभिप्रायमज्ञात्वैवेति पूर्ववादी स्वाभिप्रायमाविष्करोति—

सिद्धो मोक्षस्त्वमित्येतद्वस्तुमात्रं प्रदर्श्यते ।
श्रोतुस्तथात्वविज्ञाने प्रवृत्तिः स्यात्कथं त्विति ॥ २११ ॥

सिद्धो मोक्षस्त्वमिति ॥ मुमुक्षोरात्मविज्ञाने प्रवृत्त्यर्थं सिद्धब्रह्मरूपो मोक्षस्त्वमसीति वस्तुमात्रकथनपरमिदं वाक्यं न तत्त्वे पर्यवसितमित्यर्थः ॥ २११ ॥

उक्तमेव विवृणोति—

कर्ता दुःख्यहमस्मीति प्रत्यक्षेणानुभूयते ।
कर्ता दुःखी च माभूवमिति यत्नो भवेत्ततः ॥ २१२ ॥

कर्तेति ॥ स्पष्टम् ॥ २१२ ॥

वाक्यश्रवणानन्तरं मन्तव्य इति श्रुत्या कर्तव्यविधानादप्येवमेवाभ्युपेयमित्याह—

तद्विज्ञानाय युक्त्यादि कर्तव्यं श्रुतिरब्रवीत् ।
कर्तृत्वाद्यनुवादेन सिद्धत्वानुभवाय तु ॥ २१३ ॥

तद्विज्ञानायेति ॥ त्वमिति कर्तृत्वमनूद्य वस्तुगत्या त्वं सिद्धमोक्षब्रह्मरूपोऽस्यतस्तज्ज्ञानाय यतस्वेति वाक्यतात्पर्यमित्यर्थः ॥ २१३ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

नेयं कल्पना श्रुत्यनुसारिणीति सिद्धान्ती दूषयति—

निर्दुःखो निष्क्रियोऽकामः सिद्धो मोक्षोऽहमित्यपि।
गृहीत्वैव विरुद्धार्थमाद्ध्यात्कथमेव सः॥ २१४॥

निर्दुःख इति॥ निर्दुःखादिविशेषणो मोक्ष एवाहमिति गृहीत्वापीत्यन्वयः। वाक्याद्वाक्यार्थज्ञानं न जायत एवेति न वक्तुमुचितमप्रामाण्यप्रसङ्गादनुभवविरोधाच्च। तथाचोत्पन्ने ज्ञाने तद्विरुद्धप्रतिपत्तिर्न संजाघटीतीत्यभिप्रायः॥ २१४॥

यदि वाक्यादेव निर्दुःखादिलक्षणमोक्षात्मसाक्षात्कारः कथं तर्हि तदा तद्विरुद्धाकारानुभव इति पृच्छति—

सकामः सक्रियोऽसिद्ध इति मेऽनुभवः कथम्।
अतो ये विपरीतस्य तद्भवान्वक्तुमर्हति॥ २१५॥

सकाम इति॥ अतः सकामत्वादिरूपाद्विपरीतस्य मे ब्रह्मभूतस्येत्यर्थः॥ २१५॥

अन्यस्वभावस्य सतो ममान्यस्वभावानुभवः कथमित्यस्मिन्नर्थे सकृच्छ्रुतवाक्यस्य पुंसः प्रश्नो घटते युज्यते। ननु कथमहं निर्दुःखादिरूप इति मुक्तत्वानुभवार्थे इति प्रश्नविषयं विविच्य प्रतिवक्ति—

इहैव घटते प्रश्नो न मुक्तत्वानुभूतये।
प्रमाणेन विरोधी यः सोऽत्रार्थः प्रश्नमर्हति॥ २१६॥

इहैवेति॥ स्पष्टम्॥ २१६॥

अज्ञातज्ञापनस्वभावेन प्रमाणेनापूर्वार्थे बोधिते तद्विरोधी यः प्रमाणाभासगृहीतोऽर्थः स प्रश्नमर्हतीत्युक्तं प्रपञ्चयति—

अहं निर्मुक्त इत्येव सदसीत्यन्यमानजः।
प्रत्यक्षाभासजन्यत्वाद्दुःखित्वं प्रश्नमर्हति॥ २१७॥

अहं निर्मुक्त इति॥ सदसीति यदन्यन्मानं तज्ज इत्यर्थः॥ २१७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदानीं शिष्याकाङ्क्षावशेनापि कार्यकल्पनं न घटत इत्याह—

पृष्टमाकाङ्क्षितं वाच्यं दुःखाभावमभीप्सितम् ॥ २१८ ॥

पृष्टमिति ॥ किं तदाकाङ्क्षितं तदाह—दुःखाभावमभीप्सितमिति । दुःखस्याभावो यस्मिंस्तद्दुःखाभावं ब्रह्मरूपं मोक्षलक्षणमित्यर्थः ॥ २१८ ॥

प्रश्नस्वरूपमुपन्यस्य तदनुरूपत्वं प्रतिवचनस्य निगमयति—

कथं हीदं निवर्तेत दुःखं सर्वात्मना मम ।
इति प्रश्नानुरूपं यद्वाच्यं दुःखनिवर्तकम् ॥ २१९ ॥

कथं हीति ॥ स्पष्टम् ॥ २१९ ॥

ननु पृष्टमेवोच्यते प्रसंख्यानद्वारेण तद्व्यतिरेकेण श्रुतेर्दुःखापनयनसामर्थ्याभावादित्याशङ्क्य प्रमाणस्य प्रमेयावबोधनमेव कार्यं न कार्यान्तरमस्तीति परिहरति—

श्रुतेः स्वात्मनि नाशङ्का प्रामाण्ये सति विद्यते ।
तस्मादात्मविमुक्तत्वं प्रत्याययति तद्वचः ।
वक्तव्यं तत्तथार्थं स्याद्विरोधेऽसति केनचित् ॥ २२० ॥

श्रुतेरिति ॥ श्रुतेः स्वतःसिद्धे प्रामाण्ये सति स्वात्मनि स्वप्रमेये नाशङ्का विद्यते । स्वप्रमेयावभाससामर्थ्याभावाशङ्का न विद्यत इत्यर्थः । किं ततः सिद्धं तदाह—तस्मादिति । मुक्तत्वप्रत्ययं प्रति कारणत्वं यातीत्यर्थः । विरोधपरिहारस्य कृतत्वादिति भावः ॥ २२० ॥

वाक्यस्योक्तार्थानुभवहेतुत्वं विहाय गत्यन्तरं नास्त्यनुभवमार्गगतमित्याह—

इतोऽन्योऽनुभवः कश्चिदात्मनो नोपपद्यते ।
अविज्ञातं विजानतां विज्ञातारमिति श्रुतेः ॥ २२१ ॥

इतोऽन्य इति ॥ प्रकारान्तरकल्पना चात्रानुपपन्ना श्रुतिविरोधादित्याह—अविज्ञातमिति ॥ २२१ ॥

यदुक्तं पूर्वपक्षिणा प्राक् 'चर्या नो शास्त्रसंविद्या स्यादनिष्टं तथा सति' इति तदन्यथैवोपपत्तेर्न प्रसंख्यानकल्पकमित्याह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् ।
साधनत्वं व्रजत्येव शान्तो दान्तानुशासनात् ॥ २२२ ॥

त्वंपदार्थेति ॥ 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यती'ति श्रुतेरुपरतिशब्दनिर्दिष्टस्य संन्यासस्यात्मज्ञानं प्रति साधनत्वावगमान्न तस्याशास्त्रसंवेद्यतया परित्यागप्रसङ्ग इत्यर्थः । तथाच वाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात्पदार्थावधारणपर्यन्तमेवाश्रमधर्माणां विधितोऽनुष्ठानं ततः परं तु वाक्यादवगतब्रह्मात्मतत्त्वस्य 'मयेदमस्मै कर्तव्यमि'ति नियोज्यविषयप्रयोजनबुद्धेरनुत्पत्तेर्न तस्य क्वापि विधितः प्रवृत्तिः किंतु साधकावस्थायामभ्यस्तस्य निवृत्तिरूपस्याश्रमधर्मस्य ज्ञानाविरोधिनः संस्कारमात्रेणानुवृत्तिर्भवति, ततश्च न यथेष्टचेष्टाप्यवकाशं लभत इति सर्वमवदातमेवास्मन्मत इति भावः ॥ २२२ ॥

एतदेव प्रपञ्चयिष्यन्वाक्यार्थोदयप्रकारं श्रौतं व्युत्पादयति—

त्वमर्थं प्रत्यगात्मानं पश्येदात्मानमात्मनि ।
वाक्यार्थं तत आत्मानं सर्वं पश्यति केवलम् ॥ २२३ ॥

त्वमर्थमिति ॥ शान्त्यादिसाधनसंपन्नो भूत्वात्मन्येवात्माभासव्याप्ते स्वकार्यकारणसंघातपवनबहिरात्मानं प्रत्यक्चेतयितारं पश्येदिति श्रुत्यर्थः प्रथमार्धेनोक्तः । सर्वमेनं पश्यतीति श्रुत्यर्थमुत्तरार्धेनाह—तत इति । एवं शोधितं प्रत्यगात्मानं सर्वं ब्रह्म पश्यतीति श्रुत्यर्थो दर्शित इति द्योतयति—वाक्यार्थमिति ॥ २२३ ॥

एवं विज्ञानवाक्यार्थस्य विधिगोचरता नैव संभवतीत्याह—

सर्वमात्मेति वाक्यार्थे विज्ञातेऽस्य प्रमाणतः ।
असत्त्वे ह्यन्यमानस्य विधिस्तं योजयेत्कथम् ॥ २२४ ॥

सर्वमात्मेति ॥ स्पष्टम् ॥ २२४ ॥

वाक्यार्थविज्ञानात्प्रागेव विधयोऽवकाशं लभन्ते नोर्ध्वमित्युपसंहरति—

तस्माद्वाक्यार्थविज्ञानान्नोर्ध्वं कर्मविधिर्भवेत् ।
नहि ब्रह्मास्मि कर्तेति विरुद्धे भवतो धियौ ॥ २२५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मादिति ॥ ऊर्ध्वं विध्यसंभवे हेतुमाह—नहीति ॥ २२५ ॥

नन्वैक्यज्ञानेन भेदज्ञानमेव किमिति बाध्यते विपरीतमेव किं न स्यादित्यत आह—

ब्रह्मास्मीति च विद्येयं नैव कर्तेति बाध्यते ।
सकामो बद्ध इत्येवं प्रमाणाभासजा तया ॥ २२६ ॥

ब्रह्मास्मीति चेति ॥ प्रमाणाभासाज्जाता प्रमाणाभासजा तयेति विग्रहः ॥ २२६ ॥

स्वभावप्रवृत्ताया बुद्धेः प्रमाणजातया बाध्यत्वं दृष्टान्तेनोपपादयति—

शास्त्राद्ब्रह्मास्मि नान्योऽहमिति बुद्धिर्भवेद्दृढा ।
यदा युक्ता तदैवं धीर्यथा देहात्मधीरिति ॥ २२७ ॥

शास्त्रादिति ॥ दृढा यदा भवेत्तदैवंधीः कर्ताहमित्येवं धीरयुक्तेत्यन्वयः । यथा देहात्मधीर्मनुष्योऽहमित्यादिरूपा शास्त्राद्विदितात्मतत्त्वस्य न भवति तथेत्यर्थः ॥ २२७ ॥

विदितात्मतत्त्वस्य कर्ता कामीत्यादिधीरनवकाशेत्युक्तेऽर्थे दृष्टान्तान्तरमाह—

सभयादभयं प्राप्तस्तदर्थं यतते च यः ।
स पुनः सभयं गन्तुं स्वतन्त्रश्चेन्न गच्छति ॥ २२८ ॥

सभयादिति ॥ लोकप्रसिद्धार्थानुवादिश्लोकः स्पष्टार्थः ॥ २२८ ॥

यदुक्तं नियोगाभावे ज्ञानिनो यथेष्टचेष्टाप्राप्तिरिति तत्राह—

यथेष्टाचरणप्राप्तिः संन्यासादिविधौ कुतः ।
पदार्थाज्ञानबुद्धस्य वाक्यार्थानुभवार्थिनः ॥ २२९ ॥

यथेष्टेति ॥ आदिपदाच्छ्रवणादिविधिर्गृह्यते । पदार्थयोरासमन्ताज्ज्ञानं पदार्थाज्ञानं पदार्थस्वरूपालोचनं तेन बुद्धस्य । देहाद्यभिमानशून्यस्येति यावत् । पदार्थाज्ञानाद्बुद्धस्य प्रतिबुद्धस्येति वा । वाक्यार्थानुभवमर्थयमानस्य

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

तत्रैव लग्नचित्तस्य कुतो यथेष्टाचरणप्राप्तिर्निमित्ताभावादवसराभावाच्चेत्यर्थः। प्रबुद्धवाक्यार्थस्य तु मिथ्याज्ञानलेशस्याप्यभावात्तन्मूला यथेष्टचेष्टा नोन्मिषतीति भावः ॥ २२९ ॥

प्रकरणार्थमुपसंहरति—

**अतः सर्वमिदं सिद्धं यत्प्रागस्माभिरीरितम् ॥ २३० ॥**

अतः सर्वसिद्धमिति ॥ स्पष्टम् ॥ २३० ॥

मुमुक्षोरपि नास्ति यथेष्टचेष्टा कुतः सा मुक्तस्य स्यादिति कैमुतिकन्यायमाह—

**यो हि यस्माद्विरक्तः स्यान्नासौ तस्मै प्रवर्तते ।**
**लोकत्रयाद्विरक्तत्वान्मुमुक्षुः किमितीहते ॥ २३१ ॥**

यो हीति ॥ २३१ ॥

विदुषो नियोगपारतन्त्र्याभावेऽपि भिक्षाटनादिप्रवृत्तवद्विषयान्तरेऽपि प्रवृत्तिः कदाचित्स्यादिति चेत्तत्राह—

**क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति ।**
**मृष्टान्नध्वस्ततृड् जानन्नामूढस्तज्जिघत्सति ॥ २३२ ॥**

क्षुधयेति ॥ विषयाणां दुःखसाधनत्वावधारणपूर्वकं प्रागेव विषयत्यक्तानां न पुनरुपादानममूढस्य संभवति । भिक्षाटनादेस्तु ज्ञाननिष्ठाविरोधाभावाच्छरीरस्थितिमात्रहेतुतयावश्यकत्वेऽप्यपूर्वोपचयहेतुत्वाभावाच्च संस्कारवशादनुवृत्तिरिति न दोष इति द्रष्टव्यम् ॥ २३२ ॥

उत्पन्नतत्त्वज्ञानस्य यद्यपि किमपि कृत्यं नास्ति तथापि गुरुशास्त्रे माननीये एवेति शिष्यान् शिक्षयन्निव गुरुप्रमाणं निबध्नाति—

**वेदान्तवाक्यपुष्पेभ्यो ज्ञानामृतमधूत्तमम् ।**
**उज्जहारालिवद्यो नस्तस्मै सद्गुरवे नमः ॥ २३३ ॥**

वेदान्तवाक्येति ॥ स्पष्टम् ॥ नोऽस्मदर्थमित्यर्थः ॥ २३३ ॥

इत्यष्टादशं तत्त्वमसिप्रकरणम् ॥ १८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथात्ममनःसंवादप्रकरणम् १९

तदेवं संक्षेपविस्तराभ्यां तत्त्वंपदार्थपरिशोधनपूर्वकं ब्रह्मात्मैक्यलक्षणवाक्यार्थज्ञानं सफलं सर्ववेदान्तप्रत्ययं प्रमाणयुक्तिभ्यामुपपादितं, नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्तानन्दस्वभावस्य प्रत्यगात्मनो भेदविपर्यासाद्यनेकानर्थहेतुश्चाहंकारमनोबुद्धिचित्तवाच्यमन्तःकरणमिति च तत्रतत्रोक्तम् । इदानीं प्राधान्येन मनोध्यासनिबन्धन एवात्मनः संसारोऽतो मनःस्वरूपतः चेष्टानुसंधानेन तद्विलापने यत्नः कार्य इत्यभिप्रायेणात्ममनःसंवादरूपं प्रकरणमारभमाणो भगवान्भाष्यकारः प्रकरणप्रयोजनं तावदाह—

**प्रयुज्य तृष्णाज्वरनाशकारणं चिकित्सितं ज्ञानविरागभेषजम् । न याति कामज्वरसन्निपातजां शरीरमालां शतयोगदुःखिताम् ॥ १ ॥**

प्रयुज्येति ॥ चिकित्सितं चिकित्सा । भावे निष्ठा । ज्ञानं विवेकरूपं विरागरूपं विराग औदासीन्यं मनोवृत्तिविषयेष्वनासक्तिलक्षणं च भेषजं यस्मिंस्तच्चिकित्सितं तृष्णारूपज्वरनाशकारणं प्रयुज्य दुःखितां दुःखित्वं न याति पुमानिति योजना । काम एव ज्वरस्तन्निमित्तसंनिपातो मूर्च्छा आत्मानात्मविवेकलक्षणा ततो जातां शरीरपरम्पराशतयोगैः संबन्धैर्दुःखितामित्यर्थः । यद्वा चिकित्सितमिति भेषजविशेषणं योज्यम् । सम्यग्यथाशास्त्रं साधितमित्यर्थः ॥ १ ॥

भेषजप्रयोगप्रकरणमात्ममनःसंवादेन प्रपञ्चयति—

**अहं ममेति त्वमनर्थमीहसे परार्थमिच्छन्ति तवान्य ईहितम् । न तेऽर्थबोधो न हि मेऽस्ति चार्थिता ततश्च युक्तः शम एव ते मनः ॥ २ ॥**

अहं ममेत्यादिना ॥ हे मनः, अहंममेति इदमित्यपि द्रष्टव्यम् । त्वमनर्थं व्यर्थमीहसे चेष्टसे । ननु त्वदर्थमेवाहं चेष्टेऽतः कथमानर्थक्यमिति चेन्नाहं सांख्यो यंप्रत्येवाभिमानस्तवेत्युत्तरमाह—परार्थमिच्छन्तीति । तवेहितं परार्थं पुरुषस्य भोगापवर्गार्थमन्ये सांख्या इच्छन्ति न वयं वेदान्त-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिद्धान्तवेदिनः । विचार्यमाणे तन्मनीषितमपि मुधा । यतस्तेऽर्थबोधो न संभवत्यचेतनत्वान्नापि मे स्वस्यर्थिताखि ततश्च ते शमो लय एव युक्त इत्यर्थः ॥ २ ॥

आत्मनोऽर्थित्वाभावं साधयति—

यतो न चान्यः परमात्सनातनात्सदैव तृप्तोऽहमतो न मेऽर्थिता । सदैव तृप्तश्च न कामये हितं यतस्व चेतः प्रशमाय ते हितम् ॥ ३ ॥

यत इति ॥ सनातनात्पूर्णानन्दरूपात्परमादविकारात्परमात्मनोऽन्यो नाहं यतोऽतः सदैव तृप्त इत्यादिरूपस्तस्माद्धे चेतः, ते प्रशमाय यतस्व । मुमुक्षुणा मनोविलयने यत्नः कार्य इत्यभिप्रायः ॥ ३ ॥

परमात्माभेदेन स्वस्यार्थित्वाभाव उक्तस्तमेवाभेदमुपपादयति—

षडूर्मिमालाभ्यतिवृत्त एव यः स एव चात्मा जगतश्च नः श्रुतेः । प्रमाणतश्चापि मया प्रवेद्यते मुधैव तस्माच्च मनस्तवेहितम् ॥ ४ ॥

षडूर्मिमालेति ॥ अशनाया पिपासा शोको मोहो जरा मृत्युरिति प्राणमनोदेहधर्माः षडूर्मय इवाविर्भावतिरोभावरूपास्तेषां माला अविच्छिन्नाः परम्परास्ता अभ्यतीत्य सर्वात्मना पृथक्कृत्य वृत्तः सिद्धो निष्प्रपञ्च इति यावत् । य एवंविधः स एव जगतः सर्वस्यात्मा । चकारात्तवाहमेवात्मा । श्रुतेः 'यत्साक्षादपरोक्षाद्ब्रह्म', 'य आत्मा सर्वान्तरः' इत्यादौ श्रवणादित्यर्थः । 'अहमात्मा गुडाकेश सर्वभूताशयस्थित' इत्यादिस्मृतिप्रमाणतोऽपि । चकारात्कार्यकारणोपाधिद्वयपरामर्शमन्तरेण स्वतो भेदानिरूपणादित्यादिन्यायाद्विद्वदनुभवाच्च मया प्रवेद्यते सम्यक् ज्ञायते मुधैवेति सुगमम् ॥ ४ ॥

प्रत्यगात्मनः परमात्माभेदं प्रामाणिकमुक्त्वा भेदप्रतिभासस्य मनःकल्पितत्वेनाभासतामुपपादयति—

त्वयि प्रशान्ते नहि चास्ति भेदधीर्यतो जगन्मोहमुपैति

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

मायया । ग्रहो हि मायाप्रभवस्य कारणं ग्रहाद्विमोके नहि सास्ति कस्यचित् ॥ ५ ॥

त्वयीति ॥ यतो भेदधियो जगत्प्राणिजातमोहमाकुलीभावमकृतार्थता-भिमानलक्षणया मायया उपैति नित्यं संबध्यते सा भेदधीस्त्वयि मनसि प्रशान्ते नचास्ति । सुषुप्तौ त्वदभावे तदभावदर्शनादित्यर्थः । अन्वयव्यतिरेकाभ्यां भेदग्रहस्यानर्थहेतुतामुपपादयति—ग्रहो हीति । सुषुप्त्यादौ भेदग्रहाभावे मायामोहयोरदर्शनादित्यर्थः ॥ ५ ॥

इतश्च मनश्चेष्टितं वृथेत्याह—

न मेऽस्ति मोहस्तव चेष्टितेन हि प्रबुद्धतत्त्वस्त्वसितो ह्यविक्रियः । न पूर्वतत्त्वोत्तरभेदता हि नो वृथैव तस्माच मनस्तवेहितम् ॥ ६ ॥

न मेऽस्तीति ॥ असितो बन्धरहितः । प्रबुद्धतत्त्वस्वभावमसितत्वमविक्रियत्वं च व्युत्पादयति—न पूर्वेति । पूर्वतत्त्वं पूर्वावस्था पूर्वतत्त्वादुत्तरभेदता उत्तरकाले तत्त्वभेदता नोऽस्माकं नास्ति तत्त्वप्रबोधात्पूर्वोत्तरकालयोर्न मे विशेषोऽस्तीत्यर्थः । हि यस्मादेवं तस्मात् । स्वस्कृतातिशयाभावादित्यर्थः ॥ ६ ॥

सर्वदृश्यातिवर्तित्वाचात्मन आगन्तुकातिशयायोगं साधयति—

यतश्च नित्योऽहमतो न चान्यथा विकारयोगे हि भवेदनित्यता । सदा प्रभातोऽहमतो हि चाद्वयो विकल्पितं चाप्यसदित्यवस्थितम् ॥ ७ ॥

यतश्चेति ॥ अन्यथा अनित्यता । ननु कुतोऽनित्यताप्राप्तिर्या निषिध्यते तत्राह—विकारेति । परिस्पन्दपरिणामादिरूपविक्रियाभावेऽपि प्रकाशप्रकाशसंसर्गरूपविक्रिया स्यादित्याशङ्क्याह—सदेति । 'सकृद्विभातो ह्येवैष ब्रह्मलोकः', 'पश्यन्वै तन्न पश्यती'त्यादिश्रुतेरित्यर्थः । सति दृश्यभेदे कथमद्वयत्वमत आह—विकल्पितमिति । रज्जुसर्पादिवदागन्तुकत्वादसदित्यवस्थितं निश्चितमित्यर्थः ॥ ७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनसैव सद्वितीयत्वमात्मन इत्याशङ्क्याह—

अभावरूपं त्वमसीह हे मनो निरीक्ष्यमाणे न हि युक्तितोऽस्तिता। सतो ह्यनाशादसतोऽप्यजन्मतो द्वयं च चेतस्तव नास्तितेष्यते ॥ ८ ॥

अभावरूपमिति ॥ यद्वा भेदकल्पकस्य मनसोऽभावरूपादपि सद्वाद्वयत्वमात्मन इत्याह—अभावरूपमिति। युक्तितो निरीक्ष्यमाणे तवास्तिता नहीत्युक्तां युक्तिमाह—सतो हीति। तथाचाह भगवान् 'नासतो विद्यते भावो नाभावो विद्यते सत' इति द्वयं जन्मविनाशाख्यं ते तव। अतस्तव नास्तितेष्यते परमार्थसत्त्वं नेष्यत इत्यर्थः ॥ ८ ॥

'बीजाभावे कुतः फल'मिति न्यायेनाद्वैतत्वमात्मनो विशदयति—

द्रष्टा च दृश्यं च तथा च दर्शनं भ्रमस्तु सर्वस्तव कल्पितो हि सः। दृशेश्च भिन्नं न हि दृश्यमीक्ष्यते स्वपन्प्रबोधेन तथा न भिद्यते ॥ ९ ॥

द्रष्टा चेति ॥ तव कल्पितस्त्वत्कृतः। किंचागन्तुकस्याविज्ञातसत्त्वाभावादप्यात्माद्वय इत्याह—दृशेश्चेति। जडस्य स्वतःस्फुरणाभावादस्फुरतश्च सत्त्वे प्रमाणाभावादित्यर्थः। तथासति स्वपन्नात्मा प्रबोधेन जाग्रदादिना न भिद्यते। यथा स्वापावस्थायामद्वितीय एव तथावस्थान्तरेऽपीत्यर्थः। स्वापे चाद्वितीयत्वं 'सलिल एको द्रष्टाऽद्वैतो भवति। अथास्मिन्प्राण एवैकधा भवति तदेवं वाक् सर्वैर्नामभिः सहाप्येती'त्यादि श्रुतिसिद्धम् ॥ ९ ॥

एवं विकल्पाभावेऽपि विकल्पना सत्यास्तीति पुनरद्वैतानुपपत्तिरित्याशङ्क्याह—

विकल्पना चापि तथाद्वया भवेदवस्तुयोगात्तदलातचक्रवत्। न शक्तिभेदोऽस्ति यतो न चात्मनां ततोऽद्वयत्वं श्रुतितोऽवसीयते ॥ १० ॥

विकल्पना चापीति ॥ तथा दृश्यवदेव विकल्पनापि न भिद्यतेति पूर्वश्लोकगतानुकर्षणार्थो चाशब्दः। किंत्ववस्तुयोगादवस्तुविषयकतया

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

तन्निरूप्यत्वादद्वयाधिष्ठानातिरिक्तस्वरूपरहिता भवेत्तत्र लोके त्वलातचक्रव-द्भ्रमदुल्मुकस्य चक्राकारत्ववदिति योजना । यथा भ्रमतोऽलातस्य चक्राका-रता न पृथग्वस्तु तथा विकल्पनापि चिदात्मातिरेकेण पृथग्वस्तुसती न भवतीत्यर्थः । तथापि नात्मनोऽद्वयत्वं दृष्टिश्रुतिमत्यादिशक्तिरूपस्य स्वगत-भेदस्य सत्त्वात्तथा प्रतिशरीरमात्मभेदप्रथनात्सजातीयभेदोपपत्तेश्चेत्याशङ्क्य श्रुतिविरोधान्नैवमित्याह—न शक्तिभेद इति । तथाच श्रुतिः 'अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येवे'ति चिदात्मनो दृष्ट्यादिभेदस्योपाधिकृतां दर्शयति । 'एको देवो बहुधा संनिविष्टः' 'एकं सन्तं बहुधा कल्पयन्ति' 'एकस्तथा सर्वभूतान्तरात्मे'त्यादिश्रुतिरात्मनः सर्वत्रैकत्वमाह । तथा भेद-निषेधश्रुतिस्मृतयोऽप्यत्रोदाहार्याः ॥ १० ॥

आगमबाह्यानामात्मभेदकल्पनां युक्त्या निराकरोति—

मिथश्च भिन्ना यदि ते हि चेतनाः क्षयस्तु तेषां परि-
माणयोगतः । ध्रुवो भवेद्भेदवतां हि दृष्टतो जगत्क्षय-
श्चापि समस्तमोक्षतः ॥ ११ ॥

मिथश्चेति ॥ चेतना आत्मानो यदि मिथो भिन्नाः स्युस्तर्हि ये भिन्नास्ते परिमिता यथा मृत्तालाङ्कुरादयो ये च परिमितास्ते विनाशिनस्तद्वदेवेत्यात्मनां विनाशित्वप्रसङ्ग इति समुदायार्थः । परिमाणयोगतस्तेषां क्षयस्तु ध्रुवो भवेत् । भेदवतां हि दृष्टतो विनाशदर्शनादिति योजना । किंच भेदपक्षे एकैकस्मिन्कल्पे एकैकमुक्तावप्यनन्तेषु गतकल्पेष्वनन्तानां जीवानां मुक्ति-संभवादिदानीं समस्तमोक्षतो भोक्त्रभावे तदर्थानां भोग्यानां जगतां क्षय-श्चापि भवेदतो भेदपक्षो दुर्युक्तिक इत्यर्थः ॥ ११ ॥

ननु तथापि जगज्जीवेश्वरादिभेदस्य विद्यमानत्वात्कथमुक्तदोषपरिहार इत्याशङ्क्याह—

न मेऽस्ति कश्चिन्न च सोऽस्मि कस्यचिद्यतोऽद्वयोऽहं न
हि चास्ति कल्पितम् । अकल्पितश्चास्मि पुरा प्रसिद्धितो
विकल्पनाया द्वयमेव कल्पितम् ॥ १२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न मेऽस्तीति ॥ यतोऽहमद्वयो वस्तुतो मे गुणभूतः प्रधानभूतो वान्यादृशो वा न कश्चिदस्ति। यस्यापि कस्यचिदहमस्मि सोऽपि न चास्तीति संबन्धः। यच्च कल्पितं जगत्तच्च नह्यस्ति। तथाच जीवेश्वरजगद्भेदस्य मय्यद्वये कल्पितत्वात्कल्पितस्य प्रमाणसहिष्णुताया अलंकारत्वान्नास्त्यसा- दुक्तदोषप्रसङ्ग इत्यर्थः। ननु द्वैतवदद्वैतस्यापि पदार्थत्वाविशेषात्कल्पितत्वं तदवस्थमित्याशङ्क्य निरधिष्ठानकल्पनायोगान्निरवधिकबाधायोगाच्च सर्वक- ल्पनायाः प्रागेव सिद्धकल्पितबाधावधितया पश्चादप्यवशिष्यमाणं न कल्पितं किंतु स्वतःसिद्धं वस्त्वद्वयशब्देनोच्यत इत्याह—अकल्पित इति। विकल्पनायाः पुरा प्रसिद्धितोऽहमकल्पितोऽस्मि। चकारादूर्ध्वमप्यवधिभूत- त्वान्मध्ये च तत्साक्षित्वादकल्पित एवासीति गृह्यते। परिशेषात्सापेक्षं द्वयमेव कल्पितमित्यर्थः ॥ १२ ॥

उक्तमेव स्पष्टीकुर्वन्नात्मनो विकल्पनाद्यविषयत्वमाह—

विकल्पना चाप्यभवे न विद्यते सदन्यदित्येवमतो न नास्तिता। यतः प्रवृत्ता तव चापि कल्पना पुरा प्रसि- द्धेर्न च तद्विकल्पितम् ॥ १३ ॥

विकल्पना चापीति ॥ नास्ति भव उत्पत्तिर्यस्य तदभवं तस्मिन्नभवे नित्ये सदन्यत्सतोऽन्यदसदित्यपि विकल्पना नच विद्यते। अतएवंसति न नास्तिता। आत्मनो नित्यत्वादित्यर्थः। किंचामनस्कस्य कल्पनानुदयान्मन- सश्चागन्तुकतया स्वरूपसत्ताभावात्तदपि सविलासं यत्र कल्पितं तत्र कल्प- नालम्बनं किंतु सर्वकल्पनासाक्षित्वेन पूर्वापरकालकलनाकलितं कूटस्थमेवा- त्मतत्त्वमित्याह—यत इति। तव मनस इत्यर्थः। स्वकल्पनाया अपि पुरा प्रसिद्धेरित्यर्थः ॥ १३ ॥

ननु यदुपलभ्यते तदस्तीत्यभ्युपगम्यते यन्नोपलभ्यते तन्नास्तीत्युपलभ्यते च द्वैतं नाद्वैतमित्याशङ्क्य दर्शनादर्शने न वस्तुसत्त्वासत्त्वयोः कारणे किंत्वन्य एव तन्निश्चयहेतुरित्यभिप्रेत्याह—

असद्द्वयं तेऽपि हि यद्यदीक्ष्यते न दृष्टमित्येव न चैव

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नास्तिता । यतः प्रवृत्ता सदसद्विकल्पना विचारवद्वापि तथाद्वयं च सत् ॥ १४ ॥

असद्वयमिति ॥ हे मनः, ते तव गोचरीभूतं यद्यदीक्ष्यते तत्तद्द्वयं द्वैतं दृष्टमप्यसत् । स्वप्नवद्दृष्टनष्टस्वरूपत्वात् । तथा न दृष्टं न दृश्यत इत्येवमेतावता वस्तुतो नास्ति । नहि नीरूपस्य वायोश्चक्षुषानुपलम्भेऽपि नास्तिता भवति किंत्वस्तितैव । सतोऽपि वस्तुनो द्रष्टुरसामर्थ्याद्वा दर्शनायोग्यत्वाद्वाप्यदर्शनसंभवादित्यर्थः । नन्वदृष्टमपि नास्तीति शशशृङ्गादि प्रसिद्धम् । सत्यम् । तथापि 'लब्धरूपं क्वचित्किंचित्तादृगेव निषिध्यते । विधानमन्तरेणातो न निषेधस्य संभव' इति न्यायेन द्वैतमस्ति नास्तीति विप्रतिपत्त्यालम्बनं किमप्यास्थेयमेव, अन्यथा विकल्पप्रसरायोगादित्यभिप्रेत्याह—यतः प्रवृत्ता सदसद्विकल्पनेति । यतो यस्मिन्नधिष्ठाने प्रतीयमाना विकल्पना तदस्त्यकल्पितरूपमित्यर्थः । विकल्पालम्बनत्वेनाधिष्ठानसत्तामुक्त्वाऽवधित्वेनापि तत्सत्त्वमाह—विचारवद्वेति । वाशब्दश्चार्थः । यथा विचारो निर्णयमन्तरेण न पर्यवस्यति तथा सदद्वयं विना न विकल्पः प्रशाम्यति । अतः सर्पधारादण्डमालादिविकल्पेष्वनुगम्यमानतया अधिष्ठानत्वेन पुनः सर्वविकल्पनिषेधावसानतयावधित्वेनानुवर्तमानाऽविकल्पिता निषिद्धरज्जुस्वरूपवदध्यात्मादिविकल्पाधिष्ठानसन्मात्रत्वेन तन्निषेधावधित्वेन चाविकल्पितमनपोह्यं चात्मतत्त्वमद्वयमस्तीत्येवोपलब्धमिति तात्पर्यार्थः ॥ १४ ॥

किंचोक्तविधया दर्शनमात्रात्सत्त्वासत्त्वनिश्चयासंभवाद्विचारोऽभ्युपेयस्तस्मिंश्च क्रियमाणे सदेवाद्वयमवशिष्यत इत्यभिप्रेत्याह—

सदभ्युपेतं भवतोपकल्पितं विचारहेतोर्यदि तस्य नास्तिता । विचारहानाच्च तथैव संस्थितं न चेत्तदिष्टं नितरां सदिष्यते ॥ १५ ॥

सदभ्युपेतमिति ॥ सद्वस्तु नास्तीति वदता तन्निर्णयाय विचारोऽभ्युपगम्यते न वा । यदि सोऽभ्युपगम्यते तदा भवता सद्वस्त्वभ्युपेतं, यतो विचारहेतोर्विचारसिद्ध्यर्थमुपकल्पितमुपस्थापितं किमपि वस्तु सर्वैर्विचारकैरिति योजना । विचारो हि प्रमाणव्यापारस्य फलावसानत्वनिश्चयहेतुस्तर्कः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सच न प्रमेयमन्तरेण प्रसरमुपलभते प्रमितं च न बाध्यत इति सद्वस्तुसिद्धिरित्यर्थः । विपक्षे बाधकमाह—यदीति । यदि तस्य सद्वस्तुनो नास्तिता तदा प्रमाणप्रमेयप्रमातृनिरूप्यस्य विचारस्य हानादप्रवृत्तेश्चकारात्सद्भावनिर्णयहानाच्च तथैव संस्थितमनिर्णीतमेव संस्थितम् । तथाच वस्तुतत्त्वानवधारणादैहिकामुष्मिकार्थप्रवृत्तिहानिः स्यादिति भावः । एतेन विचारानभ्युपगमपक्षे च दोष उक्तो वेदितव्यः । अथाविचारितमनिर्णीतं च तत्किमपि नेष्टं चेत्तर्हि विचारनिर्णययोः सदवसानमन्तरेण पर्यवसानाभावान्नितरां सदिष्यते । सद्वस्त्विष्यत एवेत्यर्थः । यद्वा हे मनः, भवतोपकल्पितं द्वैतजातं विचारसिद्ध्यर्थं सदभ्युपेतम् । आत्मतत्त्वनिश्चयफलविचारप्रवृत्तयेऽस्तीति द्वैतमङ्गीकृतमित्यर्थः । यदि पुनस्तस्य नास्तिता शून्यतैव द्वैतस्य स्यात्तदा विचारहानाद्विचाराप्रवृत्तेश्चकारात्परमार्थनिर्णयाभावाच्च, तथैवाविचारितमनिर्णीतं च तत्त्वं संस्थितं स्यात् । अथ तत्त्वानिर्णये पुरुषार्थासिद्धेस्तदनिर्णीतस्वभावमिष्टं न चेत्स्यात्तर्हि नितरां सदिष्यते । विचार्यनिर्णये सति सर्वस्य सदवसानत्वाव्यभिचारादित्यर्थः । कोट्यन्तरस्फुरणं विना न संशयावतारस्तेन विना न विचारप्रवृत्तिस्तामृते न वस्तुतत्त्वनिर्णयस्तेन च विना न पुरुषार्थलाभ इति विचारार्थतया यथाप्रतिपन्नं द्वैतमभ्युपगतं न प्रामाणिकत्वेन । तथाच भुजंगं रज्जुत्वेन व्यवहरत इवातत्त्वं तत्त्वबुद्ध्या व्यवहरतोऽनर्थप्राप्तिसंभवात्तत्परिहाराय विचारेऽवश्यंभाविनि क्रियमाणे सर्वेषु विशेषेष्वस्तिताया अव्यभिचाराद्विशेषणाव्यभिचारान्मिथो व्यभिचारिणां चानृतत्वात्सन्मात्रमेव सत्यं न द्वैतरूपो विशेषाकार इति नितरां सिध्यतीति भावः ॥ १५ ॥

भवत्वेवं विचारान्यथानुपपत्त्या सद्वस्तुसिद्धिस्तदर्थक्रियां करोति न वा । आद्ये क्षणिकत्वापत्तिरित्यभिप्रेत्य द्वितीये तस्य नरशृङ्गादेरविशेष इति बौद्धः शङ्कते—

असत्समं चैव सदित्यपीति चेदनर्थवत्त्वान्नरशृङ्गतुल्यतः ।
अनर्थवत्त्वं त्वसति ह्यकारणं न चैव तस्मान्न विपर्ययेऽन्यथा ॥ १६ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

असत्समिति ॥ अनर्थवत्त्वात् । अर्थक्रियारहितत्वादित्यर्थः । श्रौतं सदसत्सममर्थक्रियाशून्यत्वान्नरशृङ्गवदित्यनुमानमप्रयोजकत्वेन दूषयति—अनर्थवत्त्वमिति । अनर्थवत्त्वं स्वसति असत्त्वे साध्ये न कारणं प्रयोजकं न भवति । स्वभावसत्त्वसंभवादित्यर्थः । अनर्थक्रियाकारित्वस्यासत्त्वव्याप्तौ संदिग्धानैकान्तिततामुक्त्वाऽर्थक्रियाकारित्वस्य सत्त्वव्याप्तावनैकान्तिततामाह—न चैव तस्मादिति । तस्मादर्थक्रियाकारित्वान्नैव सत्त्वं पदन्यासाद्यर्थक्रियाकारिणि कण्टकाद्यभावे सत्त्वव्यभिचारादित्यर्थः । हेतुनिरसनमुपसंहरति—न विपर्ययेऽन्यथेति । विपर्ययेऽर्थक्रियाकारित्वाभावेनान्यथा असत्त्वं न संभवति क्रियोत्पत्तेः पूर्वमुदासीनवस्तुदर्शनादन्यथासत्त्वार्थक्रिययोरन्योन्याश्रयापातादित्यर्थः ॥ १६ ॥

असिद्धश्चायं हेतुरित्याह—

असिद्धतश्चापि विचारकारणाद्वयं च तस्मात्प्रसृतिं च मायया । श्रुतेः स्मृतेश्चापि तथा हि युक्तितः प्रसिद्ध्यतीत्थं न तु युज्यतेऽन्यथा ॥ १७ ॥

असिद्धतश्चापीति ॥ न केवलमनैकान्तिकत्वादेरेवानुमानमप्रमाणमपि त्वसदभिमत आत्मनि पक्षसिद्धेश्चेत्यपेरर्थः । अर्थक्रियाकारित्वाभावमात्रं हेतुः परमार्थविशेषितदभावो वा । आद्येऽसिद्धिमाह—विचारकारणादित्यादिना । कूटस्थस्यापि सतो धर्मित्वेन विचारप्रवृत्तिकारणत्वात्, मायाद्वयशब्दवाच्यभेदप्रपञ्चप्रसरणहेतुत्वाच्चेत्यर्थः । मायया जगद्धेतुत्वं साधयति—श्रुतेरिति । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मिति श्रुतिः, 'मयाध्यक्षेण प्रकृतिः सूयते सचराचर'मित्यादिस्मृतिः । कार्यस्य वाचारम्भणत्वप्रतिपत्तिसाधकत्वन्यायो युक्तिः । इत्थं कूटस्थस्याप्यर्थक्रियाकारित्वं प्रसिध्यत्यतो हेत्वसिद्धिरित्यर्थः । द्वितीयं दृष्टान्तासिद्ध्या दूषयति—न त्विति । अन्यथा परमार्थतोऽर्थक्रियाकारित्वं स्थिरस्य क्षणिकस्य वा न युज्यते अक्रियस्याकारकत्वात्क्रियाकार्यं प्रत्यपि क्रियावत्त्वापत्तावनवस्थाप्रसङ्गादिति दिक् ॥ १७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु सर्वविकल्पहेतुत्वादद्वयस्य सर्वविकल्पयुक्तत्वमित्याशङ्क्याह—

**विकल्पनाच्चापि विधर्मकं श्रुतेः पुरा प्रसिद्धेश्च विकल्पतोऽद्वयः । न चेति नेतीति यथा विकल्पितं निषिध्यतेऽत्राप्यवशेषसिद्धये ॥ १८ ॥**

विकल्पनाच्चापीति ॥ विधर्मकं विरुद्धस्वभावमित्यर्थः । 'निष्कलं निष्क्रियमि'त्यादिश्रुतेः विकल्पतः पुरा प्रसिद्धेरिति युक्तेश्चेत्यर्थः । अद्वय इति च्छेदः । 'नेदं यदिदमुपासते' 'नेतिनेती'ति निषिध्यमानचेतनाचेतनविकल्पावसानसिद्धयेऽत्रापि निषेधवाक्येष्वविकल्पविधर्मकद्वयं निर्विशेषं सिद्धमित्याह—नचेतीति । यथा विकल्पितं नेतिनेतीति निषिध्यते, नच तथाऽद्वयमात्मतत्त्वं निषिध्यत इति योजना ॥ १८ ॥

यथोक्ते श्रुत्यर्थे ये विकल्पयन्ति तेऽनर्थं प्राप्नुवन्तीत्याह—

**अकल्पितेऽप्येवमजेऽद्वयेऽक्षरे विकल्पयन्तः सदसच्च जन्मभिः । स्वचित्तमायाप्रभवं च ते भवं जरां च मृत्युं च नियान्ति संततम् ॥ १९ ॥**

अकल्पित इति ॥ कूटस्थे भेदविकारसंसर्गशून्ये श्रुतिसिद्धे इति यावत् । सदसदस्ति नास्ति चकारात्कर्ता सविशेषो निर्विशेष इत्यादिप्रकारैः स्वचित्तमायाप्रभवं यथा स्यात्तथा विकल्पयन्तः ये ते जन्मभिस्तिर्यङ्मनुष्यजातिभिर्भवमुद्भवं जरा मृत्युं मरणं च संततं निरन्तरं नियान्ति नितरां गच्छन्तीति योजना । स्वचित्तमायाप्रभवमिति भवविशेषणं वा बुद्धिभ्रमकल्पितमित्यर्थः ॥ १९ ॥

सद्वस्तुनः कूटस्थाद्वयत्वं श्रुत्यादिप्रमाणसिद्धं तदन्यथाविकल्पनं पुरुषापराधनिबन्धनमित्युक्तमिदानीं तदेव युक्तितो द्रढयितुमुपक्रमते—

**भवाभवत्वं तु न चेदवस्थितिर्न चास्य चान्यस्थितिजन्म नान्यथा । सतो ह्यसत्त्वादसतश्च सत्त्वतो न च क्रिया कारकमित्यतोऽप्यजम् ॥ २० ॥**

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवाभवत्वमिति ॥ तुश्चार्थः किंचेत्यर्थे । द्वैतमुत्पद्यमानस्वभावमनुत्पद्यमानस्वभावमुभयस्वभावं वा । नाद्यः । तदा सापेक्षत्वेन शुक्तिरजतादिवन्मिथ्यात्वापातात् । न द्वितीयः । सदातनत्वापत्तौ तदभावव्यवहारानुदयप्रसङ्गात् । न तृतीयः । एकस्य विरुद्धोभयस्वभावत्वायोगादित्यभिप्रेत्य चतुर्थमनूद्य दूषयति—भवाभवत्वमिति । भवश्चाभवश्च भवाभवौ तयोर्भावः भवाभवत्वम् । अस्य द्वैतस्य भवाभवत्वं चेद्विरोधान्नेष्यते तद्यावस्थितिरवस्थानं सत्त्वं नच स्यादिति शेषः । नह्युभयस्वभावविलक्षणं क्वचित्सदुपलब्धमस्तीत्यर्थः । चापरं यदि द्वैतस्य जन्मेष्यते तदा स्वतएव जन्मासंभवादन्यस्मात्तद्वक्तव्यं तदपि सत्स्वभावमसत्स्वभावं वा यतोऽद्वैतस्य जन्मेत्याकाङ्क्षायां सर्वथापि नोपपद्यत इत्याह—अन्यस्थितिजन्म नान्यथेति । अन्यस्मिन्स्थितौ सति न जन्म । सतो न जन्मेत्यर्थः । अन्यथान्यस्थितौ जन्म नेत्युपरज्यते असतोऽपि न जन्मेत्यर्थः । पक्षद्वयेऽपि दूषणमाह—सत इति । सत उपादानत्वे विकारित्वापत्तौ विनाशादसत्त्वप्रसङ्गादसतश्चोपादानत्वे सत्त्वतः सत्त्वापत्तेः । नहि शून्यमुपादानं स्यात्तस्य कार्येष्वननुगमादित्यर्थः । तथाच वस्तुनः स्वभाववैपरीत्यायोगान्न सत्कार्यं द्वैतात्मना जायते नाप्यसदित्युत्पत्तिपक्षोऽपि दुर्निरूप इति भावः । एवमुत्पाद्योत्पादकयोः स्वभावनिरूपणे सत्युत्पत्तितत्कारकविशेषयोः सुतरामनिरूपिताकारता सिद्धेत्याह—नच क्रियाकारकमिति । उपसंहरति—अतोऽप्यजमिति । उक्तयुक्तितोऽप्यजं निर्विशेषमद्वयमात्मतत्त्वमित्यर्थः ॥ २० ॥

नच क्रियाकारकमित्युक्तमेव स्फुटयन्नजत्वं वस्तुनः साधयति—

अकुर्वदिदं यदि वास्य कारकं न किंचिदन्यन्नतु नास्त्यकारकम् । सतो विशेषादसतश्च सच्युतौ तुलां तयोर्यद्वदनिश्चयान्न हि ॥ २१ ॥

अकुर्वदिति ॥ अस्य द्वैतजन्मनः कारकमकुर्वदिदं निर्व्यापारं कारकमिष्टं चेदित्यर्थः । अन्यदिति द्वितीयपादस्थं पदमादाय यदिवान्यदकुर्वदिदं वेत्यर्थः । तत्राद्येऽतिप्रसङ्गदोषमाह—न किंचिदन्यन्ननु निश्चितं किंचिदपि कारकं नास्तीति न अपितु सर्वं सर्वस्य सर्वदा कारकं स्यादित्यर्थः । द्वितीये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारकत्वानुपपत्तिदोषमाह—अकारकमिति। अक्रियस्य कुर्वत्त्वायोगात्क्रियावत्त्वे नित्ये सदा कार्यप्रसङ्गादनित्ये च क्रियावदन्तरापेक्षायामनवस्थाप्रसङ्गात्तदनपेक्षायामात्माश्रयापत्तेः कुर्वत्त्वपक्षे कारकत्वासिद्धिरित्यर्थः। अथवा प्रथमे विकल्पे न किंचिदकारकमिति निराकरणपदान्वयः। सर्वमेव कारकं स्यादित्यर्थः। द्वितीयदूषणं ननु नास्तीति कुर्वतः कारकत्वानिरूपणादित्यर्थः। कथमनिरूपणमिति चेत्तत्र वक्तव्यं किं सदवस्थं कुर्वदसदवस्थं वा, नोभयथापीत्याह—सतोऽविशेषादसतश्चेति। असतश्चाविशेषादिति संबध्यते। विशेषवत्त्वे वैरूप्यापत्तेरविशेषे च सदा कार्यं स्यान्न वा स्यादित्यर्थः। अथ सतोऽसतो वा पूर्वसत्त्वासत्त्वप्रच्युत्यवस्थायां कार्यं स्यादिति भवेत्कारकत्वमिति मतं तत्रावस्थाप्रच्युतिकार्ययोर्यौगपद्यमभिमतं क्रमो वा। नाद्य इत्याह—सच्युताविति। व्यवस्थायां कार्यमित्युपलक्षणम्। असच्च्युतौ च तुलाया अन्तयोः कोट्योर्युगपन्नमनोन्नमनमनुभवतोः कार्यकारणभावो न निश्चीयते, तथा कार्यकारणस्वरूपभेदो नहि निश्चीयत इत्यर्थः। द्वितीयेऽनवस्थाप्रसङ्गोऽवस्थाप्रच्युतेरपि कार्यतया तस्या अपि तथाविधपूर्वकत्वापेक्षणादिति द्रष्टव्यम्॥ २१॥

वस्तुनोऽवस्थान्तरापत्तिमभ्युपगम्यैतदवोचाम वस्तु सतोऽसतो वाऽवस्थान्तरं नोपपद्यत इति न कस्यापि कार्यत्वं कारणत्वं वा विद्यत इत्याह—

न चेत्स इष्टः सदसद्विपर्ययः कथं भवः स्यात्सदसद्व्यवस्थितौ। विभक्तमेतद्द्वयमप्यवस्थितं न जन्म तस्माच्च मनो हि कस्यचित्॥ २२॥

न चेदिति॥ एवमुक्तदोषपरिहारात्सदसद्विपर्ययश्चेन्नेष्टस्तदा सदसतोः स्वरूपव्यवस्थितौ भवः कथं स्यात्। कुतः यत एतद्द्वयमपि सच्चासच्च विभक्तं परस्परसंसर्गशून्यं व्यवस्थितं न पूर्वापरीभावोऽनयोर्मिथो वान्यापेक्षया वेत्यर्थः। हे मनः, हि यस्मादेवं तस्मान्न कस्यचिदपि जन्म विद्यत इत्यवधारयेत्यर्थः॥ २२॥

भवतु वा जन्म यस्यकस्यापि तथापि न मे ब्रह्मभूतस्य काचित्क्षतिर्वृद्धिर्वेत्याह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

अथाभ्युपेत्यापि भवं तवेच्छतो ब्रवीमि नार्थस्तव चेष्टितेन मे। न हानवृद्धी न यतः स्वतोऽसतो भवोऽन्यतो वा यदि वास्तिता तयोः ॥ २३ ॥

अथाभ्युपेत्यापीति ॥ मनसश्चेष्टितेनात्मनो नार्थोऽस्तीत्येव तत्प्रपञ्चयति—न हानवृद्धी इति । मे स्त इति योज्यम् । कुत इत्यत आह—न यत इति । यतो यस्मादसत आत्मन्यविद्यमानस्य हानस्य वृद्धेर्वा भव उद्भवः स्वतोऽन्यतो वा हेत्वन्तराद्वा न संभवतीति योजना । यदि वा तयोर्हानवृद्ध्योर्यद्यात्मन्यस्तिता तथापि तव चेष्टितेन मे नार्थ इति संबन्धः । सिद्धेऽर्थे त्वच्चेष्टाया अकिंचित्करत्वादित्यर्थः ॥ २३ ॥

हीयमानोपचीयमानयोरात्मनि संबन्धानिरूपणाच्च न हानवृद्धी स्त इत्याह—

ध्रुवा ह्यनित्याश्च न चान्ययोगिनो मिथश्च कार्यं न च तेषु युज्यते । अतो न कस्यापि हि किंचिदिष्यते स्वयं च तत्त्वं न निरुक्तिगोचरम् ॥ २४ ॥

ध्रुवा इति ॥ ध्रुवाः स्थिराः कूटस्था अनित्याः क्षणिकाश्च पदार्था हि निश्चितमन्ययोगिनो न भवन्ति, स्थिराणामविकारित्वात्क्षणिकानामन्यसंबन्धकालपर्यन्तमवस्थानासंभवादित्यर्थः । मिथश्चान्योन्यमपि स्थिरास्थिरयोर्न संबन्धित्वं संभवति, संबन्धस्य संबन्धिसंबद्धत्वविकल्पासहत्वादित्यर्थः । अतएव तेषु न कार्यं किमपि युज्यते घटते । संबन्धिताविकारभेदसत्त्वनिराकरणमुपसंहरति—अत इति । न किमपि कस्यापि संबन्धि परमार्थत इष्यत इत्यर्थः । ननु कथमात्मनोऽन्यसंबन्धाभावो वेदान्तवाक्यप्रमाणं प्रति प्रमेयत्वोपगमादित्यत आह—स्वयं चेति । तत्त्वमात्मस्वरूपं स्वयं निरुपाधिकं न निरुक्तेर्वाक्यस्य मुख्यया वृत्त्या गोचरो विषयः शब्दप्रवृत्तिनिमित्तधर्माभावात्किंतु लक्षणया शब्दस्य तत्र पर्यवसानमपेक्ष्य वेदान्तप्रमेयत्वं तस्याङ्गीकृतमिति न विरोध इत्यर्थः ॥ २४ ॥

तदेवं दुर्निरूपाद्वैतसाक्षिणोऽसङ्गाद्वयानन्दरूपस्य स्वप्रकाशतया प्रकाश-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानं स्वरूपं श्रुतियुक्तिभ्यां निश्चित्य पुमान् कृतकृत्यो भवतीति द्वैताभासनिराकरणफलमुपसंहारव्याजेनाह—

**समं तु तस्मात्सततं विभातवद्द्वयाद्विमुक्तं सदसद्विकल्पितात्। निरीक्ष्य युक्त्या श्रुतितस्तु बुद्धिमानशेषनिर्वाणमुपैति दीपवत् ॥ २५ ॥**

समं त्विति ॥ सत्त्वासत्त्वाभ्यां विकल्पिताद्द्वयाद्द्वैतावभासात्सततं विमुक्तमिति संबन्धः। सततं समं विभातवत्प्रकाशमानमिति योजना। दीपवत्सहसैवाशेषस्य बन्धस्य निर्वाणं परिसमाप्तिमुपैति। निरीक्षणनिर्वाणयोर्न व्यवधानं किमप्यस्तीत्यर्थः ॥ २५ ॥

उक्तलक्षणस्यात्मतत्त्वस्य निरीक्षणं किं विषयत्वेनाविषयत्वेन वेति जिज्ञासायामविषयत्वेनैवेत्याह—

**अवेद्यमेकं यदनन्यवेदिनां कुतार्किकाणां च सुवेद्यमन्यथा। निरीक्ष्य चेत्थं त्वगुणग्रहोऽगुणं न याति मोहं ग्रहदोषमुक्तितः ॥ २६ ॥**

अवेद्यमिति ॥ सर्वसाक्षिप्रत्यगात्मनोऽन्यन्न भवत्यद्वयं ब्रह्मेति ये वेदिनस्तेषामनन्यवेदिनामवेद्यम्। अन्यथा भेदेन विषयतया वेदिनां कुतार्किकाणां सुवेद्यं परिच्छिन्नतया सुज्ञेयम्। शास्त्रयुक्तिविचारप्रयासं विना स्वमत्यनुसारेण सुखबोधमित्यर्थः। गुणेषु सत्त्वादिषु सविकारेषु ग्रहोऽभिनिवेशो यस्य स गुणग्रहः। न गुणग्रहोऽगुणग्रहः पुमान्देहाद्यभिमानहीन इति यावत्। अगुणं निर्विशेषमात्मतत्त्वमित्थमवेद्यमित्याद्युक्तरूपं निरीक्ष्यालोच्य चकारादपरोक्षतयानुभूय मोहं न याति। तत्र हेतुमाह—ग्रहदोषमुक्तित इति। ग्रहरूपाद्दोषान्मुक्तितो मुक्तेः मोहहेत्वज्ञानतत्कार्यबाधादित्यर्थः ॥ २६ ॥

कस्मादेवं महता प्रयत्नेनाविषयतया ब्रह्मात्मनो वेदनमिष्यते तत्राह—

**अतोऽन्यथा न ग्रहनाश इष्यते विमोहबुद्धेर्ग्रह एव**

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारणम् । ग्रहोऽप्यहेतुस्त्वनलस्त्वनिन्धनो यथा प्रशान्तिं परमां तथा व्रजेत् ॥ २७ ॥

अतोऽन्यथेति ॥ अत उक्तविधादात्मज्ञानादन्यथान्यस्माद्धेत्वन्तरात्प्रकारान्तराद्वा न ग्रहनाशो मिथ्याज्ञाननिवृत्तिरिष्यते । 'नान्यः पन्था विद्यतेऽयनाये'ति श्रुतेः । मास्तु तर्हि ग्रहनाश इत्यत आह—विमोहेति । ग्रहे सकारणे सति विमोहबुद्धेर्देहगेहादावहंममेत्याद्यभिनिवेशधियः सर्वानर्थबीजभूताया अनिवृत्तिः स्यादित्यनिर्मोक्षप्रसङ्ग इत्यर्थः । ननु भवतु ग्रहनाशान्मोहनाशो ग्रहनाश एव कुतः ब्रह्मात्मज्ञानादितिचेन्न । ज्ञानादज्ञानस्यैव निवृत्तिसंभवाद्ग्रहनिवृत्तिकारणमन्यदेष्टव्यमित्याशङ्क्याज्ञानकार्यत्वाद्ग्रहस्य तन्निवृत्तौ स्वयमेव निवर्तत इति सदृष्टान्तमाह—ग्रहोऽपीति । अहेतुर्निरुपादानः उपादाननिवृत्तौ पुनः प्ररोहहेत्वभावात्परमां निरतिशयां शान्तिमुपशान्तिं मोक्षलक्षणां व्रजेदित्यर्थः ॥ २७ ॥

प्रकरणसमाप्तौ गुरुनमस्काररूपं मङ्गलमाचरति—

विमथ्य वेदोदधितः समुद्धृतं सुरैर्महाब्धेस्तु यथा महात्मभिः । तथाऽमृतं ज्ञानमिदं हि यैः पुरा नमो गुरुभ्यः परमीक्षितं च यैः ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यशिष्यस्य श्रीशंकरभगवतः कृतिः सकलवेदोपनिषत्सारोपदेशसाहस्री समाप्ता ॥

विमथ्येति ॥ यथा सुरैर्दैवैर्महात्मभिर्महाब्धेः क्षीरसागरादमृतं समुद्धृतं पुरा पूर्वं तथा यैर्महात्मभिः गुरुभिर्वेदरूपादुदधितो विमथ्यालोड्येदं प्रकरणरूपेण मया प्रकाशितं ज्ञानामृतं समुद्धृतं पुरा पूर्वं तथा यैः परमात्मतत्त्वं चेक्षितमपरोक्षीकृतं तेभ्यो गुरुभ्यो नम इति योजना । अथवा यैर्गुरुभिर्निमित्तभूतैर्मया परं चेक्षितमिति योजना । 'तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम' इत्यादिश्रुतेः । 'निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् । अनुव्रजाम्यहं नित्यं पूयेयमङ्घ्रिरेणुभि' रिति भगवद्वचनाच्च युक्तमत्र गुरुसुजनपूजनमित्यर्थः ॥ २८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपदेशसहस्रीयं विवृता हि महात्मभिः ।
श्रद्धावेशान्मयाप्यस्याः पदयोजनिका कृता ॥ १ ॥

समस्तवेदार्थरहस्यगद्य-
पद्यप्रबन्धार्थतयावबोधः ।
कथं नु मादृङ्मतिविम्बितः स्या-
द्यथापि भक्त्याहमिहास्मि नुन्नः ॥ २ ॥

हृद्यन्तराविष्कृतरामसूतें-
स्तथा गुरूणां विपुलप्रसादात् ।
यथाकथंचिद्रचितेन विष्णु-
रनेन तुष्यत्वखिलान्तरात्मा ॥ ३ ॥

इति श्रीमच्छंकराचार्यकृतोपदेशसाहस्र्याः पदयोजनिकानामटीका कृष्णतीर्थशिष्यरामतीर्थविरचिता समाप्ता ॥



C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

| २००२ | शाके १८६७ | | | | | | करण | | | योगाः | ए. | अ | फा | चन्द्रराशि प्रवेशः | | | सूर्योदयः | | सूर्यास्त | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २५ | आ॰ | ५७ | ४३ | गं. | ४० | ४५ | बव | ७ | २५ | काल | २८ | ११ | २२ | | | | ५ | १४ | ६ | ४६ |
| १३ | पुन. | ५७ | १९ | वृ॰ | ३६ | ८ | कौ | ४ | १३ | सुस्थिर | २९ | १२ | १ | क॰ | ४२ | २५ | ५ | १४ | ६ | ४६ |
| ८ | पु॰ | ५८ | ११ | ध्रु॰ | ३२ | २७ | ग. | २ | ८ | मातङ्ग | ३० | १३ | २ | | | | ५ | १३ | ६ | ४७ |
| १३ | श्ले॰ | ६० | ० | व्या॰ | २९ | ४९ | वि | १ | १३ | अमृत | ३१ | १४ | ३ | | | | ५ | १३ | ६ | ४७ |
| ३३ | श्ले॰ | ० | १५ | ह॰ | २८ | ९ | श॰ | १ | ३३ | मृत्यु | १ | १५ | ४ | सिं. | ० | १५ | ५ | १३ | ६ | ४७ |
| २० | म॰ | ३ | ३९ | व॰ | २७ | ३० | नै॰ | ३ | २० | पद्म | २ | १६ | ५ | | | | ५ | १३ | ६ | ४७ |
| ७ | पू. फा | ८ | ७ | सि॰ | २७ | ५३ | व॰ | ६ | ८ | छत्र | ३ | १७ | ६ | क. | २० | ३० | ५ | १२ | ६ | ४८ |
| १ | उ. फा | १३ | ३७ | व्य | २८ | ४० | बव | १० | १ | श्रीवत्स | ४ | १८ | ७ | | | | ५ | १२ | ६ | ४८ |
| ४० | ह॰ | १९ | ४१ | व | ३० | ४ | कौ | १४ | ४० | सौम्य | ५ | १९ | ८ | तु. | ५३ | ४ | ५ | १२ | ६ | ४८ |
| ३२ | चि॰ | २६ | २० | प॰ | ३१ | ४८ | ग | १९ | ४२ | काल | ६ | २० | ९ | | | | ५ | १२ | ६ | ४८ |
| ४३ | स्वा | ३२ | ४८ | शि | ३३ | २३ | वि | २४ | ४३ | सुस्थिर | ७ | २१ | १० | | | | ५ | ११ | ६ | ४९ |
| १४ | वि | ३८ | ४७ | सि | ३४ | ३५ | वा | २९ | १४ | मातङ्ग | ८ | २२ | ११ | वृ॰ | २२ | १७ | ५ | ११ | ६ | ४९ |
| २ | अनु | ४४ | ० | सा | ३५ | ११ | कौ | १ | ८ | अमृत | ९ | २३ | १२ | | | | ५ | ११ | ६ | ४९ |
| ४१ | ज्ये॰ | ४८ | ४ | शु | ३४ | ५३ | ग. | ४ | २१ | काण | १० | २४ | १३ | ध॰ | ४८ | ४ | ५ | ११ | ६ | ४९ |
| १६ | मू॰ | ५१ | १ | शु॰ | ३३ | ४६ | वि | ६ | २८ | लुम्बक | ११ | २५ | १४ | | | | ५ | ११ | ६ | ४९ |

## दैनिक होरालग्न सारणीयम्

| ति. ल. | १ चं. घं. मि. | २ मं. घं. मि. | ३ बु. घं. मि. | ४ वृ. घं. मि. | ति. ला. | ५ घं. मि. | ६ घं. मि. | ७ घं. मि. | ८ चं. घं. मि. | घं. |
|---|---|---|---|---|---|---|---|---|---|---|
| वृ॰ | ५ २८ | ५ २४ | ५ २० | ५ १६ | मि॰ | ७ २५ | ७ २१ | ७ १७ | ७ १३ | |
| मि॰ | ७ ४१ | ७ ३७ | ७ ३३ | ७ २९ | क॰ | ९ ४३ | ९ ३९ | ९ ३५ | ९ ३१ | |
| क॰ | ९ ५९ | ९ ५५ | ९ ५१ | ९ ४७ | सिं॰ | ११ ५७ | ११ ५३ | ११ ४९ | ११ ४५ | १ |
| सिं॰ | १२ १३ | १२ ९ | १२ ५ | १२ १ | क॰ | २ १० | २ ६ | २ २ | १ ५८ | |
| क॰ | २ २६ | २ २२ | २ १८ | २ १४ | तु॰ | ४ २६ | ४ २२ | ४ १८ | ४ १४ | |
| तु॰ | ४ ४२ | ४ ३८ | ४ ३४ | ४ ३० | वृ॰ | ६ ४३ | ६ ३९ | ६ ३५ | ६ ३१ | |
| रा. | रा. | रा. | रा. | रा. | रा. | रा. | रा. | रा. | रा. | |
| वृ॰ | ६ ५९ | ६ ५५ | ६ ५१ | ६ ४७ | ध॰ | ८ ४९ | ८ ४५ | ८ ४१ | ८ ३७ | |
| ध॰ | ९ ५ | ९ १ | ८ ५७ | ८ ५३ | म॰ | १० ३५ | १० ३१ | १० २७ | १० २३ | १ |
| म॰ | १० ५१ | १० ४७ | १० ४३ | १० ३९ | कुं॰ | १२ ७ | १२ ३ | ११ ५९ | ११ ५५ | १ |
| कुं॰ | १२ २३ | १२ १९ | १२ १५ | १२ ११ | मी॰ | १ ३८ | १ ३४ | १ ३० | १ २६ | |
| मी॰ | १ ५४ | १ ५० | १ ४६ | १ ४२ | मे॰ | ३ १६ | ३ १२ | ३ ८ | ३ ४ | |
| मे॰ | ३ ३२ | ३ २८ | ३ [illegible] | ३ २० | वृ॰ | ५ १२ | ५ ८ | ५ ४ | ५ ० | |

ा. ४७।४३

१।१९।१७

| | श. | रा. | के. |
|---|---|---|---|
| ० | २ | २ | ८ |
| | १९ | २० | २७ |
| | ४८ | ४० | ४० |
| | ३२ | २० | २० |
| | ७ | ३ | ३ |
| ५८ | | ११ | ११ |

२ १ रा १२ ११ १०

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

